ओम्

33

# काशकृत्स्न-धातुव्याख्यानम्

श्रीचन्नवीरकविकृतकर्नाटकटीकायाः संस्कृतरूपान्तरम्

संस्कृतरूपान्तरकर्ता

युधिष्ठिरो मीमांसकः

( ग्रन्थोऽयं भारतीय-शासनद्वारा प्रदत्तेन साहाय्येन प्रकाशितः )


प्रकाशकः

संचालक–भारतीय–प्राच्यविद्या–प्रतिष्ठानम्

२१।१४४ अल्वरगेट, अजमेर

मुद्रकः

श्री पं० बालकृष्ण शास्त्री

ज्योतिष प्रकाश प्रेस, कालभैरवमार्ग, वाराणसी

प्रथमवार १०००

वि० सं० २०२२
शक सं० १८८७

मूल्यम् ६–२५

# भारतीय-प्राच्यविद्या-प्रतिष्ठान

## उद्देश्य

इस संस्था के उद्देश्य "भारतीय प्राचीन वाङ्मय का अन्वेषण, रक्षण और प्रचार है।

## कार्य-क्रम

उपर्युक्त उद्देशों की पूर्ति के लिए प्रतिष्ठान के कार्य-क्रम को निम्न विभागों में बाटा गया है—

१—भारतीय प्राचीन वाङ्मय का अनुसन्धान।

२—भारतीय प्राचीन वाङ्मय के अनुसन्धान द्वारा विभिन्न विषयों पर मौलिक ग्रन्थों तथा निबन्धों का लेखन और प्रकाशन।

३—भारतीय वाङ्मय के विविध विभागों के इतिहास तथा भारत के प्राचीन इतिहास सम्बन्धी ग्रन्थों का लेखन और प्रकाशन।

४—भारतीय प्राचीन वाङ्मय का शुद्ध सम्पादन तथा प्रकाशन।

५—भारतीय प्राचीन वाङ्मय का राष्ट्रभाषा ( हिन्दी ) में प्रामाणिक अनुवाद।

६—संस्कृत वाङ्मय तथा इतिहास सम्बन्धी गवेषणात्मक त्रैमासिक "पत्रिका" का प्रकाशन।

७—उपर्युक्त कार्य-क्रम की पूर्ति के लिए "वृहत् पुस्तकालय" का निर्माण।

८—प्राचीन वाङ्मय की रक्षा और प्रचार के लिए 'साङ्गवेद-विद्यालय' का संचालन।

९—उद्देश्यों की पूर्ति करने हारे विशिष्ट साहित्य के प्रचार के लिए 'विक्रय-विभाग' का संचालन।

विशेष विवरण के लिए "प्रतिष्ठान की योजना, कार्य-क्रम तथा कृतकार्य-विवरण" पुस्तिका विना मूल्य मंगवाइये।

प्राच्यविद्या—त्रैमासिक पत्रिका का प्रकाशन शीघ्र होगा

## भारतीय-प्राच्यविद्या-प्रतिष्ठान

[illegible]२ रेगरपुरा, गली ४० करोल बाग, नई दिल्ली—५

३१।१४४ अलवर गेट अजमेर

# काशकृत्स्न-व्याकरणम्

## आचार्यकाशकृत्स्नस्य तदीयस्य व्याकरणस्य चैतिह्यम्

यद्यपि भगवता पाणिनिना स्वकीये शब्दानुशासने काशकृत्स्न आचार्यो नैव स्मृतः, तथापि वैयाकरण-निकाये काशकृत्स्नस्य व्याकरण-प्रवक्तृत्वम् अत्यन्तं सुप्रसिद्धं वर्तते। शाब्दिकाचार्यकाशकृत्स्नस्य तदीयव्याकरणस्य च साक्षादुल्लेखो बहुषु ग्रन्थेषूपलभ्यते। तथाहि—

१—बोपदेवः (वि० सं० १३००—१३४०[1]) स्वकीये कविकल्पद्रुमाख्ये ग्रन्थे प्रसिद्धेष्वष्टसु शाब्दिकेष्वाचार्येषु काशकृत्स्नं नामग्राहं सस्मार। यथा—

इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः॥[2] इति।

२—पाणिनीयधातुपाठस्य व्याख्याता क्षीरस्वामी (सं० ११००) क्षीर-तरङ्गिण्याख्यायां धातुवृत्तौ काशकृत्स्नव्याकरणसंबन्धि मतमेकमुद्दधार—

काशकृत्स्ना अस्य निष्ठायामनिट्त्वमाहुः—आश्वस्तः, विश्वस्तः[3] इति।

३—धातुवृत्तिकारः सायणः कस्यचित् काश्यपनाम्नो वैयाकरणस्य ग्रन्थाद् 'आश्वस्त'शब्दविषयकं काशकृत्स्नीयं मतम् उद्धृतवान्—

आश्वस्तः-निष्ठायामिटं नेच्छन्ति काशकृत्स्ना इति स्वामिकाश्यपौ इति[4]।

४—महाभाष्य-व्याख्याता कैयटः (११०० वै० पूर्वभावी) प्रदीपाख्ये स्वीये व्याख्याने द्वयोः स्थानयोः काशकृत्स्नस्य सूत्रं सूत्रांशं वा निर्दिदेश—

(क) काशकृत्स्नस्य 'प्रत्ययोत्तरपदयोः' सूत्रं विचारयति[5] इति।

(ख) आपिशलकाशकृत्स्नयोस्त्व् 'अग्रन्थे' इति वचनाद्[6] इति च।

---

१. अत्र सर्वत्र यः कालनिर्देशः कृतः, तदर्थम् आस्माकीनः 'संस्कृत व्याकरणशास्त्र का इतिहास' नामा ग्रन्थो द्रष्टव्यः।

२. कविकल्पद्रुम-ग्रन्थारम्भे।

३. क्षीरतरङ्गिणी २।६६, पृष्ठ १८५। तुलना कार्या—'चकारोऽनुक्तसमुच्चयार्थः—आश्वस्तः' इति काशिका ७।२।१६॥

४. धातुवृत्ति पृष्ठ २६४॥

५. महाभाष्यप्रदीप २।१।५०॥

६. महाभाष्यप्रदीप ५।१।२५॥

५—वेदविदामलङ्कारभूतः पदवाक्यप्रमाणज्ञो भर्तृहरिः (४५० वै० पूर्वभावी) वाक्यपदीयस्यागमकाण्डस्य स्वोपज्ञे विवरणे सूत्रद्वयं निर्दिष्टवान्—

(क) धातुः साधने दिशि पुरुषे चिति तदाख्यातम्[१] इति।

(ख) लिङ्गं किमिति विभक्तौ एतन्नाम[२] इति च।

आगमकाण्डस्य भर्तृहरिकृतस्य विवरणस्य व्याख्याता वृषभदेवः पूर्वनिर्दिष्टे सूत्रे काशकृत्स्नीये इति प्रतिपादयामास—

धातुरिति काशकृत्स्नानां सूत्रम्·····लिङ्गमिति···[३] इति।

६—तत्र भवान् भर्तृहरिः प्रकीर्णकाण्डे पुनर्लिलेख—

तदर्हमिति नारब्धं सूत्रं व्याकरणान्तरे[४] इति।

एतस्य कारिकांशस्य व्याख्यां कुर्वन् हेलाराज आह—

आपिशलाः काशकृत्स्नाश्च सूत्रमेतन्नाधीयते[५] इति।

७—प्रमाणभूत आचार्यो भगवान् पतञ्जलिः (विक्रमात् २००० पूर्ववर्ती) महाभाष्यस्य परपशाह्निके आपिशलपाणिनीयव्याकरणाभ्यां सहैव काशकृत्स्नं व्याकरणमपि नामग्राहपूर्वकं सस्मार—

प्रोक्तादयश्च तद्धिता नोत्पद्यन्ते—पाणिनिना प्रोक्तं पाणिनीयम्, आपिशलम्, काशकृत्स्नम्। नहि पाणिनिना शब्दाः प्रोक्ताः। किं तर्हि? सूत्रम्[६] इति।

८—नाट्याचार्याणाम् आद्यस्तत्र भवान् भरतमुनिरपि प्रातिपदिकसमानार्थिकां काशकृत्स्नीयां लिङ्गसंज्ञां स्वीये नाट्यशास्त्रे व्यवहृतवान्—

एकस्य बहूनां वा धातोर्लिङ्गस्य वा पदानाम्[७] इति।

एतस्य टीकायामभिनवगुप्तः काशकृत्स्नव्याकरणस्य संक्षिप्तरूपस्य कातन्त्रव्याकरणस्य धातुविभक्तिवर्जमर्थवल्लिङ्गम्[८] इत्यस्य लिङ्गसंज्ञाविधायकस्य सूत्रस्यैकदेशमुद्धरन् अर्थवल्लिङ्गमिति संज्ञायां सम्बन्धि व्युत्पन्नं यदि वा लिङ्गस्य सम्बन्धिन्यो विभक्तयः सुपः, धातोस्तिङः[९] इत्येवं व्याख्यातवान्।

---

१. आगमकाण्ड पृष्ठ ४० (लाहौर सं०)।
२. आगमकाण्ड पृष्ठ ४० (लाहौर सं०)। ३. आगमकाण्ड पृष्ठ ४१ लाहौर सं०।
४. वाक्यपदीय काण्ड ३, पृष्ठ ७१४, काशी सं०। ५. तत्रैव।
६. पस्पशाह्निकान्ते। ७. नाट्यशास्त्र १४।३४, बड़ोदा सं०।
८. कातन्त्र २।१।१॥ ९. नाट्यशास्त्र भाग २, पृष्ठ २३४, बड़ोदा सं०।

९—चन्नवीरकविकृतस्य कर्नाटकभाषानिबद्धस्य काशकृत्स्नधातुपाठव्याख्यानस्योपलम्भनात् काशकृत्स्नव्याकरणस्य सत्ता स्वत एव सिद्धाऽभूत्।

१०—काशकृत्स्नधातुपाठस्य कर्नाटकभाषामये व्याख्याने उपसपादशतं सूत्राणामुपलम्भात् काशकृत्स्नव्याकरणस्य स्वरूपज्ञानमपि सम्यक्तया समभवत्।

## काशकृत्स्नस्य परिचयः

नाम—काशिकायामस्त्येकमुदाहरणम्—'त्रिकं काशकृत्स्नम्'[1] इति। पाल्यकीर्तिना शाकटायनव्याकरणस्य स्वोपज्ञायाम् अमोघावृत्तौ 'त्रिकं काशकृत्स्नीयम्'[2] इत्येवमुदाहरणमुपन्यस्तम्। समानप्रकरणे पठितयोरुभयोरुदाहरणयोस्तुलनया निश्चितरूपेण शक्यते वक्तुम्, यदुभयत्र कस्यचिदेकस्यैव ग्रन्थस्य निर्देशो वर्तत इति। परन्तु काशकृत्स्नकाशकृत्स्नीय शब्दयोः श्रूयमाणाभ्याम् अण् छ प्रत्ययाभ्यां विज्ञायते यत् काशकृत्स्नमामा ग्रन्थः काशकृत्स्नि-प्रोक्तो वर्तते,[3] अपरः काशकृत्स्नीयनामा काशकृत्स्न-प्रोक्त इति[4]। तदेवं नामद्वैधे जायते विचारणा, यत् 'काशकृत्स्न-काशकृत्स्ना' इत्युभे अपि नाम्नी किमेकस्य व्यक्तेरुत द्वयोरिति।

नामद्वैधे विचारः—उभे अपि नाम्नी एकस्यैवाचार्यस्य वर्तेते इत्यास्माकीनं मतम्। तदुपपत्तिश्चेत्थं विज्ञेया—

---

१. काशिका ५।१।५८॥ २. अमोघावृत्ति ३।२।१६१॥

३. अत्राह न्यासकारः—आपिशलं काशकृत्स्नमिति—आपिशलिकाशकृत्स्निशब्दाभ्याम् 'इञश्च' (अष्टा॰ ४।२।११२) इत्यण् इति। न्यास ४।३।१०१॥ महाभाष्यकृता पतञ्जलिनापि 'काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी मीमांसा' इत्यसकृदुच्यते (४।१।१४, ९३॥४।३।१५५)। एतेनापि ज्ञायते यदिञन्तादणेव भवतीति। यत्तु भट्टोजिदीक्षितेन इञश्च (४।२।११२) इत्यत्र 'गोत्रमिह शास्त्रीयम्, न तु लौकिकम्, तेनेह न पाणिनीयम्' इति सिद्धान्तकौमुद्यां पाणिनिशब्दात् प्रोक्तार्थे वृद्धत्वाच्छ इत्युक्तं तच्चिन्त्यम्। पाणिनिशब्दादपि आपिशलिकाशकृत्स्निवत् इञश्चेत्यणेव भवति न तु छः। अणन्तात् पाणिन-शब्दात् वृद्धत्वाच्छो भवति। यच्च महाभाष्यकृता पस्पशाह्निके 'पाणिनिना प्रोक्तं पाणिनीयम्' इत्युक्तं तदर्थनिर्देशपरं न व्युत्पत्तिपरम्। यथा 'धर्मनियमः' इत्यत्र 'धर्माय नियमः' इति भाष्यकारवचनं न विग्रहपरम्, अपि त्वर्थनिदर्शनपरम्, चतुर्थीसमासे प्रकृतिविकृतिनियमस्योक्तत्वात्। अन्यथा 'काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी मीमांसा' इत्यत्रापि पाणिनीयवच्छेन भाव्यम्, न त्वणा, तस्मात् 'पाणिनिना प्रोक्तं पाणिनीयम्' इत्यर्थप्रदर्शनपरमेव, विग्रहस्तु पाणिनेन प्रोक्तं पाणिनीयमित्येव द्रष्टव्यः।

४. काशकृत्स्न-आपिशल-पाणिनशब्देभ्योऽणन्तेभ्यः प्रोक्तार्थे वृद्धत्वाच्छप्रत्यये काशकृत्स्नीयम्—आपिशलीयम्—पाणिनीयम् इति प्रयोगा उपपद्यन्ते।

(१) आचार्य आपिशलिना प्रोक्तो ग्रन्थोऽप्यापिशल-आपिलीयशब्दाभ्यां स्मर्यते। तद्यथा—

पाणिनिना प्रोक्तं पाणिनीयम्, आपिशलम्, काशकृत्स्नम्[१] इति।
अष्टका आपिशलपाणिनीयाः[२] इति।
शिक्षा आपिशलीयादिका[३] इति।
तथेत्यापिशलीयशिक्षादर्शनम्[४] इति।
तथा चापिशलीयः श्लोकः—आगमो......[५] इति।
आपिशलीयं मतं तु—पादस्त्वर्थं......[६] इति।

अत्रापि 'आपिशल-आपिशलीय'शब्दयोर्विद्यमानाभ्यां तद्धितप्रत्ययाभ्यां विज्ञायते यद् आपिशलनाम्नो ग्रन्थस्य प्रवक्ता आपिशलिः, आपिशलीयनाम्नो ग्रन्थस्य प्रवक्ता आपिशल इति। न च क्वचित् साक्षाद् आपिशलनाम्न आचार्यस्य व्याकरणादिग्रन्थप्रवक्तृत्वं निर्दिश्यते। तस्मादत्रापि 'आपिशलि—आपिशल' इत्युभे अपि नाम्नी एकस्य व्यक्तेरिति विज्ञायते।

(२) भगवतः पाणिनेः पाणिन—पाणिनी इत्युभे अपि अण्—इञ्-प्रत्ययान्ते नाम्नी सुप्रसिद्धे स्तः। उभयथा च तदीयं व्याकरणं स्मर्यते वैयाकरणैः। तथाहि—

पाणिनोपज्ञमकालकं व्याकरणम्[७] इति।
पाणिन्युपज्ञमकालकं व्याकरणम्[८] इति।

कोशकारा अपि सूत्रकारस्य तत्र भवतः पाणिनेः पाणिन—इत्यकारान्तमपि नाम इति विस्पष्टमाहुः—

पाणिनिस्त्वाहिको दाक्षिपुत्रः शालङ्किपाणिनौ[९] इति।

अत्र पूर्वमिकारान्तः पाणिनिशब्दः स्मृतः, उत्तरत्र पाणिन इत्यकारान्तः। सत्येवं, यथा पाणिनेर्भगवतः 'पाणिन—पाणिनि' इत्युभे अपि अण्-इञ् प्रत्ययान्ते नाम्नी तथैव 'काशकृत्स्न-काशकृत्स्नि' इत्युभे अपि अण्-इञ् प्रत्ययान्ते एकस्या एव व्यक्तेर्नाम्नी इत्यत्र नास्ति विवादावसरः।

---

१. महाभाष्य-पस्पशाह्निकान्ते।
२. शाकटायन-अमोघावृत्ति ३।२।१६१॥, चिन्तामणिवृत्ति २।४।१८२॥
३. काव्यमीमांसा, पृष्ठ ३, बड़ोदा संस्क०।
४. वाक्यपदीय काण्ड १, वृषभदेवटीका, पृष्ठ १०५।
५. कातन्त्र दुर्गवृत्ति, पृष्ठ ४७९। ६. कातन्त्र दुर्गवृत्ति पृष्ठ ४९१।
७. काशिका ६।२।१४॥ चान्द्रवृत्ति २।२।६८॥ तुलना कार्या—पाणिनो भक्तिरस्य पाणिनीयः। काशिका ४।३।८९॥
८. काशिका २।४।२१॥ ९. त्रिकाण्डशेष कोश।

**वैयाकरण-नियम-विचारः**—सत्यप्येवं 'काशकृत्स्नस्यापत्यम्' इत्यर्थे अत इञ् (अष्टा० ४।१।९५) इति नियमेन इञा भाव्यम्, न त्वणा । सत्यमेतत् परन्तु क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते[1] इति नियमेन काशकृत्स्नस्यापत्यमित्यर्थे औत्सर्गिको ऽण्प्रत्ययोऽपि भवति । अत एव दाशरथि-प्रयोगस्थाने तत्र भवताऽऽद्यकविना वाल्मीकिना प्रदीयतां दाशरथाय मैथिलिः[2] इत्यत्र अणन्तो दाशरथशब्दोऽपि प्रयुक्तः । एवमेव अपिशलस्यापत्यमित्यर्थे अत इञ् ( अष्टा० ४।१।९५ ) इति नियमेन आपिशलि-शब्दो भवति, औत्सर्गिकेनाऽणा आपिशल इत्यपि[3] ।

**काशकृत्स्नेरन्यत्रोल्लेखः**—काशकृत्स्नेराचार्यस्य प्राचीने वाङ्मये बहुत्रोल्लेखो दृश्यते । तथा—

( १ ) महाभाष्यस्य पूर्वोद्धृते पाणिनिना प्रोक्तं पाणिनीयम्, आपिशलम्, काशकृत्स्नम् इति वचने काशकृत्स्नमिति पदं काशकृत्स्नि-प्रकृतेरेव निष्पद्यत इति पुरस्ताद् उक्तम् (पृष्ठ ३, टि० ३) । तेनाऽत्रापरोक्षरूपेण काशकृत्स्निराचार्यः स्मर्यत इत्युक्तं भवति ।

( २ ) महाभाष्ये पतञ्जलिना काशकृत्स्निना प्रोक्ता मीमांसा बहुत्र निर्दिश्यते ।[4]

( ३ ) महाकविर्भासोऽपि यज्ञफलनाटके काशकृत्स्निप्रोक्तां मीमांसां स्मरति ।[5]

( ४ ) श्रौतसूत्रकारः कात्यायनः सद्यस्त्वं काशकृत्स्निः[6] इति सूत्रे काशकृत्स्निमुद्धरति ।

---

१. सीरदेवीय परिभाषावृत्ति संख्या ३३, परिभाषेन्दुशेखर संख्या ५९ । अयमेव नियमः स्कन्दस्वामिना 'अपवादविषयेऽपि क्वचिदुत्सर्गो दृश्यते' इत्येवमुद्धृतः । द्र० निरुक्त टीका भाग २, पृष्ठ ८२ ।

२. रामा० युद्ध० १४।३॥ काशिकाकारो जयादित्यः 'शेषविवक्षायां तस्येदम् ( अष्टा० ४।३।१२० ) इत्यण्' इत्युक्तवान् ( काशिका ४।२।९२ ), तच्चिन्त्यम् ।

३. सत्यप्यवाद औत्सर्गिकनियमप्रवृत्तिर्बहुत्र दृश्यते । यथा—अध्येतृवेदितृविषये निरुक्तशब्दस्य उक्थादिषु ( गण ४।२।६० ) पाठात् ठकि 'नैरुक्तिक' शब्दः साधुः, परन्तु औत्सर्गिकेऽणि नैरुक्त इत्यपि प्रयुज्यते । नैतावदेव, नैरुक्तिकशब्दस्य प्रयोगस्तु क्वाचित्क एव, नैरुक्त इत्येव प्रायेण प्रयुज्यमान उपलभ्यते ।

४. काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी । महा० ४।१।१४,९३॥ ४।३।१५५॥

५. काशकृत्स्नं मीमांसाशास्त्रम् । अङ्क ४, पृष्ठ ११६ । यज्ञफलनाटकं न भासीयमित्यनेके संगिरन्ते । नाटकस्यान्तरङ्गपरीक्षया तदीयान्यनाटकैस्तुलनया च भासीयमेवेदं नाटकमित्यत्र न कश्चिदपि विवादावसरः ।   ६. का० श्रौ० ४।३।१७॥

काशकृत्स्नस्यान्यत्र निर्देशः—काशकृत्स्नाचार्यस्यापि बहुधा प्राचीने वाङ्मये निर्देश उपलभ्यते। तद्यथा—

(१) वोपदेवस्य पुरस्तान्निर्दिष्टे श्लोकेऽष्टसु शाब्दिकेषु काशकृत्स्नो नामग्राहं स्मर्यते।[1]

(२) शाकटायन-व्याकरणस्यामोघायां वृत्तौ त्रिकं काशकृत्स्नीयम्[2] इत्युदाहरणे काशकृत्स्नाचार्यो परोक्षरूपेण स्मर्यते। काशकृत्स्नीयं पदं काशकृत्स्नाद् अणन्तादेवोपपद्यत इत्युक्तं पुरस्तात्[3]।

(३) भट्टपराशरः स्वीये तत्त्वरत्नाकरनाम्नि ग्रन्थे 'संकर्षकाण्डं काशकृत्स्नप्रोक्तम्' इत्याह।[4]

(४) तैत्तिरीयसंहिताया भाष्यकारो भट्टभास्कर रुद्राध्यायभाष्ये काशकृत्स्नाचार्यस्य यजुःसंबन्ध्येकं मतमुद्धृतवान्।[5]

(५) बौधायनगृह्यसूत्र एकत्र काशकृत्स्नस्योल्लेखो दृश्यते।[6]

(६) वेदान्तसूत्रेष्वपि काशकृत्स्नस्यैकं मतं स्मर्यते।[7]

काशकृत्स्नि-काशकृत्स्न इत्युभे अपि नाम्नी एकस्यैवाचार्यस्येत्युक्तं पुरस्तात्। तस्माद् विविधेषु ग्रन्थेषु काशकृत्स्नि-काशकृत्स्ननामभ्यां स्मृत एक एवाचार्य इत्यत्र नास्ति कश्चिद् विवादावसरः।

वंशः—बौधायनश्रौतसूत्रे प्रवराध्याये (३) श्रूयते—

भृगूणामेवादितो व्याख्यास्यामः…………पैङ्गलायना वैहीनरयः काशकृत्स्नाः पाणिनिवाल्मीकि………आपिशलयः इति।

एतेन काशकृत्स्नाचार्यो भार्गव इति स्पष्टमेव।

---

१. इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः।
पाणिन्यमरजैनेन्द्राः जयन्त्यष्टादि-शाब्दिकाः॥

२. अमोघावृत्ति ३।२।१६१॥ ३. द्र० पूर्वत्र पृष्ठ ३, टि० ३।

४. तत्त्वरत्नाकराख्ये भट्टपराशरग्रन्थे संकर्षाख्यश्चतुर्लक्षणात्मको मध्यकाण्डः काशकृत्स्नकृत इत्युच्यते। अधिकरणसारावली-प्रकाशिकाग्रन्थ उद्धृतोऽयं पाठः। द्र० मद्रास राजकीय हस्तलेखसंग्रह-सूची, भाग १, खण्ड १ बी, सं० ३५५०, पृष्ठ ५२८१॥

५. अष्टौ अनुवाका, अष्टौ यजूंषि इति काशकृत्स्नः। आनन्दाश्रम पूना सं० पृष्ठ २६॥

६. आघारं प्रकृतिं प्राह दर्विहोमस्य बादरिः।
अग्निहोत्रं तथाऽऽत्रेयः काशकृत्स्नस्त्वपूर्वताम्॥

७. अवस्थितेरिति काशकृत्स्नः। वेदान्त १।४।२२॥

पितृनाम—काशकृत्स्नि-काशकृत्स्ननाम्नोः श्रूयमाणाभ्यां तद्धितप्रत्ययाभ्यां मूल प्रकृतिः कशकृत्स्न इति विज्ञायते। वर्धमानो गणरत्नमहोदधौ कशकृत्स्नशब्दस्य व्युत्पत्तिमेवं निदर्शयाञ्चकार—

कशाभिः कृन्तन्ति 'कृते वस्ने ङ्याट्त्वे च ह्रस्वश्च बहुलम्'[3] इत्यनेन ह्रस्वत्वे कशकृत्स्नः[4] इति।

आचार्यनाम—तत्त्वरत्नाकरग्रन्थे भट्टपराशरः 'काशकृत्स्नो बादरायणस्य शिष्यः' इत्याह। बादरायण इति कृष्णद्वैपायनस्यैवाख्येति भारतीया ऐतिहासिकाः संगिरन्ते।

शिष्याः—काशकृत्स्नेन स्वप्रोक्ता ग्रन्था बहुभ्यः शिष्येभ्यः प्रतिपादिता इत्यत्र नास्ति कश्चिच्छङ्कावसरः। तथाऽपि नैकस्यापि कस्यचिच्छिष्यस्य नामेदानीं विज्ञायते। काशिकावृत्तौ तु पूर्वकाशकृत्स्नाः अपरकाशकृत्स्नाः इत्युदाहरणद्वयस्य-दर्शनात्[5] तदीयाः शिष्या द्वयोर्विभागयोर्विभक्ता आसन् इति प्रतीयते। परन्त्वत्र उभयविभागयोः का सीमा, यां मर्यादीकृत्य ते विभागद्वये विभक्ता इत्यपि न विज्ञायते।

एतादृशमेव विभागद्वयं पाणिनिशिष्याणाम् आपिशलिशिष्याणां च यत्र तत्र स्मर्यते।[6] तत्रापि तयोर्विभक्त्री मर्यादा नैव विज्ञायते।

देशः—भगवान् काशकृत्स्नः कं देशं स्वजनुषाऽलंचकार क्व वाऽस्य निवासोऽभूत् इत्यत्र मौनमेवास्त ऐतिह्यम्। आचार्यः पाणिनिर् 'अरीहणादिगणे' (४।२।८०) काशकृत्स्नशब्दं पठति। वर्धमानस्तत्रैव कशकृत्स्नशब्दं निर्दिशति[7]। तदनुसारं काशकृत्स्नेन कशकृत्स्नेन वा निर्मितः, तस्य वा यत्र निवासः, स ग्रामो जनपदो वा काशकृत्स्नः कशकृत्स्नो वा प्रथित आसीत्[8], परन्तु तस्य स्थितिः क्वासीदिति न ज्ञायते।

काशकृत्स्नस्यौदीच्यता—दैवग्रन्थस्य व्याख्याता कृष्णलीलाशुकमुनिः (सं० १३०० वि०) पुरुषकारवार्तिके लिखति—

---

४. कस्य व्याकरणस्यैतत्सूत्रमिति न जानीमो वयम्।

५. गणरत्नमहोदधि पृष्ठ २४। ५. काशिका ६।२।१०४॥

६. पाणिनिशिष्याणाम्, काशिका ६।२।१०४॥

७. वासुदेवशरणाग्रवालः 'काशकृत्स्न' शब्द साधु मन्यते। द्र. पाणिनिकालीन-भारतवर्ष, पृष्ठ ४८८। अस्मन्मतेऽपि काशकृत्स्नशब्द एव साधुः।

८. तुलना कार्या—'कुकर्णपर्णाद् भारद्वाजे' इत्यत्र काशिकावृत्तिः—'भारद्वाज-शब्दोऽपि देशवचन एव न गोत्रशब्दः' इति (४।२।१४५)।

धनपालस्तु तमेव प्रस्तुत्याह—वनुं घटादिषु पठन्ति द्रमिडाः। तेषां (नित्यं) मित्संज्ञा। आर्यास्तु विभाषा मित्त्वमिच्छन्ति। तेषां वानयति, वनयति[1]।

काशकृत्स्नः 'ग्लास्नुवनुवमश्वनकम्यमिचमः'[2] इति सूत्रं पठन् वनधातो-विभाषा मानुबन्धत्वं (=मित्त्वं) शास्ति। टीकाकारश्चन्नवीरकविरपि तथैव व्याख्यन् वानयति वनयति इति रूपद्वयं प्रदर्शयति।[3]

एतेनानुमीयते यत्काशकृत्स्नः कदाचिदुत्तरभारतीयः स्यात्।

कालः—अस्मन्मित्रं कीर्तिमात्रशेषः क्षितीशचन्द्रचट्टोपाध्यायो मन्यते यत् 'काशकृत्स्नः पाणिनेरौत्तरकालिकः[4]' इति। परन्तु तेन महानुभावेनैतस्मिन् विषये न किमप्यैतिहासिकं प्रमाणमुपन्यस्तम्।

पाणिनेः पूर्ववर्ती—काशकृत्स्नाचार्यः पाणिनेः पौर्वकालिक इत्यत्र सन्ति बहूनि प्रमाणानि। तत्र कानिचित् प्रस्तूयन्ते—

(१) पाणिनिः स्वीये गणपाठे उपकादिगणे (२।४।६९) काशकृत्स्न-शब्दम्, अरीहणादिगणे (४।२।८०) च काशकृत्स्नशब्दं च पठति।

(२) वेदान्तसूत्राणि निश्चयेन पाणिनितः पौर्वकालिकानि। अतस्तत्र स्मृतः[5] काशकृत्स्नाचार्यः कृष्णद्वैपायनस्य समकालिकः पौर्वकालिको वा भवितु-मर्हति नौत्तरकालिकः।

(३) तत्त्वरत्नाकरस्य रचयितुर्भट्टपराशरस्य मतानुसारं काशकृत्स्नस्तत्र भवतो बादरायणस्य = कृष्णद्वैपायनस्य शिष्य एव।

(४) महाभाष्ये पस्पशाह्निके त्रीणि व्याकरणानि स्मर्यन्ते—पाणिनिना प्रोक्तं पाणिनीयम्, आपिशलम्, काशकृत्स्नम् इति। तत्र पाणिनीयस्य पश्चात् स्मृतमापिशलं पाणिनेः प्राक्कालिकम् इति निर्विवादम्। एवम् आपि-शलादुत्तरं स्मृतं काशकृत्स्नमप्यापिशलेः प्राक्कालिकं स्यात्। सत्येवं काशकृत्स्ना-चार्यः पाणिनेस्त्रिशतवर्षप्राक्कालिकः सम्भवति।

(५) कतिपयवर्षेभ्यः प्राक् काशकृत्स्नीयो धातुपाठः चन्नवीरकविकृत-कर्नाटकभाषाव्याख्यानेन सह प्रकाशं गतः। तत्र सार्धचतुःशतधातवोऽधिकाः

१. दैव पुरुषकारवार्तिकोपेत, पृष्ठ ८३ अस्मत्सं०। २. काशकृत्स्न-धातुपाठ १।६२४॥

३. काशकृत्स्न धातुपाठ कन्नडटीका, पृष्ठ १४३।

४. टैक्निकल टर्म्स आफ संस्कृत ग्रामर, पृष्ठ २७७।

५. अवस्थितेरिति काशकृत्स्नः। १।४।२२।

पठ्यन्ते पाणिनीयाद् धातुपाठात्। भारतीयग्रन्थप्रवचनस्य यथा परम्परा दृश्यते तथा ग्रन्थानामुत्तरोत्तरप्रवचने संक्षेप एवाभूदिति विज्ञायते। व्याकरणवाङ्मयेऽपि यानि शब्दानुशासनानि सम्प्रत्युपलभ्यन्ते तेषामनुशीलनेनास्य सिद्धान्तस्य सत्यत्वं करामलकवद् विस्पष्टीभवति। सत्येवं काशकृत्स्नधातुपाठे सार्धचतुःशतधातूनामाधिक्यं तस्य पाणिनीयाद् धातुपाठात् प्राक्कालिकत्वं द्योतयति।

(६) काशकृत्स्नधातुपाठे बहूनां धातूनां रूपद्वयं निर्दिश्यते। यथा—ईड ईल स्तुतौ (२।४१), प्रथ पृथु (१।५८३; ६६८), इज यज (१।४२५; ६९९)। पाणिनिरेतेषाम् ईड प्रथ यज इति रूपाण्येव पठति। तत्र इडा इला इति द्विविधरूपसिद्धये डलयोरेकत्वं प्रतिजानते वैयाकरणाः; पृथुः, पृथक्, इष्टः, इष्टवान् आदिरूपसिद्धये च संप्रसारणं विदधति। एतेन विज्ञायते यद् आचार्यकाशकृत्स्नस्य काले ईड ईल, प्रथ पृथ, इज यज इत्यादीनां द्विविधानां धातूनाम् आख्यातादिषु स्वतन्त्राणि द्विविधानि रूपाणि लोके प्रचलितान्यासन्। अत एव काशकृत्स्नेन द्वयोर्द्वयोर्धात्वोः पार्थक्येन निर्देशोऽकारि। पाणिनिना-स्वकाले चैकविधानां रूपाणां प्रायेण लोपाद् अपरविधानामेव च रूपाणामाधिक्येन दर्शनात् तादृग्रूपा एव धातवः स्वीये धातुपाठे पठिताः। एवं च काशकृत्स्नस्य कालः पाणिनेः प्राचीन इति स्पष्टमेव।

(७) काशकृत्स्नस्य धातुपाठे बहवस्तादृशा धातवः सन्ति ये तत्रोभयतोभाषाः पठ्यन्ते। यथा—वस निवासे (१।७०५) वद व्यक्तायां वाचि (१।७०६) टुओश्वि गतिवृद्ध्योः (१।७०७) इत्येवमादयः। चन्नवीरकविश्चैतेषां परस्मैपदात्मनेपदयोरुभयो रूपाणि प्रदर्शयति। पाणिनिस्त्वेतान् परस्मैभाषात्वेनैव प्रतिजानीते। एतेन प्रतीयते यत् काशकृत्स्नस्य काले वसादीनां परस्मैपदात्मनेपदयोरुभयो रूपाणि लोके प्राचलन्। पाणिनिकाले त्वेषामात्मनेपदरूपाणि लोके प्रणष्टानि। अतः स परस्मैपदीनेव पपाठ। तत्र वदधातोः केषुचिद् विशिष्टविषयेषु आत्मनेपदरूपाणि लोके विद्यमानान्यासन्, अतः तेषां साधुत्वद्योतनाय स भासनोपसंभाषा इत्यादि सूत्रैरात्मनेपदं[१] व्यदधात्। अनेनापि काशकृत्स्नाचार्यस्य पाणिनेः प्राक्कालिकत्वं विस्पष्टंभवति।

(८) शताच्च ठन्यतावशते[२] इति पाणिनीयसूत्रस्य भाष्यप्रदीपे कैयटो लिलेख—आपिशलकाशकृत्स्नयोस्त्वग्रन्थ इति वचनात्……।

एतेन काशकृत्स्नसूत्रस्यैकदेशोद्धरणेन विज्ञायते यद् आपिशलकाशकृत्स्नयो-

१. अष्टा० १।३।४७-५०॥                    २ अष्टा० ५।१।२१॥

शब्दानुशासनयोः 'शताच्च ठन्यतावशन्थे' इति सूत्रपाठ आसीत् । आपिशलिः पाणिनेः प्राचीन एव, अतस्तेन सह स्मृतः काशकृत्स्नोऽपि पाणिनेः प्राचीन एव भवितुमर्हति, नार्वाक्कालिकः ।

( ९ ) तत्र भवतो भर्तृहरेः तदर्हमिति नारब्धं सूत्रं व्याकरणान्तरे[1] इति कारिकां व्याचक्षाणो हेलाराज आह—

आपिशलाः काशकृत्स्नाश्च सूत्रमेतन्नाधीयते इति ।[1]

एतेनावसीयते यद् आपिशलकाशकृत्स्नयोर्व्याकरणयोः तदर्हम्[2] इति सूत्रम्, एतदर्थकं वा किञ्चित् सूत्रान्तरं नासीत् । तयोः शब्दानुशासनयोस्तादृक् सूत्रस्याभावं दृष्ट्वैव महाभाष्यकारेण पतञ्जलिना पाणिनीयस्य तदर्हम् इति सूत्रस्यावश्यकता महता प्रयत्नेन निदर्शिता । यदि नाम काशकृत्स्नः पाणिनेरौत्तरकालिकोऽभविष्यच्चेत् स पाणिनेरनुसरणमकरिष्यत्तत्रापिशलेः ।

(१०) कातन्त्रव्याकरणे ऽस्त्येकं विशिष्टं सूत्रम्—भिस् एस् वा[3] इति । एतेन अकारान्तशब्देभ्य उत्तरस्य तृतीयाबहुवचनस्य भिसः स्थाने ऐस् आदेशो विकल्पेन विधीयते ।[4] पाणिनीयतन्त्रानुसारं लोके केवलमैस्-आदेशस्यैव देवैः कर्णैः इत्यादीनि रूपाणि साधूनि । कातन्त्रव्याकरणं विशुद्धरूपेण लौकिकानामेव शब्दानामनुशासनं विदधाति ।[5] अतस्तस्मिन् ऐस्भावस्य विकल्पविधानं नाञ्जसा संगच्छते । यदि नाम कातन्त्रं कस्यचिदतिप्राचीनस्य महत्तन्त्रस्य संक्षेपः स्यात्तर्हि तत्र केषांचित् प्राचीननियमानां दर्शनमुपकल्पते । कातन्त्रं काशकृत्स्नतन्त्रस्य संक्षिप्तं संस्करणमित्युपरिष्टात् सप्रमाणं वक्ष्यते । तथा सति काशकृत्स्नं तन्त्रं पाणिनीयात् तन्त्रात् तावत् प्राचीनं स्याद्, यस्मिन् काले लोकभाषायामपि देवेभिः कर्णेभिः इत्यादीनि भिसन्तान्यपि रूपाणि प्राचलन्निति ।

(११) पाणिनीये धातुपाठे जुहोत्यादिगणे च छन्दसि इत्येवं निर्दिश्य कतिपये धातवः पठिताः । त एव काशकृत्स्ने धातुपाठे 'छन्दसि' निर्देशं विनैवाधीताः । एतेन प्रतीयते यत्पाणिनिकाले छान्दसत्वेनाभिमतानां धातूनां लोके प्रचारो नासीत्, काशकृत्स्नकाले ते लोकेऽपि प्रयुक्ता अभूवन् । अत एव काश-

---

१. वाक्यपदीय काण्ड ३, पृष्ठ ७१४ काशी सं० ।  २. अष्टा० ५।१।११७॥

३. कातन्त्र २।१।१८॥

४. टीकाकारैः सूत्रमिदमन्यथा व्याख्यातम् । अत्र 'सं० व्या० शास्त्र का इतिहास' नाम्नो ग्रन्थस्य भा० १, पृ० ३५ ( द्वि० सं० ) द्रष्टव्यम् ।

५. शर्ववर्मणस्तु वचनाद् भाषायामप्यवसीयते । नह्ययं ( कातन्त्रकारः ) छान्दसान् शब्दान् व्युत्पादयति । कातन्त्रवृत्ति परिशिष्ट, पृ० ५३० ।

कृत्स्नः पाणिनिवत् 'छन्दसि' सूत्रं न निरदिक्षत् । अनेन हेतुनाऽपि काशकृत्स्नस्य पाणिनेः पौर्वकालिकत्वं व्यक्तम् ।

एतैरेकादशभिर्हेतुभिर्विस्पष्टं भवति यत् काशकृत्स्नाचार्यो निश्चयेनैव भगवतः पाणिनेः प्राचीनः । वयं तु पश्यामो न केवलं पाणिनेरेव, अपि त्वापिशलेरपि प्राचीन इति ।

पाश्चात्यास्तदनुयायिनोः कतिपये भारतीयाश्चैतिह्यविदः 'पाणिनिः विक्रमात् प्राय उपपञ्चशतीपूर्वः' इति संगिरन्ते । एतन्मतं सर्वथाऽविश्वसीयं वर्तते । भारतीयैतिह्यस्य अविच्छिन्नया परम्परया पाणिनेः कालो विक्रमाद् एकोनत्रिंशच्छतीपूर्वं निश्चीयते ।[1] तदनुसारम् आचार्यः काशकृत्स्नो भारतयुद्धसमकालिकस्ततोऽपि वा प्राक्कालिक इति विज्ञेयम् ।

काशकृत्स्नस्य पाणिनेः पौर्वकालिकत्वे सम्भवत्येकं बाधकं प्रमाणम् । तच्चेदम्—काशिकावृत्तौ आपिशलपाणिनीयाः पाणिनीयरौढीयाः रौढीयकाशकृत्स्नाः इत्युदाहरणान्युपलभ्यन्ते । तत्र आपिशलेः परवर्ती पाणिनिरिति सर्वसम्मतो राद्धान्तः । तथैव उत्तरयोरुदाहरणयोरपि पाणिनेरुत्तरवर्ती रौढिः, रौढेश्चोत्तरवर्ती काशकृत्स्न इत्यभिप्राय एतैरुदाहरणैः शक्यते विज्ञातुम् । परन्त्वियं कल्पना ऐतिह्येन बाध्यते । आचार्यरौढेरपि पाणिनेः पूर्वकालताऽस्माभिः स्वीये व्याकरणशास्त्रेतिहासे प्रमाणीकृता ।[2] काशकृत्स्नस्य पाणिनेः पौर्वकालिकत्वं विस्तरेणैव प्रतिपादितम् । एतज्जानन्नेव वर्धमानाचार्यः पाणिनीयरौढीयाः रौढीयपाणिनीयाः इत्युभयथा पठति ।[3] तेन ज्ञायते काशिकोदाहरणेषु न कालस्य पौर्वापर्यमभिप्रेतमिति ।

## काशकृत्स्न-व्याकरणस्य परिचयः

नाम—कतिपयवर्षेभ्यः प्राक् यः काशकृत्स्नधातुपाठश्चन्नवीरकविकृतया कर्नाटकभाषाटीकया सह प्राकाश्यं गतः, तस्य नाम काशकृत्स्नशब्दकलापधातुपाठ इति वर्तते । अस्मिन्नाम्नि शब्दकलाप इति शब्दो धातुपाठस्य विशेषणम्, उत काशकृत्स्नशब्दानुशासनस्य नामेति सन्दिग्धं वर्तते, उभयथाऽपि सम्भवात् । 'शब्दानां प्रकृत्यात्मिकां कलां पाति रक्षति' इति व्युत्पत्त्या

१. एतद्विषयेऽस्माभिः स्वीये 'संस्कृत व्याकरण शास्त्र का इतिहास' नाम्नि ग्रन्थे विस्तरेणोपपादितम् । द्र०—भाग १, पृष्ठ १८५–१९८ द्वि० सं० ।

२. द्र० सं० व्या० शास्त्र का इतिहास भाग १, पृष्ठ १२७–१२८ द्वि० सं० ।

३. गणरत्नमहोदधि, पृष्ठ ६९ ।

धातुपाठस्य विशेषणं सम्भवति। वयं तु पश्यामः, 'शब्दकलाप' इति काशकृत्स्न-शब्दानुशासनस्य नाम। तत्रायं हेतुः—

कातन्त्रव्याकरणस्यापरं नाम कलापकं[1] श्रूयते। कलापकनाम्नि अल्पे ह्रस्वे वार्थे क-प्रत्ययो दृश्यते[2]। तेन प्रतीयते कातन्त्रव्याकरणं यस्य लघुसंस्करणं, तस्य मूलभूतं नाम कलाप इत्यासीत्। कातन्त्रशब्दस्याप्यर्थो लघुतन्त्रमेव। तत्रापीषदर्थे कोः कादेशो भवति[3]—ईषत्तन्त्रं कातन्त्रमिति। तदेवं कातन्त्रशब्दक-लापकशब्दश्चोभावेकार्थौ। तत्र कातन्त्रं कलापकं वा शब्दानुशासनं काशकृत्स्न-स्यैव महातन्त्रस्य[4] संक्षेप इत्युपरिष्टात् सप्रमाणं प्रदर्शयिष्यते। अतः 'कलाप' इति काशकृत्स्नतन्त्रस्य नामेति विज्ञायते। कलापशब्दश्च समूहार्थेऽपि प्रयुज्यते। यथा— क्रियाकलापैरिदमेव योगिनः, श्रद्धान्विताः साधु यजन्ति सिद्धये[5] इति। तथा सति शब्दानां कलापः समूहो यस्मिन् स शब्दकलापः। यद्यपि सर्वेष्वेव शब्दानुशासनेषु शब्दा व्युत्पाद्यन्ते, किं शब्दकलाप इति विशिष्टनाम्नः प्रयोजनम्। उच्यते, सर्वेष्वपि शब्दानुशासनेषु शब्दसमूहस्यैव व्युत्पादनेनात्र प्रकर्षगतिर्ज्ञेया, सा च आधिक्यरूपा। तेन शब्दकलापनाम्ना महातन्त्ररूपो[6]ऽर्थो ऽवगम्यते।

शब्दकलापस्यापरोऽर्थः—शब्दकलापस्यापरा व्युत्पत्तिरेषा संभवति—शब्दानां कलाः=अंशान् पाति रक्षति इति शब्दकलापः। अनया व्युत्पत्त्या स्वयं काशकृत्स्नतन्त्रमपि कस्यचिन्महातन्त्रस्य संक्षिप्तं प्रवचनमिति गम्यते[7]। महातन्त्रं लघुतन्त्रं चैतौ सापेक्षौ शब्दौ। तत्र यस्यापेक्षया यल्लघुतन्त्रम्

---

१. सम्प्रति बहवः कातन्त्रं 'कलाप'नाम्ना व्यवहरन्ति, तच्चिन्त्यम्। एतच्चाग्रे व्यक्तं भविष्यति।

२. अष्टा० ५।३।८५, ८६॥ दशपादीवृत्तिकारः कलाशब्दोपपदे आङ्पूर्वात् पा पाने इत्यस्मात् क्वुन् (=अक) प्रत्यय इति मन्यते। द्र० दशपाद्युणादि ३।५, पृ० १३०। हेमचन्द्रोऽपि धातुपारायणे (पृष्ठ ६) उणादिवृत्तौ (पृष्ठ १०) च दशपादीवृत्तिकार-मेवानुससार।

३. कातन्त्रम्=ईषत्तन्त्रम्=लघुतन्त्रम्। ईषदर्थे (अ० ६।३।१०५) इति कोः का-देशः। लघुतन्त्रत्वादेव कौमार (=कुमाराणामिदम्) इति नाम्ना व्यवह्रियते।

४. अत्र एतत्पृष्ठस्यैव षष्ठी टिप्पणी द्रष्टव्या।

५. शब्दकल्पद्रुमकोषे कलापशब्दार्थविवरण उद्धृतः श्लोकः।

६. वटोदर (वडोदा) नगरात् प्रकाश्यमाणायां गायकवाड-संस्कृत-ग्रन्थमालायाम् एको बालिद्वीपीय-ग्रन्थसंग्रह प्रकाशितः। तत्र कारकसंग्रहान्ते 'कातन्त्रं च महातन्त्रं दृष्ट्वा [illegible] उवाच' इति श्लोकः पठ्यते (पाठोऽत्राशुद्धोऽस्ति)। अत्र कातन्त्रेण सह-स्मर्यमाणं महातन्त्रं कस्यचिच्छब्दानुशासनस्य नामेति विज्ञायते। तच्च काशकृत्स्नतन्त्रमेव।

७. भारतीयैतिह्येन करामलकवत् सिद्धमिदं यद् भारतीयैतिह्ये ग्रन्थानामुत्तरोत्तरप्रवचने

तस्यापेक्षयैव प्रथमं महातन्त्रम् । एवं च सति कातन्त्रमपेक्ष्य काशकृत्स्नं महातन्त्रम्, परन्तु तदेव कश्चित् पूर्वतनं महातन्त्रमपेक्ष्य लघुतन्त्रमपि शक्यते वक्तुम्, महातन्त्रलघुतन्त्रशब्दयोः सापेक्षत्वात् ।

अस्ति काशकृत्स्नतन्त्रस्य वैशिष्ट्यबोधकमेकमुदाहरणम्—काशकृत्स्नं गुरुलाघवमिति । उदाहरणमिदम् उपज्ञाते (अष्टा०४।३।११५) सूत्रस्य काशिकायां वृत्तौ प्रथमत उपलभ्यते[1] । तत्रोपज्ञातशब्दस्यार्थः 'विनोपदेशेन ज्ञातमुपज्ञातं स्वयमभिसंबद्धमित्यर्थः' इति जयादित्यो विवृतवान् । तथा सति काशकृत्स्न आचार्यः प्रथमं विनोपदेशेन स्व-तन्त्रप्रवचने गौरव-लाघवयोर्विचारं कृतवानिति अर्थात् शब्दोपदेशे गौरवं शब्दस्य प्रसिद्धिम्, लाघवम् अप्रसिद्धिं चोपलभ्य स्व-तन्त्रे अप्रसिद्धशब्दविषयकान् वचनान् परिहापयांचकार । अत एव तस्य व्याकरणं पूर्वेषां महातन्त्राणां कलाः पानाद्रक्षणात् कलापनाम्ना प्रसिद्धमभूत् ।

काशकृत्स्नधातुपाठस्य सम्पादकः श्री ए० एन्० नरसिमहया महोदयः स्वीयभूमिकायां शब्दकलापनामविषये केवलं 'काशकृत्स्न-शब्दकलाप धातुपाठ इति नाम दृष्ट्वा केचनास्य कलापव्याकरणेन सह सम्बन्धं[2] मन्यन्ते' इत्येवोक्त्वा विरराम ।

तन्त्र-परिमाणः—काशकृत्स्नव्याकरणे कत्यध्यायाः पादाः सूत्राणि चासन्नित्यस्य साक्षात् निदर्शकं किमपि वचनं नोपलभ्यते, परन्तु काशिकायाम् (५।१।५८) अमोघावृत्तौ (३।२।१६१) चोदाहृताभ्यां त्रिकं काशकृत्स्नम् त्रिकं काशकृत्स्नीयम् इत्याभ्यामुदाहरणाभ्यामेतावद् अवगम्यते, यत् काशकृत्स्नीये कस्मिंश्चित् सूत्रात्मके ग्रन्थे त्रयोऽध्याया आसन्निति । आभ्यामुदाहरणाभ्यां वयं त्वनुमिनुमो यदत्र काशकृत्स्नव्याकरणग्रन्थस्यैव परिमाण उक्त इति । अत्रेमौ हेतू—

१. काशिकायां (५।१।५८) अमोघावृत्तौ (३।२।१६१) च पूर्वोद्धृतयोरुदाहरणयोः सह अष्टकं पाणिनीयम् इत्यादिषूदाहरणेषु यावन्तः सूत्रग्रन्थाः

---

संक्षेप एव समजनीति । तेन पूर्वपूर्वतरपूर्वतमग्रन्थाः विस्तृतविस्तृतरविस्तृतमा आसन् (द्र०-सं० व्या० शास्त्र का इतिहास भाग १ अ० १) । तथा सति काशकृत्स्नतन्त्रस्योपजीव्यं तन्त्रं तदपेक्षया महदासीत्, काशकृत्स्नं च तदपेक्षया लघु ।

१. उदाहरणमिदं जैनशाकटायनस्य चिन्तामणिवृत्तौ (३।१।१८२) सरस्वतीकण्ठाभरणस्य हृदयहारिण्यां वृत्तौ (४।३।२४५) चोपलभ्यते ।

२. नपुंसके संबन्ध शब्दो भाष्यकृता बहुत्र प्रयुक्तः ।

स्मर्यन्ते ते सर्वे व्याकरणविषयका एव। अतः साहचर्यनियमेन तैः सह स्मृतः काशकृत्स्नीयोऽध्यायत्रयात्मको ग्रन्थोऽपि व्याकरणविषयक एव भवितुमर्हति।

२. कलापकापरनाम कातन्त्रव्याकरणं काशकृत्स्नस्य लघु संस्करणमित्यनुपदमेव वक्ष्यते। कातन्त्रव्याकरणस्य मूलप्रवचने[1] त्रय एवाध्यायाः सन्ति। अत एतत्सम्भवति यत्कातन्त्रस्योपजीव्ये काशकृत्स्नतन्त्रेऽपि त्रय एव अध्याया भवेरन्निति।

उपजीव्योपजीवकतन्त्रेष्वन्यत्रापीयम् अध्यायपरिमाणसमानतोपलभ्यते। यथा पाणिनीयतन्त्रस्योपजीवके चान्द्रे तन्त्रेऽपि पाणिनीयतन्त्रवदष्टावेवाध्याया आसन्[2]। पाणिनीयचान्द्रव्याकरणयोरुपजीवके सरस्वतीकण्ठाभरणेऽप्यष्टावेवाध्यायाः सन्ति। स्वयं पाणिनिरपि स्वीयं तन्त्रं आपिशलतन्त्रवद्[3] अष्टस्वेवाध्यायेषु विभक्तवान्, शिक्षां चापिशलशिक्षावद् अष्टसु प्रकरणेषु।

इत्थमेव कातन्त्रप्रवक्त्राऽपि स्वीयतन्त्रस्य त्रिष्वध्यायेषु विभागः स्वोपजीव्यकाशकृत्स्नव्याकरणानुसारं कृतः स्यात्।

उक्तानुमानस्य पोषकोऽपरोऽप्ययं हेतुर्द्रष्टव्यः—उपलब्धे काशकृत्स्नधातुपाठे (जुहोत्यादीन् अदादावन्तर्भाव्य) नव एव गणा उपलभ्यन्ते। इत्थमेव च तदुपजीवके कातन्त्रधातुपाठेऽपि नव एव गणा सन्ति।

एवं च सति काशकृत्स्नव्याकरणे त्रय एवाध्याया आसन् इत्येतावन्निश्चयेन शक्यते वक्तुम्।

प्रत्यध्यायं पादसंख्या—काशकृत्स्नव्याकरणे प्रत्यध्यायं कति पादा आसन् इति न शक्यते वक्तुम्। काशकृत्स्नात् संक्षिप्ते पाणिनीये तन्त्रेऽष्टस्वध्यायेषु प्रत्यध्यायं चत्वारः पादा उपलभ्यन्ते। सत्येवं ततो महातन्त्रे काशकृत्स्ने

---

१. मूलभूतं आख्यातान्तं कातन्त्रव्याकरणे त्रय एवाध्यायाः सन्ति। कृदन्तभागात्मकश्चतुर्थोऽध्यायः कात्यायनेन (वररुचिना) परिवर्धितः। द्र० सं० व्या० शास्त्र का इतिहास, भाग १, पृष्ठ ५११, द्वि० सं०।

२. चान्द्रव्याकरणेऽष्टावेवाध्याया आसन्। स्वरवैदिकप्रकरणविषयकौ सप्तमाष्टमाध्यायौ बौद्धमतानुयायिभिस्तद्विषयस्योपेक्षणात् कालान्तरे नाशमुपगतौ। अस्माभिश्चान्द्रव्याकरणस्य स्वरविषयकाणि बहूनि वचनान्युपलब्धानि। एकत्र तु 'स्वरविशेषमष्टमे वक्ष्यामः' इति महता कण्ठेनाऽष्टमाध्यायस्य सत्ता स्वीक्रियते (द्र० चान्द्रवृत्ति १।२।४५)।

३. पाणिनीयव्याकरणस्योपजीव्यभूतम् आपिशलव्याकरणमासीदिति हरदत्त आह (पदमञ्जरी, भाग १, पृष्ठ ६-७)

त्रिष्वेध्यायेषु प्रत्यध्यायं पादसंख्या चतुर्भ्योऽधिकास्यादिति तु निश्चितमेव। कातन्त्रे त्रिष्वध्यायेषु क्रमशः पञ्च-पञ्च-दश च पादा उपलभ्यन्ते।

पाणिनीयतन्त्राद् विस्तृतम्—काशकृत्स्नमपि तन्त्रं कस्यचित् प्राचीनस्य महातन्त्रस्य संक्षिप्तं प्रवचनमित्युक्तं पुरस्तात्। यद्यपि काशकृत्स्नीयं तन्त्रं सम्प्रति नोपलभ्यते, तथापि तत् पाणिनीयतन्त्राद् विस्तृतमासीदित्यास्माकीनं मतम्। तत्रैते हेतवः—

(१) काशकृत्स्नस्य तन्त्रस्य यावन्ति सूत्राण्यस्माभिरयथावदुपलब्धानि, तेषामवलोकनेन विज्ञायते यत् काशकृत्स्नीये तन्त्रे तादृशां बहूनां शब्दानामन्वाख्यानमासीद् येषामन्वाख्यानं पाणिनीये तन्त्रे नोपलभ्यते। यथा—

(क) ब्रह्म—बृंहे रु रो मनि। का० धा० १।३२०, पृष्ठ ५०।

(ख) कश्यपः, कशिपुः—कशेर्यप ईपुश्च। का० धा० १।३७०, पृष्ठ ५३।

(ग) पुलस्यः, अगस्तिः–पुल्यगिभ्यामस्त्योऽस्तिश्च। का०धा० १।४१०, पृष्ठ ६६।

(घ) लक्ष्मी, लक्ष्म, लक्ष्मणः—लक्षेर्मीमन्मनाः। का० धा० ९।१०, पृष्ठ १८८।

(२) चन्नवीरकविना काशकृत्स्नधातुव्याख्याने प्रतिधातु कृदन्तरूपनिदर्शने बहुत्र तादृशानि रूपाण्युदाहृतानि यानि पाणिनीयव्याकरणानुसारं नोपपद्यन्ते। तद्यथा—

रभ—रभ्यम्, राभ्यम्। का० धा० १।५६३, पृष्ठ ९४।

लभ—लभ्यम्, लाभ्यम्। का० धा० १।५६४, पृष्ठ ९४।

रुच—रुच्यम्, रौच्यम्। का० धा० १।५६५, पृष्ठ ९४।

मिद—मेद्यम्, मैद्यम्। का० धा० १।५६७, पृष्ठ ९५।

घुट—घुट्यम्, घोट्यम्, घौट्यम्। का० धा० १।५६९, पृष्ठ ९५।

एषु रभलभधातुभ्यां पाणिनिमतानुसारं पोरदुपधात् (३।१।९८) इति नियमेन यदेव सम्भवति न ण्यत्। इह तु यत्ण्यत्-प्रत्ययान्तौ सामान्येन निर्दिष्टौ। रुचधातोः पाणिनिना राजसूय (अ० ३।१।११४) इति नियमेन कर्तरि क्यप् निपातितः। भावकर्मयोर्ण्यदेव भवति (अ० ३।१।१२४)। टीकाकृता त्विह सामान्येन भावे क्यप्ण्यत्-प्रत्ययान्ते रूपे उदाहृते। मिदधातोः पाणिनीये मते यत् प्रत्ययो न सम्भवति, परन्त्विह यदन्तमपि रूपमुदाहृतम्। एवं घुट-धातोः पाणिनिमते केवलं ण्यदेव संभवति। चन्नवीरस्तु क्यप्-यत्-ण्यत्प्रत्ययान्तानि

रूपाणि सामान्येनोदाजहार। अतः प्रतीयते काशकृत्स्ने व्याकरणे यत्-ण्यत्-क्यप्-प्रत्ययाः सामान्येन विहिता आसन्निति।

एवमन्यत्रापि बहूनि रूपाणि, शब्दाश्च चन्नवीरकविना तादृश उदाहृता ये पाणिनीये व्याकरणे न दृश्यन्ते, नवा तेन संगृह्यन्ते[1]।

(३) काशकृत्स्नीये धातुपाठे पाणिनीयाद् धातुपाठात् सार्धचतुःशत-धातवोऽधिकाः पठ्यन्त इत्युक्तं पुरस्तात्। यस्य नाम धातुपाठः पाणिनीयाद् विस्तृतः, तस्य शब्दानुशासनस्य पाणिनीयाद् विस्तरः स्वयसिद्ध एव।

काशकृत्स्नतन्त्रस्य वैशिष्ट्यम्—कस्मिन् व्याकरणे किं वैशिष्ट्यम् एतस्य ज्ञानं विभिन्नेषु व्याकरणग्रन्थेषूदाहृतैर्यैरुदाहरणैः संजायते तानीमानि—

क—आपिशलं पुष्करणम् (काशिका ४।३।११५), आपिशलमान्तः-करणम् (सरस्वतीकण्ठाभरणटीका ४।३।२४५)।

ख—पाणिनीयमकालकं व्याकरणम् (काशिका ४।३।११५; शाकटायन चिन्तामणिवृत्ति ३।१।१८२), पाणिनोपज्ञमकालकं व्याकरणम् (काशिका ६।२।१४)।

ग—चान्द्रमसंज्ञकं व्याकरणम् (सर० कण्ठा० टीका ४।३।२४५), चन्द्रोपज्ञमसंज्ञकं व्याकरणम् (चान्द्रवृत्ति २।२।८६, वामनीय लिङ्गानुशासन पृष्ठ ८, अस्मत्सं०)।

इत्थमेव काशकृत्स्नतन्त्रस्य वैशिष्ट्यबोधकमस्त्येकमुदाहरणम्—काशकृत्स्नं गुरुलाघवम् इति (द्र० काशिका ४।३।११५; सर० कण्ठा० टीका ४।३।२४५; शाक० चिन्तामणिटीका ३।१।१८२)।

एतेनोदाहरणेन काशकृत्स्नतन्त्रस्य वैशिष्ट्यं गुरुलाघवम् इत्युक्तं भवति।

गुरुलाघव-शब्दस्यार्थः—गुरुलाघवमित्यस्यैकोऽर्थः सूत्ररचनायां गौरवला-घवविचाररूपोऽपि सम्भवति, परन्तु काशकृत्स्नस्य यानि सूत्राण्यस्माभिः संकलि-तानि तेषु बहूनि सूत्राणि छन्दोबद्धानि सन्ति। छन्दोबद्धसूत्ररचनायां छन्दोनुरोधेन निरर्थकान्यपि चादिपदानि पठ्यन्त एव। अतो गुरुलाघवशब्दस्य नायमर्थोऽत्र संभवति।

अपरोऽप्योऽर्थः 'प्रवचनकाले शब्दानां गौरवं प्रयोगबाहुल्यम्, लाघवम्-अल्पप्रयोगताम् उत्सन्नप्रयोगतां वा विचार्य स्वतन्त्रस्य संक्षिप्तं संस्करणं व्यधायि' इति पुरस्तात् निर्दिष्टः, स एव साधुर्ज्ञेयः।

---

१. एतादृशेषु स्थलेषु काशकृत्स्नधातुव्याख्याने बहुत्र टिप्पण्यां संकेतः कृतः।

काशकृत्स्नतन्त्रस्य श्लोकबद्धता—काशकृत्स्नं तन्त्रम् ऋक्प्रातिशाख्य-वत् छन्दोबद्धं पाणिनीयतन्त्रवत् गद्यबद्धं वाऽऽसीदित्यत्र न किमपि विनिगमकं साक्षात् प्रमाणमुपलभ्यते, तथापि तत् छन्दोबद्धमासीदित्यस्माकं मतम्। तत्रैते हेतवः—

१. मूलकातन्त्रव्याकरणस्य ( आख्यातान्तस्य ) पर्याप्तो भागश्छन्दोबद्ध उपलभ्यते। काशकृत्स्नं कातन्त्रस्योपजीव्यमिति कृत्वा तदपि छन्दोबद्धमेव भवितुमर्हति।[1]

२. काशकृत्स्नव्याकरणस्य यानि विप्रकीर्णानि सूत्राण्युपलब्धानि, तेषु अनेक-प्रत्ययनिर्देशप्रसङ्गे क्वचित् समस्तनिर्देश उपलभ्यते, क्वचिच्चासमस्तः। यथा—

समस्तनिर्देशः—ल्क्ष्मेर्मीमन्मनाः ( का० धा० ९।१०, पृष्ठ १८८ ), नाम्न उपमानादाचारे आयङीयौ ( का० धा० चुरादिगणान्त, पृष्ठ २२३ )।

असमस्तनिर्देशः—कशेर्यप ईपुश्च ( का० धा० १।३७०, पृष्ठ ५० ) पुल्यगस्तिभ्यामस्त्योऽस्तिश्च ( का० धा० १।४१०, पृष्ठ ६६ )

प्रत्ययानां समस्तरूपेणासमस्तरूपेण चोभयथानिर्देशस्तदैव संभवति, यदा सूत्ररचना छन्दोबद्धा स्यात्। यतो हि छन्दोऽनुरोधेन क्वचित् समस्तनिर्देशः क्वचिच्चासमस्तनिर्देशः कर्तव्यो भवति।

३. शब्दशास्त्रप्रवक्तॄणामेषा शैली यत् प्रत्ययविधाने ते प्राक्प्रकृतिं निदर्श-यन्ति, तदनु प्रत्ययम्। यत्र क्वचित् प्रकृतेः प्राक्प्रत्ययनिर्देश उपलभ्यते स छन्दोऽनुरोधेन ज्ञेयः। यथा—क्विन्त्रिणौ सर्वधातुभ्यः[2] इति ( का० धा० ६।२२, पृष्ठ १७५ )। प्रत्यक्षं चैतदनुष्टुभश्चरणमेकम्।

४. धातोरविकारे सत्यपि 'सर्वधातुभ्यः' इति निर्देशोऽपि छन्दोबद्धत्वे लिङ्गम्।[3]

---

१. उपजीव्यस्योपजीव्यके ग्रन्थे प्रभावोऽनिच्छतोऽपि क्वचिदुपजायते। यथा—'अर्ध-मात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः' ( परिभाषेन्दुशेखर ) इत्याभाणकं यस्य पाणिनीयतन्त्रस्य शब्दलाघवं दृष्ट्वा प्रवृत्तम्, तादृशेऽपि व्याकरणे क्वचिद् पूर्वव्याकरणा-नुसारी छन्दोरचनाप्रभाव उपलभ्यत एव। यथा-'पक्षिमत्स्यमृगान् हन्ति परिपन्थं च तिष्ठति' ( अष्टा० ४।४।३५;३६ ) इत्यनुष्टुभो द्वे चरणे उपलभ्येते। उत्तरसूत्रे चारथाने चकारनिवेशोऽपि छन्दोनुरोधेनैव, न पाणिनीयनियमेन। विशेषस्तत्र 'सं० व्या० शास्त्र का इतिहास' नाम्नि ग्रन्थे ( भाग १, पृष्ठ २२०-२२२ ) द्रष्टव्यः।

२. एतेन पञ्चपादुणादिषु यत्र क्वचित् प्रत्ययस्य प्राङ्निर्देशः स सर्वोऽपि तदुपजी-व्यस्य तन्त्रस्य छन्दोबद्धतामेव सूचयति।

३. एतस्य संपुष्टिः 'अजपि सर्वधातुभ्यः' इति महाभाष्यस्य वार्तिकेनापि भवति

५. काशकृत्स्नव्याकरणस्योपलब्धेषु सूत्रेषु कतिपयानि स्पष्टमेव श्लोकाः श्लोकांशा वा सन्ति। यथा—

क—भूते भव्ये वर्तमाने भावे कर्तरि कर्मणि।
प्रयोजके गुणे साम्ये धातुभ्यः स्युः क्रियादयः॥
(का० धा० १।३७, पृष्ठ १२४)

ख—गृहाः पुंसि च नाम्न्येव। (का० धा० ८।१४, पृष्ठ १८२)

ग—अकर्मकेभ्यो धातुभ्यो भावे कर्मणि यङ् स्मृतः
(का० धा० चुरादिगणान्ते पृष्ठ १२४)

काशकृत्स्नतन्त्रस्य यानि सूत्राण्युपलब्धानि तानि विप्रकीर्णप्रकरणस्य सन्ति। तत्रापि कानिचिद् अर्थतोऽनुवादरूपाणि कानिचिच्च सूत्रैकदेशभूतानि। अतो गद्यरूपेणापि प्रतीयमानानां छन्दोबद्धत्वसंभावना निराकर्तुं न शक्यते।

## काशकृत्स्नस्य लघुसंस्करणं कातन्त्रम्

कलापकतन्त्रं (कातन्त्रं) यद्यपि लौकिकशब्दानामेवानुशासनं विदधाति, तथापि तत्र कतिपयान्येतादृशानि सूत्राणि सन्ति यैरनुशिष्टाः शब्दाश्छान्दसा इति वैयाकरणाः प्रतिजानते।[1] विशुद्धे लौकिकशब्दानामनुशासके तत्राप्यत्यन्तं संक्षिप्ते वैदिकशब्दानुशासकनियमानां विद्यमानताऽऽश्चर्यं जनयति। वयं तु कातन्त्रस्य गम्भीरानुशीलनेन बहुभ्यो वर्षेभ्यः प्रागेवान्वमिनुम यत् कातन्त्रं यस्य प्राचीनव्याकरणस्य संक्षिप्तं प्रवचनं तस्मिन् तन्त्रे तादृशा नियमा आसन्, तन्नियमबोधिताः शब्दाश्च तस्मिन् काले लोकभाषायां प्रयुक्ता अभूवन्निति। अत एव वयं २००७ वैक्रमाब्दे प्रकाशिते 'संस्कृत व्याकरण-शास्त्र का इतिहास' नाम्नि ग्रन्थे निरदिशाम—

'कातन्त्र किसी अत्यन्त प्राचीन तन्त्र का संक्षिप्त संस्करण है। अतः उसमें कुछ प्राचीन (उत्तरकाल में छान्दस माने गए) अंश का विद्यमान रहना स्वाभाविक है।[2]

**काशकृत्स्न सूत्राणामुपलब्धिः**—आस्माकीनस्य 'संस्कृत व्याकरणशास्त्र का

---

(द्र० ३।१।१३४)। महाभाष्य एतावानेवांशः पठ्यते। सम्पूर्णोऽयं कारिका काशिकायां वृत्तौ (३।१।१३४) समुपलभ्यते। पचाद्युणादिसूत्रेषु बहुत्र पठ्यमानस्य 'सर्वधातुभ्यः' पदस्येदमेव निदानम्। अत एव दशपादीकारस्तत् परिहापयाञ्चकार।

१. द्र० सं० व्या० शास्त्र का इतिहास, भाग १, पृष्ठ ३४-३८ द्वि० सं०।

२. सं० व्या० शास्त्र का इतिहास, प्रथम संस्क० पृष्ठ २८-३०; द्वि० सं० ३४-३८।

इतिहास' नाम्नो ग्रन्थस्य (प्रथमसंस्करणस्य) प्रकाशनानन्तरं चन्नवीरकविकृत-कर्नाटकटीकया सह काशकृत्स्नीयो धातुपाठः प्राकाश्यत। तत्र काशकृत्स्नस्य उपत्रिंशदुत्तरशतं सूत्राण्युपलब्धानि।[1] ततः प्राक् काशकृत्स्नस्य चतुःपञ्चसूत्राण्येवास्माभिः संगृहीतान्यासन्।

**काशकृत्स्नसूत्राणां कातन्त्रसूत्रैः साम्यम्**—कातन्त्रव्याकरणमत्यन्तमेव संक्षिप्तं वर्तते, तत्रापि कृदन्तप्रकरणं न कातन्त्रकारप्रोक्तम्। अतः काशकृत्स्नस्योपलब्धानां सर्वेषां सूत्राणां कातन्त्र उपलब्धिः साम्यं वा प्रदर्शयितुं न शक्यते, तथापि काशकृत्स्नस्य ३० त्रिंशत्सूत्राणि कातन्त्र उपलभ्यन्ते। तत्राधिकान्यक्षरशः साम्यं भजन्ते, कतिपयानि च स्वल्पभेदेन वर्तन्ते।

**उभयोस्तन्त्रयोः संज्ञानां साम्यम्**—उपलब्धेषु काशकृत्स्नसूत्रेषु कातन्त्रसूत्रेषु च प्रयुक्ताः संज्ञाः समाना एवोपलभ्यन्ते।

**कातन्त्रधातुपाठस्योपलब्धिः**—काशकृत्स्नधातुपाठोपलब्ध्यनन्तरं कातन्त्रधातुपाठस्योपलब्धेरुत्कण्ठा समजायत। स चास्मन्मित्रेण पण्डितकपिलदेवेनाकस्मादेवोपलब्धः। कोशोऽयं प्राचीनवाङ्गलिप्यां लिखित आसीत्। पण्डितकपिलदेवेन कस्यचिद् वङ्गाभिजनमित्रस्य साहाय्येन तस्य नागराक्षरप्रतिलिपिः सम्पाद्य मह्यं प्रादायि। यद्यपि कोशोऽयं त्रुटिबहुल आसीत्, तथापि शोधकर्माणि मे महत्साहाय्यमकरोत्। तदनु अपरेणाऽस्मन्मित्रेण पण्डितरामशंकरभट्टाचार्येण समग्रस्य कातन्त्रधातुपाठस्यापरा प्रतिलिपिः सम्प्रेषिता। एवं द्वाभ्यां कोशाभ्यामयं कातन्त्रधातुपाठः शोधकार्ययोग्यः समपद्यत।

**उभयोर्धातुपाठयोः साम्यम्**—यद्यपि कातन्त्रधातुपाठः स्वतन्त्र इव काशकृत्स्नधातुपाठात् संक्षिप्तो वर्तते, तथापि धातुस्वरूपे अनुबन्धासंजने, अर्थनिर्देशे, धातुक्रमे, गणविभागे च काशकृत्स्नधातुपाठेन सह पूर्णं साम्यं भजते। एतेन पूर्णसाम्येन सर्वथा विस्पष्टं भवति यत् कातन्त्रं काशकृत्स्नतन्त्रस्यैव संक्षिप्तं संस्करणमिति।

**उभयत्र वैदिकधातूनां समानः पाठः**—पाणिनीये धातुपाठे छन्दसि इत्येवमधिकृत्य जुहोत्यादौ स्वादौ च पठिताश्छान्दसा धातवः काशकृत्स्ने धातुपाठे तादृशविशिष्टेन संकेतेन रहिता एव पठिताः सन्तीत्युक्तं पुरस्तात्[2]। काशकृत्स्नोत्तरकालवर्तिना पाणिनिना तेषां धातूनां छान्दसत्वे घोषितेऽपि कातन्त्र-

---

१. इमानि सूत्राण्यनुपदमेव संगृह्यन्ते। अन्यग्रन्थोपलब्धैः सूत्रैः सह एतेषां विस्तृतं तुलनात्मकं व्याख्यानमपि 'काशकृत्स्नव्याकरणम्' इति नाम्ना प्रकाश्यते, तदपि द्रष्टव्यम्।

२ द्र० पूर्वत्र पृष्ठ १०, सन्दर्भ ११।

धातुपाठे तादृशां धातूनामुपलब्धिः कातन्त्रस्य काशकृत्स्नतन्त्रोपजीवकतामेव द्योतयति ।

एवं काशकृत्स्नकातन्त्रव्याकरणयोरध्यायानां, सूत्राणां, धातुपाठे च धातूनां, तत्क्रमस्य, अर्थनिर्देशस्य, गणविभागस्य, छान्दसत्वेनाभिमतानां धातूनां पाठस्य च साम्यता दर्शनात् सर्वथा विस्पष्टं भवति यत् कातन्त्रं काशकृत्स्नतन्त्रस्यैव लघु-संस्करणम् इति ।

एवं संक्षेपतः काशकृत्स्नीयशब्दानुशासनस्य विषये सामान्येन किञ्चिदुक्त्वा तदीयस्य धातुपाठस्य विषये तद्वृत्तिविषये च किञ्चिदुच्यते ।

# काशकृत्स्नीयो धातुपाठः

काशकृत्स्नीयो धातुपाठः कतिपयवर्षेभ्यः प्राक् पूनानगरस्थात् दक्षिणमहा-विद्यालयात् (डक्कनकालेजतः) चन्नवीरकविकृतया कर्नाटकभाषामय्या टीकया सह प्रकाशं गतः ।

## काशकृत्स्न धातुपाठस्य वैशिष्ट्यम्

काशकृत्स्नीयोऽयं धातुपाठः पाणिनीयधातुपाठाद् बहुविधं वैशिष्ट्यं भजते ।

यथा—

१—अस्मिन् धातुपाठे नव एव गणाः सन्ति । जुहोत्यादिरत्रादादावन्तर्भूतो वर्तते । वैयाकरणनिकाये 'नवगणी धातुपाठः' इति या प्रसिद्धिः सैतन्मूलिकेति सम्भवति ।

२—एतस्मिन् धातुपाठे प्रायेण प्रतिगणं प्रथमं परस्मैपदिनो धातवः पठ्यन्ते, तदनु आत्मनेपदिनस्तदनु चोभयपदिनः । पाणिनीये धातुपाठे त्रिविधा अप्येते धातवः प्रतिवर्गं संमिश्रा उपलभ्यन्ते ।

३—अस्मिन् धातुपाठे भ्वादौ पाणिनीयधातुपाठात् ४५० सार्धचतुःशतं धातवोऽधिकाः पठ्यन्ते ( उत्तरगणेषु प्रायेण समानता वर्तते )। ये धातवोऽस्मिन्नेव पाठे समुपलभ्यन्ते न पाणिनीये, तादृशास्तूपाद्धशतं धातवः सन्ति । पाणिनीये पाठेऽपि सन्ति सार्धत्रिशतमेतादृशो धातवो येऽत्र न सन्ति । तदेवं साकल्येन काशकृत्स्ने धातुपाठे सार्धचतुश्शतं धातवोऽधिकाः पठ्यन्ते ।

४—पाणिनीये धातुपाठे एकधा पठिता अनेके धातवः काशकृत्स्ने धातु-पाठे द्विरूपाः पठ्यन्ते । यथा—

( क ) ईड स्तुतौ (क्षीर० २.१२) पाणिनीयो धातुः काशकृत्स्ने ईड ईळ स्तुतौ[1] इत्येवं पठ्यते। तेन डलयोरेकत्वम् इत्येतादृशस्य नियमास्याऽऽवश्यकतैव न भवति। एवं यज-धातुः इज यज[2], प्रथ-धातुश्च प्रथ पृथु[3] इत्येवं द्विरूपो पठ्यते। तत्र इष्टिः पृथिवी इत्यादिषु कृदन्तेषु सम्प्रसारणविधानस्यावश्यकता न भवति।

( ख ) बृहि वृद्धौ इत्यस्य समानार्थको ब्रह्म धातुरपि काशकृत्स्ने पठ्यते।[4] तेन ब्रह्मशब्दसिद्धये बृंहेर्नोऽच्च (पं० उ० ४।१५६; द० पा० ६।७४) सूत्रेण नकारस्याकारादेश ऋकारस्य च यणादेशो न कर्तव्यो भवति। ब्रह्म-धातोर्मनिन्-प्रत्ययेऽञ्जसैव रूपसिद्धिर्भवति।

( ग ) सिंह—सिंहिकाऽऽदिशब्दानां मूलप्रकृतिरूपः षिहि हिंसायाम् धातुरत्र पठ्यते (१।३१६) तेन हिसि = हिंस इत्यत्र वर्णव्यत्ययं कृत्वा सिंहादिशब्दव्युत्पत्तेरावश्यकता न भवति।[5]

५—पाणिनिनाऽपठिताः, परन्तु लोकवेदयोरुपलभ्यमाना बहवो धातवः काशकृत्स्ने धातुपाठ उपलभ्यन्ते। यथा—

( क ) अथर्वशब्दस्य प्रकृतिभूतः थर्व-धातुरिह[6] (१।२०४) हिंसार्थे पठितः।

( ख ) हिन्दीभाषायां प्रयुज्यमानाया ढूंढना क्रियाया मूलप्रकृतिरूपः ढुढि (= ढुण्ढ) धातुरिह (१।१९४) पठ्यते। अस्य धातोः प्रयोगोऽपि स्कन्द-पुराणे काशीखण्डे दृश्यते—

अन्वेषणे ढुण्ढिरयं प्रथितोऽस्तिधातुः सर्वार्थढुण्ढितया तव ढुण्ढिनाम।

( ग ) वेदे बहुधा भौवादिकत्वेन प्रयुज्यमाना मरति इत्येवमादयः प्रयोगा उपलभ्यन्ते। हिन्दीभाषायां प्रयुज्यमाना मरता है क्रियाऽपि भौवादिकस्यैव-रूपस्यापभ्रंशो, न म्रियते इति रूपस्य। काशकृत्स्ने धातुपाठे मृ-धातुः स्वतन्त्रः पठ्यते।[7]

---

१. का० धा० २।४१॥

२. का० धा० १।४२५, ६९९॥        ३. का० धा० १।५८३, ६६८॥

४. कन्नडटीकायां 'दृहि वृहि बृह ब्रह वृद्धौ' इति धातुसूत्रे (१।३२०) स्वतन्त्रो 'ब्रह' धातुः पठ्यते, परन्तु वृत्तौ नायं व्याख्यायते। ब्रह्मन्-शब्दसिद्धिरपि 'बृहेर्च रो मनि' सूत्रेण ऋकारस्य रेफादेशं विधाय प्रदर्श्यते। किमत्र तत्त्वमिति देवा ज्ञातुमर्हन्ति।

५. हिंसेर्वा स्याद् विपरीतस्य। निरुक्त ३।१८॥ हिंसेः सिंहः। महा० ३।१।१२३॥

६. थर्वतिश्चरतिकर्मा। निरुक्त ११।१८॥ अत्रार्थभेद एव न तु धातुभेदः। स चार्थभेदोऽनेकार्थत्वाद्धातूनामुपपद्यत एव।

७. पाणिनीयेऽपि धातुपाठे काशकृत्स्नवत् मीमृ गतौ इति पठ्यते (क्षीर० १।३१३)। परन्तु पाणिनीया मीमृ एको धातुरिति संगिरन्ते। काशकृत्स्नास्तु मी मृ इति द्वौ धातू इत्याहुः।

६—पाणिनिना ये धातवः परस्मैपदिन आत्मनेपदिनो वा पठितास्तेषु बहवो धातवः काशकृत्स्न उभयपदिनः पठ्यन्ते । यथा—

( क ) पाणिनिः वद्-धातुं परस्मैपदिषु पठित्वा भासनाद्यर्थविशेषेष्वेवात्मनेपदं विदधाति[1] । काशकृत्स्नस्तु वद्-धातुमुभयपदिषु पठित्वा सामान्येन वदति वदते इत्युभयप्रयोगान् मन्यते । महाभारतादिषु वदधातोरात्मनेपदे बहवः प्रयोगा उपलभ्यन्ते । काशकृत्स्नदिशा तादृशस्थलेषु आर्षत्वात् साधुः इत्यस्य न भवत्यावश्यकता ।

( ख ) इत्थमेव पाणिनिना परस्मैपदिषु पठितौ वस निवासे टुओश्वि गतिवृद्ध्योः इति धातू अपि काशकृत्स्ने धातुपाठे उभयपदिषु पठ्येते ।

७—काशकृत्स्ने धातुपाठे सन्ति तादृशा बहवो धातवः, येभ्यो बहवः शब्दा लोपागमविकारप्रदर्शनं विनैवाञ्जसा उपपद्यन्ते । यथा—

( क ) 'नौ' शब्दं वैयाकरणा ग्लानुदिभ्यां डौः ( द० उ० २।१२; पं० पा० २।६५ ) इति सूत्रेण नुदेर्डौः प्रत्ययं विधाय डित्त्वाट्टिलोपं कृत्वा साधयन्ति । परन्तु काशकृत्स्ने धातुपाठे पठितात् णौ प्लवने (१।४२७) धातोर्विना टिलोपेनैव रूपसिद्धिर्भवति क्विप्प्रत्यये ।

( ख ) क्ष्मा (= पृथिवी ) शब्दसिद्धये क्षमूष् सहने इत्यस्य उपधाया लोपं मामनन्ति वैयाकरणाः, परन्तु काशकृत्स्ने धातुपाठे क्ष्मै धारणे (१।४८३) ( क्ष्मै = क्ष्मा ) इति स्वतन्त्रो धातुर्निर्दिश्यते । येन क्विपि आत्वादेशे ऽञ्जसैव-रूपसिद्धिर्जायते ।

एतादृशं बहुविधं वैशिष्ट्यं काशकृत्स्नीये धातुपाठ उपलभ्यते । इह तु दिङ्मात्रं प्रदर्शितम् ।

## धातुपाठस्य प्रामाणिकता

पश्चात्यानां विदुषां प्रायेणैष स्वभावो वर्तते, यत्ते तादृशं सहसोपलब्धं प्राचीनं ग्रन्थं, येन तैरुद्भावितानां मिथ्याधारणानां खण्डनं जायते, विनैव-प्रमाणं 'कूटोऽयं ग्रन्थः' इति इत्युक्त्वाऽपलपन्ति । कौटिल्यार्थशास्त्रस्य भासीय-नाटकानां चोपलब्धौ पाश्चात्यैर्विद्वद्भिस्तेषां कूटत्वसिद्धय आपादमस्तकं प्रयत्नो व्यधायि, यत एभिर्ग्रन्थैः पाश्चात्यविद्वद्भिः प्रसारितानां बह्वीनां मिथ्याधारणानां निराकरणं भवति स्म । एतत् खलु भारतीयानां सौभाग्यं

१. महा० १।३।४७–५०॥

यच्छामशास्त्रिभिर्गणपतिशास्त्रिभिश्चैतेषां ग्रन्थानां प्रामाण्यसिद्ध्यै तादृशानि सुदृढानि प्रमाणान्युपन्यस्तानि यैः पाश्चात्यानां एतद्विषयः प्रलापः शान्तिमगात् । सत्यप्येवं सन्ति केचन दुःसाहसिका इदानीमपि नरा ये यदा कदैतेषां कूटत्वसिद्ध्यै प्रयतन्ते ।

काशकृत्स्नीयोऽयं धातुपाठोऽपि तादृश एव महत्त्वपूर्णो ग्रन्थो विद्यते । एतस्योपलब्ध्या यत्र व्याकरणविषये नूतनः प्रकाशः प्राप्यते, तत्र भाषाविज्ञानविषयेऽपि कतिपयानां पाश्चात्यविद्वद्भिः प्रकल्पितानां मतानां खण्डनं जायते । ग्रन्थस्यास्य कर्णाटकलिप्यां प्रकाशनात् टीकायाश्च कन्नडभाषात्वाद् अस्योपरि पाश्चात्यानां क्रूरदृष्टिरद्ययावन्नापतत् । यदाप्ययं तेषां दृष्टिपथमायास्यति, तदानीमेव तेऽस्य कूटग्रन्थत्वं वक्ष्यन्ति । अतो वयमस्य ग्रन्थस्य प्रामाणिकता प्रदर्शनाय कानिचित् प्रमाणान्युपस्थापयामः—

१—बौद्धवैयाकरणस्य चन्द्रगोमिनः शब्दानुशासनमतिप्रसिद्धं वर्तते । चन्द्रगोमी स्वीये सूत्रपाठे प्रायेण पाणिनीयं सूत्रपाठं कात्यायनीयं वार्तिकपाठं चानुसरति, परन्तु धातुपाठे न पाणिनीयं क्रममनुरुणद्धि । चन्द्राचार्यो धातुपाठे प्रतिगणं प्रथमं परस्मैभाषा धातवः पठति, तत आत्मनेभाषास्ततश्चोभयतोभाषाः । काशकृत्स्नधातुपाठोपलब्ध्याः पूर्वमासीत् मनसि संशयः यत् चन्द्राचार्यः सूत्रपाठ इव धातुपाठेऽपि कंचित् प्राचीनं धातुपाठमनुसरति, उत तत्र स स्वतन्त्रमेव क्रमं भजत इति । काशकृत्स्नधातुपाठस्योपलब्ध्या संशयोऽयं नाशमुपगतः, निश्चयश्चाभूत् यत्स धातुपाठे प्राधान्येन काशकृत्स्नक्रममनुससारेति । एतेन काशकृत्स्नधातुपाठोऽयं चन्द्राचार्यस्य विदितपूर्व इति विस्पष्टमवगम्यते ।

२—कातन्त्रकाशकृत्स्नधातुपाठयोस्तुलनयाऽप्येतदवबोध्यते, यत्कातन्त्रधातुपाठः काशकृत्स्नीयधातुपाठस्यैव संक्षेप इति । नैतावदेव, यत्र चन्द्रगोमी काशकृत्स्नक्रमं परित्यज्य, पाणिनीयक्रममनुसरति तत्र कातन्त्रकारः काशकृत्स्नक्रममेवानुरुणद्धि । यथा—

| | काशकृत्स्नपाठः | कातन्त्रपाठः | पाणिनीयपाठः | चान्द्रपाठः |
|---|---|---|---|---|
| क— | दैङ् त्रैङ् पालने | दैङ् त्रैङ् पालने | देङ् रक्षणे | देङ् रक्षणे |
| | प्यैङ् वृद्धौ | प्यैङ् वृद्धौ | श्यैङ् गतौ | श्यैङ् गतौ |
| | पुङ् (?) पवने | पूङ् पवने | प्यैङ् वृद्धौ | प्यैङ् वृद्धौ |
| | | | त्रैङ् पालने | त्रैङ् पालने |
| | | | पूङ् पवने | पूङ् पवने |

| ख—ग्लास्नावनु— | ग्लास्नावनु— | ग्लास्नावनु— | ग्लास्नावनु— |
|---|---|---|---|
| वमश्वनकम्य— | वमश्वनकम्य— | वमां च। न क— | वमां च। न क— |
| मिचमः। | मिचमः | म्यमिचमाम्। | म्यमिचमाम्। |

विशेषः—काशकृत्स्नीयधातुसूत्रानुसारं श्वन-कम-अम-चम-धातूनां णिचि विकल्पेन मित्संज्ञा भवति। तदनुसारं श्वनयति श्वानयति, कमयति कामयति, अमयति आमयति, चमयति चामयति इति प्रयोगा निष्पद्यन्ते। पाणिनीयधातुसूत्रानुसारं तु अम-कम-चम-धातूनां मित्संज्ञा प्रतिषिध्यते। तेन आमयति कामयति चामयति इत्येव रूपाणि सिद्ध्यन्ति। श्वन-धातुस्तु पाणिनीये नैव पठ्यते। अतः पाणिनीयवैयाकरणा श्वन्प्रातिपदिकात् तत्करोति तदाचष्टे इति नियमेन णिचि प्रकृत्यैकाच् (अष्टा० ६।४।१६३) इति प्रकृतिभावे श्वानयति रूपं प्रदर्शयन्ति। श्वन्धातोरञ्जसा क्विपि सम्पद्यमानं श्वन्प्रातिपदिकं पाणिनीया वैयाकरणाः श्वनुक्षन् (उ० १।१५९) आदिसूत्रेण निपातयन्ति।

४—पाणिनिर्यान् धातून् छान्दसान् मेने, तेभ्यः प्राक् छन्दसि इति सूत्रमधिकृत्य तान् अपठत्। काशकृत्स्नस्तु तादृक्संकेतं विनैव अन्यधातुवत् तानपि धातून् पपाठ। एतेन विज्ञायते यत् काशकृत्स्नप्रवचनस्य स कालो यस्मिन् ते धातवो लोके लब्धप्रचारा आसन्। अतः काशकृत्स्नीयो धातुपाठः पाणिनेः पूर्ववर्ती।

५—काशकृत्स्नस्य यानि सूत्राण्युपलब्धानि, तैरेतद्विस्पष्टं प्रतीयते यत्तदीयेतन्त्रे स्वरशास्त्रस्य यथावद् व्यवस्थायै प्रत्ययानुबन्धानां उचिता व्यवस्थाऽऽसीत्। तेनाख्यातप्रयोगाणां स्वरा न पाणिनीयप्रदर्शितेभ्यः स्वरेभ्यः क्वचिदपि विभिद्यन्ते।

प्रत्ययेषु स्वरानुरोधेनानुबन्धानां आसञ्जनस्य व्यवस्थेदं प्रमाणयति यत् काशकृत्स्नशब्दानुशासनस्य प्रवचनकाले लोकभाषायां स्वरोच्चारणं प्राचलदिति।

प्रामाण्यबाधा तन्निराकरणं च—काशकृत्स्नधातुपाठस्य प्रामाण्यनिराकरणे कूटग्रन्थत्वसिद्धौ चैकमेव प्रमाणं शक्यत उपस्थापयितुम्। तच्चेत्थम्—

सन्ति हि काशकृत्स्नीये धातुपाठे तादृशा बहवो धातवः, ये प्रातिपदिकरूपाः। यथा—

घरट्ट (१।११४) दृढ वृढ (१।१८७,१८८) पिपल पिप्पल (१।२५३), तितिक्षा (१।४१४) कक्ष पक्ष ऋभुक्ष (१।५०९-५११) इत्येवमादयः

सन्ति च केचनेह एतादृशोऽपि धातवो यत्र प्राकृतच्छाया विस्पष्टमवगम्यते। यथा—

ऋच्छ मच्छ ( १।३५५ ) हठ ( १।६३८ ) हुढि (=हुण्ड–१।१९१ ) इत्येवमादयः।

तत्र प्रथमदोषस्य त्विदं निराकरणम्—सन्ति हि पाणिनीयेऽप्यत्यन्तं परिष्कृतत्वेन स्वीकृते तन्त्र एतादृशो बहवो धातव ये तादृग्रूप एव लोके नामरूपेण प्रयुज्यन्ते। यथा—

पुष्प शम दम व्यय वृक्ष शूर वीर हल स्थूल स्थल कुत्स बल ऊह पण वास निवास कुमार संग्राम इत्येवमादयः।

एवं धातूनां कार्यविशेषार्थे सम्प्रयुक्तमन्त्यानुबन्धमपाकृत्य तत्स्थानेऽवर्णं संयोज्य लोके नामरूपेण प्रयुक्ता अपि शतशो धातवः पाणिनीय उपलभ्यन्ते। यथा—

अक्षू=अक्ष, श्लोकृ=श्लोक, आङ्रेकृ=आरेक, क्रमु=क्रम इत्येवमादयः।

येषु धातुषु कार्यविशेषप्रतिपत्तये नुमागमायेत्त्वमासज्यते, लोके च सनुमागमका नामरूपेण व्यवह्रियन्ते, तादृशां त्वत्यन्तं बाहुल्यं वर्तते। यथा—
स्कभि=स्कम्भ, जृभि=जृम्भा, पडि=पण्डा (=बुद्धिः), यत्रि=यन्त्र, मुडि=मुण्ड, टकि=टङ्क, शुठि=शुण्ठ, मत्रि=मन्त्र इत्येवमादयः।

सत्येवं, यदि पाणिनीयधातुपाठस्य प्रामाणिकत्वे न दोषमावहत्येतादृशां धातूनां पाठस्तर्हि काशकृत्स्नीये तादृशामेव धातूनां किञ्चिदाधिक्येन पाठः कथं नाम तस्य प्रामाणिकत्वं व्याहन्यात्।

वस्तुतः काशकृत्स्नधातुपाठे नामसदृशाणां धातूनामाधिक्येन पाठस्तु तस्य पाणिनीयात् पूर्वभावित्वे लिङ्गम्, न त्वप्रामाण्ये। यतो ह्यादिकाले भाषायां तादृश एव मूलभूताः शब्दा आसन्, ये नामविभक्तिभिः संयुज्य नामपदेन व्यवह्रियन्ते स्म, आख्यातविभक्तिभिश्च संयुज्याऽऽख्यातरूपं धारयन्ति स्म, उभयीभिर्विभक्तिर्विनाऽव्ययत्वेन परिज्ञायन्ते स्म। पाणिनीये कण्ड्वादिगणे एतादृशा एव केचन शब्दाः संगृह्यन्ते। अत एव कण्ड्वादयो धातवः प्रातिपदिकानि चेति वैयाकरणाः प्रतिपद्यन्ते। नामधातूनां स्थितिरप्यस्यैव सिद्धान्तस्य पोषिका वर्तते ( एतद्विषये 'सं०व्या० शास्त्र का इतिहास' नाम्नि ग्रन्थे, द्वितीये भागे, १५–२१ पृष्ठेषु विस्तरेण मीमांसा विहिता, साऽवश्यमवलोकनीया पाठकैः )—

यत्तु कच्छ मच्छ हठ ढुढि=ढुण्ढ आदि धातुषु प्राकृतच्छायानिरूपणम्, तदप्यविचारितरमणीयम्। यतोऽपि कच्छ मच्छ हठ शब्दानां साधुत्वम् अविच्छिन्नपारम्पर्येण वैयाकरणा अनुशासति। सम्यग्जागर्ति वैयाकरणनिकाय एतादृशं दोषम् अतिविशालायां सुरभारत्यां चञ्चुप्रवेशमात्रेणाऽऽत्मानं संस्कृतज्ञंमन्याः पाश्चात्या एवारोपयितुं शक्नुवन्ति, न तु सम्यग्दृशः। वस्तुतः कच्छ-मच्छादयः शब्दाः प्राकृतभाषासु तथैव प्रयुज्यन्ते यथाऽन्ये शुद्धाः संस्कृतशब्दाः। नैतावदेव, अपि तु देशीयत्वेनाभिमतेषु शब्देष्वपि शुद्धानां संस्कृतशब्दानां बाहुल्यं वर्तते। तेषां देशीयत्वं नापभ्रंशकारणाद्, अपितु देशविशेषेष्वेव प्रयुज्यमानत्वात्। यथा मूषकवाची 'उन्दर' शब्दो राजस्थाने गुजरातप्रान्ते चाद्यापि साधुरूपे प्रयुज्यते[1] पक्षीविशेषवाची चीलशब्दः[2] राजस्थानभाषायां हिन्दीभाषायां च व्यवह्रियते। ढुढि=ढुण्ढ धातोस्तु प्रयोगः स्कन्दपुराणे प्राग् (पृ० २१) एव प्रदर्शितः। अतिविशालायाः संस्कृतभाषायाः कालान्तर एतादृशीं विप्रकीर्णामवस्थामवबुद्ध्यैव तत्रभवान् यास्काचार्य आह—

शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते, विकारमस्यार्येषु भाषन्ते शव इति। दातिर्लवनार्थे प्राच्येषु दात्रमुदीच्येषु इति (निरुक्त २।२)।

अयमेव च सत्य ऐतिहासिको राद्धान्तस्तत्र भगवता पतञ्जलिना विस्तरेण-निदर्शितः। यथा—

एतस्मिंश्चातिमहति शब्दस्य प्रयोगविषये ते ते शब्दास्तत्र तत्र नियतविषया दृश्यन्ते। तद्यथा शवतिर्गतिकर्मा कम्बोजेष्वेव भाषितो भवति, विकार एनमार्या भाषन्ते शव इति। हम्मतिः सुराष्ट्रेषु, रंहतिः प्राच्यमगधेषु, गमिमेव त्वार्याः प्रयुञ्जते। दातिर्लवनार्थे प्राच्येषु, दात्रमुदीच्येषु इति (महाभाष्य १।१। आ० १)।

सत्येवं, संस्कृतभाषाया अतिसुविस्तृतं प्रयोगविषयमविज्ञाय देशविशेषेषु प्रयुज्यमानेषु साधुशब्देष्वपि प्राकृताद्यन्यभाषाशब्दत्वारोपणं साहसमात्रमेव।

## व्याख्याकारश्चन्नवीर कविः

काशकृत्स्नधातुपाठस्य या व्याख्योपलब्धा सा चन्नवीरकविकृता कर्नाटकभाषामयी वर्तते। इयं व्याख्याऽतीव संक्षिप्ता विद्यते। अत्र केवलं वर्तमानकालिकायाः क्रियायाः प्रथमपुरुषैकवचनमेवोदाह्रियते। कृदन्तेषु सन्ति तादृशा बहव

१. उन्दरशब्दस्य कच्छमच्छयोश्च साधुत्वं तत्र भवान् हेमचन्द्राचार्यः स्वीयोणादिवृत्ती दर्शयाञ्चकार।

२. क्षु० का० धा० १।२५०।

उदाहृताः शब्दाः, ये सम्प्रति वैयाकरणैरपाणिनीयत्वेनाभ्युपगम्यन्ते। अत्र प्रसङ्गात् काशकृत्स्नव्याकरणस्य बहूनि वचनान्युद्धृतानि। तत्र कानिचित् सूत्राणि, अपराणि सूत्रैकदेशभूतानि, अन्यानि अर्थानुवादरूपाणि सन्ति। सत्यप्येवमेभिर्वचनैः काशकृत्स्नव्याकरणस्य स्वरूपपरिज्ञाने महती सहायता सम्पद्यते।

व्याख्याकारस्य परिचयः—व्याख्याकृता चन्नवीरकविना स्वपरिचय एवमुट्टङ्कितः—

इति श्रीयागण्टिशरभलिङ्गप्रसादिततित्तिरियजुःशाखाध्ययनस्य वामदेवमुखोद्भूतस्य गजकर्णपुत्रस्य अत्रिगोत्रस्य वीरमाहेश्वरतन्त्रसूत्रस्य शिवलक्ष्मख्वनपण्डिताराध्यप्रवरस्य कोकिलाकुण्डस्य संगनगुरुलिङ्गनन्यम्बाकुमारस्य काशीकाण्डचन्नवीरकविकृतौ काशकृत्स्नधातुकर्नाटकटीकायाम् आत्मनेपदिनः। लेखकपाठकश्रोतॄणां संस्कृतार्थप्रकाशिका भूयात्। एवमन्यत्रापि।

एतेन ग्रन्थकर्तुः 'काशीकाण्ड-चन्नवीरकविः' नाम, अत्रिगोत्रम्, तैत्तिरीया शाखा, सह्याद्रिमण्डलवर्ति काण्टकापुरं निवासस्थानं चासीदिति विज्ञायते।

कालः—श्री आर० नरसिंहाचार्येण कर्नाटकीयकविचरित्रे चन्नवीरकवेः कालः १५०० क्रैस्तवाब्द इति सामान्येन निर्णीतः। वयं त्वनुमिनुमो यच्चन्नवीरकविरितो भूयान् प्राचीनः स्यात्। तत्रैते हेतवः—

१—'वल्ह मल्ह बिल्ह कल्ह प्राधान्यपरिभाषणहिंसादानेषु' (का. धा. १।५४४) इति धातुसूत्रव्याख्याने चन्नवीरकविः बिल्हणः—मल्हणस्य मातुलः इत्येवं बिल्हणमल्हणौ कवी स्मरति। परन्तु तत्रैवसूत्रे 'कल्ह' धातुव्याख्याने कल्हणनामानं राजतरङ्गिणीकारं विश्रुततमं कविं न स्मरति। तस्यास्मरणे कारणद्वयं सम्भवति। प्रथमं तावत् चन्नवीरकविर्बिल्हणादौत्तरकालिकः कल्हणाच्च पौर्वकालिकः स्यात्। बिल्हणस्य कालः सामान्यरूपेण वैक्रमाब्दस्यैकादशशत्याः पूर्वार्धः, कल्हणस्य च तस्या एव शताब्द्या उत्तरार्धं इति ऐतिह्यविदो वदन्ति। द्वितीयं कारणमेतत् संभवति, यदयं बिल्हणकविः दक्षिणदेशं गत्वा चालुक्यवंशप्रभवस्य षष्ठविक्रमादित्यस्य सभ्यो बभूव, अतोऽयं दक्षिणदेशे यथा लब्धकीर्तिरासीन्न तथा कल्हणः। मल्हणोऽपि मातुलेन सहैव दक्षिणदेशं गतः स्यात्। अतश्चन्नवीरकविना बिल्हणमल्हणयोर्निर्देशोऽकारि न कल्हणस्य। अनयोः कारणयोर्मध्ये द्वितीयमेव कारणं कल्हणस्यानिर्देशे सम्भवतीति वयमनुमिनुमः। सत्यपि तथा कल्हणसदृशस्य महाकवेर्यशःपताका शतकत्रयं यावच्च दक्षिणदेशं

प्रसूतवतीति न वयं विश्वसितुं शक्नुमः। अतोऽस्मन्मते चन्नवीरकविर्विक्रमस्य चतुर्दशशत्याः प्राचीनो वर्तते।

२—चन्नवीरकविः स्वीये धातुव्याख्याने बहुत्र तादृशान् धात्वर्थान् निर्दिशति ये सायणाचार्यकृताया माधवीयधातुवृत्तेरत्यन्तं वैभिन्न्यं भजन्ते। इदं वैभिन्न्यं चन्नवीरकवेः सायणाचार्यात् प्रत्नत्वं द्योतयति। सायणाचार्यस्य च कालः १३७२ वैक्रमाब्दात् १४४४ वैक्रमाब्दं यावद् वर्तते।[1] सायणाचार्येण धातुवृत्त रचना १४१५-१४२० वैक्रमाब्देषु कदाचित् कृता।[1] अतोऽयं चन्नवीर कविः १४०० वैक्रमाब्दात् पूर्वभावी संभवति।

३—अयं चन्नवीरकविः स्वीयटीकायां बहूनां कृदन्तानां पदानां तादृशान् अर्थान् उपन्यस्यति, ये लोके लब्धप्रचारा न विद्यन्ते। तद्यथा—

विषम्—जलम् ( २।८१, पृष्ठ १३२ )।
" " ( ८।४५, पृष्ठ १८६ )।
वनम्—जलम् ( ७।१५, पृष्ठ १७८ )।
कुशम्—जलम् ( ३।५६, पृष्ठ १४२ )।
घृणा—करुणा ( ७।९, पृष्ठ १७७ )।
क्षयः—गृहम् ( ५।१७, पृष्ठ १५८ )।

अत्राद्यानां त्रयाणां पदानां लोकेऽप्रसिद्धो जलरूपोऽर्थो निर्दिष्टः। तत्र प्रथमद्वितीये पदे यास्कीयनिघण्टौ ( १।१२ ) जलनामसु पठिते। तृतीयं पदं यद्यपि यास्कीये निघण्टौ न पठ्यते, तथापि वेङ्कटमाधवविरचितायां नामानुक्रमण्यां जलनामसूपलभ्यते[2]। घृणा-पदं करुणार्थे महाभारतादिषु बहुत्रोपलभ्यते[3]। एवं क्षय शब्दोऽपि गृहार्थे प्रायेण वेद एव प्रयुज्यते ( क्वचिन्महाभारतेऽपि दृश्यते, द्र० शां० १६८।३२ )।

एतैरुदाहरणैरपीदमेव प्रतीयते यदयं कर्नाटकवृत्तिकारश्चन्नवीरकविः क्रैस्तवाब्दस्य पञ्चदशशत्याः प्राचीन एव। वयं त्वनुमिनुमो यदस्य कवेः कालस्त्रयोदशी वैक्रमशती स्यात्।

---

१. सं० व्या० शास्त्र का इतिहास भाग २ पृष्ठ ९१।

२. ऋग्वेदानुक्रमणी, माधवभट्टकृता, पङ्क्तिसंख्या १०७, पृष्ठ C X X X VI, मद्रास संस्क०।

३. द्र० महा० शान्ति ७९।१८—अहिंसा सत्यवचनमानृशंस्यं दमो घृणा। घृणा अस्यास्तीति घृणी=करुणावान्=दयालुः। द्र० महाभारत शान्ति० १।१९—घृणी दाता यतव्रतः।

चन्नवीरकवेरन्याः कृतयः—कर्नाटकटीकासम्पादकेन चन्नवीरकवेरिमा अन्याः कृतयः समुल्लिखिताः—

१—सारस्वतव्याकरणस्य टीका ।

२—पुरुषसूक्तस्य टीका ।

३—नमकचमकाध्यायस्य व्याख्या ।

एषु पुरुषसूक्तस्य टीका १९०९ क्रैस्तवाब्दे प्राकाश्यं गता । तत्रारम्भे

श्रीचन्नवीरमाहेश्वरविरचितकर्नाटकटीकासमेतं पुरुषसूक्तम् ।

इत्येवं निर्देशो वर्तते । अन्ते च—

इति सह्याद्रिकेळदीषड्देशकुण्टिकापुरस्य काशीकाण्डचन्नवीरमाहेश्वरेण कृता पुरुषसूक्तस्य टीका समाप्ता ।

कर्नाटकटीकायाः सम्पादकेन पुरुषसूक्तटीकायाः काशकृत्स्नधातुपाठटीकायाश्च विरचयिता एक एव चन्नवीरकविरिति महता विस्तरेण प्रत्यपादि तत्त्त एव द्रष्टव्यम् ।

कर्नाटकटीकाया वैशिष्ट्यम्—यद्यपि चन्नवीरकविविरचिता कर्नाटकटीकाऽत्यन्तं संक्षिप्ता वर्तते, तथाऽप्यत्र बहुविधं वैशिष्ट्यमुपलभ्यते । तद्यथा—

१—धातुसूत्रे निर्दिष्टानां धात्वर्थानां बहुत्र तादृशार्थव्याख्यानमुपलभ्यते यल्लोके न तादृग्रूपेण प्रसिद्धम् ।

२—कृदन्तानामनेकेषां पदानां तादृगर्थः प्रतिपाद्यते यो लोके नास्ति प्रसिद्धः ।

३—कृदन्तप्रयोगनिर्देशेऽपि तादृशानि बहूनि पदानि निर्दिश्यन्ते यानि पाणिनीयव्याकरणानुसारं साधुत्वं न भजन्ते ।

४—उपसपादशतं काशकृत्स्नीयानां सूत्राणां सूत्रांशानां वाऽत्र निर्देशः समुपलभ्यते ।

एवमन्यविधमपि वैशिष्ट्यं तत्र तत्रोपलभ्यते । एतद्विषयेऽस्माभिः प्रायेण-सर्वत्र यथास्थानं काशकृत्स्नधातुव्याख्याने टिप्पणीषु निर्देशोऽकारि, तत्सर्वं तत एव द्रष्टव्यम् ।

## कर्नाटकटीकायाः संस्कृतरूपान्तरम्

काशकृत्स्नधातुपाठस्य चन्नवीरकविकृता कर्नाटकटीका उपष्टादशवर्षात् पूर्वं प्राकाश्यं गता । प्रथममियं टीकैव कर्नाटकभाषामयी, तत्रापि चास्याः कर्नाटक-

लिप्यां प्रकाशनं माहशाय जिज्ञासवे दग्धस्योपरि स्फोटकमिव संवृत्तम् । अतो मया ऽस्योपयोगं ग्रहीतुमक्षमेणैकवर्षाभ्यन्तर एव पादोनशतद्वयं रूप्याणि व्ययीकृत्य काशीस्थहिन्दुविश्वविद्यालये एम० ए० कक्षायामधीयानाभ्यां 'यस् ईश्वरभट्ट' एवं 'मूर्ति' ( अर्धमेवैतन्नाम ) नामकाभ्यां कर्नाटकदेशीयाभ्यामस्य संस्कृतांशस्य नागराक्षरेषु प्रतिलिपिः, कर्नाटकभाषांशस्य हिन्दीभाषायाम् अनुवादश्च कारितः । तत्साहाय्येन ग्रन्थमिममधीत्य नितान्तं मे परितुष्टं स्वान्तम्, व्याकरणशास्त्रे च नवीनोपलब्धिरुपलब्धा ।

तस्मादेव च कालादस्यातिमहनीयस्य ग्रन्थस्य संस्कृतरूपान्तरविधानाय महती मदीयेच्छाऽऽसीत्, परन्तु कर्नाटकभाषानभिज्ञत्वान्नाहं स्वयं तत्र प्रवृत्तः । कश्चित् कर्नाटकभाषाभिज्ञोऽत्र प्रवृत्तिं विधास्यतीति विश्वास एव द्वादशवर्ष-रूपो महान् कालो व्यतीतः । परन्त्वेतस्मिन्महति कालेऽपि न केनापि कर्नाटक-भाषाभिज्ञेनात्र प्रयत्नो व्यधायि ।

पूर्वनिर्दिष्टयोर् 'मूर्ति-यस् ईश्वरभट्टयोर्' एकतरो यद्यपि प्राचीनकर्नाटक-भाषाविशेषज्ञ आसीत्, तथापि ताभ्यां कृतेऽनुवादेऽनेकत्र संदेहो विद्यते । अपि च बहुत्र संस्कृतपदस्य कर्नाटकभाषायां प्रतिपादितस्य शब्दार्थस्य हिन्दीभाषानु-वादोऽपि ताभ्यां सन्देहान्नैव विहितः । एतादृशेन सदोषानुवादसाहाय्येन चन्नवीर-कविकृतायाः कर्नाटकव्याख्यायाः संस्कृतरूपान्तरविधानमतिसाहसिकं कर्म । अनेनातिसाहसिकेन प्रयासेनाहं विदुषां समाज उपहसतां गमिष्यामीति जानन्नपि ग्रन्थस्यास्य गौरवेणास्मिन् कर्मणि प्रवृत्तः । आशासे ममायोग्यस्य चापल्यमिदं क्षंस्यन्ते तत्रभवन्तो विद्वान्सो महानुभागाः ।

भारतीय-प्राच्यविद्या-प्रतिष्ठानम्
३१।१४४ अलवरद्वार, अजमेर

विदुषां वशंवदः—
युधिष्ठिरो मीमांसकः

# काशकृत्स्न-व्याकरणम्

## युधिष्ठिर-मीमांसक-विरचितया व्याख्यया सहितम्

काशकृत्स्नव्याकरणस्य केवलं धातुपाठ एव समग्र उपलब्धः। तस्य शब्दानुशासनम्, तदीया अन्ये खिलाश्च नाद्य यावद् उपलब्धिं गताः।

काशकृत्स्नशब्दानुशासनस्य द्वे सूत्रे भर्तृहरिणा वाक्यपदीयागमकाण्डस्य स्वोपज्ञविवरण उद्धृते[1]। अन्ये द्वे सूत्रे महाभाष्यव्याख्यात्रा कैयटेन स्वीये महाभाष्यप्रदीपे निर्दिष्टे[1]। एकं काशकृत्स्नमतं क्षीरस्वामिना क्षीरतरङ्गिण्यां स्मृतमुपलभ्यते[1]। चन्नवीरकविकृतकाशकृत्स्नधातुव्याख्यानस्योपलब्धेः प्राक् केवलमेतावन्मात्रमेव काशकृत्स्नव्याकरणसम्बन्धि ज्ञानमस्माकमासीत्, परन्तु चन्नवीरकविकृतधातुव्याख्याने उपत्रिंशदुत्तरशतं सूत्राणि, सूत्रांशाः, सूत्राणामर्थतोऽनुवादरूपाणि वचनानि चोपलब्धानि। तेषां साहाय्येन काशकृत्स्नीयव्याकरणविषयकं विस्तृतं विज्ञानमजायत।

अधुनाऽस्माभिः सर्वेषामपि काशकृत्स्नीयानां सूत्राणां, सूत्रांशानां, तन्मतनिदर्शकवचनानां च विस्तृतं व्याख्यानमिह प्रस्तूयते। संदिग्धेषु स्थलेषु विशिष्टं विवेचनमपि यथास्थानं विधास्यते।

### भर्तृहरिणा उद्धृते सूत्रे—

**१—धातौ साधने दिशि पुरुषे चिति तदाख्यातम्[2]।**

**अर्थः**—धातुः = क्रिया भावश्च[3], साधनम् = कर्त्रादयः कारकाः, दिक् = कालः, पुरुषः = युष्मदस्मदादिः, चित् = संख्याः, एष्वर्थेषु यच्छब्दरूपं वर्तते तदाख्यातमित्युच्यते।

**विवरणम्**—आख्यातस्य = तिङन्तस्य पदस्योच्चारणे सति क्रियायाः,

---

१. द्रष्टव्यमग्रे सूत्रव्याख्याने तथास्थानं क्रियमाणं निदर्शनम्।

२. सूत्रमिदं भर्तृहरिणा ब्रह्मकाण्डस्य स्वोपज्ञविवरण उद्धृतम् ( वाक्यपदीय ब्रह्मकाण्ड लाहौर सं०, पृष्ठ ४० )। एतत्सूत्रं काशकृत्स्नाचार्यस्येत्यत्र टीकाकारो वृषभदेवः प्रमाणम्। ( द्र० तस्यैव ग्रन्थस्य ४१ तमे पृष्ठे )।

३. कातन्त्रव्याकरणे 'क्रियाभावो धातुः' ( ३।३।९ ) इति धातुलक्षणमुपलभ्यते। कातन्त्रं काशकृत्स्नस्य संक्षिप्तं संस्करणमित्युक्तं पुरस्तात्।

कर्तृकर्मणोः कारकयोः, वर्तमानादिकालानां, युष्मदादिपुरुषाणां, एकत्वादि-संख्यानां च बोधो जायते। यथा 'पचसि' इत्येकस्यैव पदस्य श्रवणेन श्रोता पाकक्रियां, कर्तृकारकम्, युष्मत्पुरुषम्, वर्तमानकालम्, कर्तृगतामेकसंख्यां च प्रतिपद्यते। एवमेवान्येष्वप्याख्यातप्रयोगेषु यथायथं बोध उपजायते। अत आख्यातपदमेतेषां विविधानामर्थानां वाचक इत्युच्यते।

भरतनाट्यशास्त्रेऽप्याख्यातस्य प्रायेणैतादृगेवलक्षणं निर्दिश्यते। तद्यथा—

..................क्रियाकृतं प्रथितसाध्यम्।[1]
वचनं नामसमेतं पुरुषविभक्तं तदाख्यातम्॥[2]

यद्यप्यत्र नाट्यशास्त्रे पाठभ्रंशः प्रक्षेपादयो दोषाश्चोपलभ्यन्ते (नामलक्षणमिह नष्टमिति स्पष्टं प्रतिभाति) तथापि यथाऽभिनवगुप्तस्वीकृतः पाठस्तथाऽऽख्यात-लक्षणमिह स्पष्टम्। भरतलक्षणस्यायं भावः—

क्रियाकृतम् = भूतादिकालः, प्रथितसाध्यम् = क्रिया = धात्वर्थः, वचनम् = संख्या, नामसमेतम् = कारकसमेतम् = साधनयुतम्, पुरुषविभक्तम् = युष्मदस्मदादिविभागसहितं यत् तदाख्यातं ज्ञेयम्।

भरतनाट्यशास्त्रस्था अनेके व्याकरणविषयका निर्देशाः कातन्त्रव्याकरणेन सह साम्यं वहन्ति। कातन्त्रं च काशकृत्स्नतन्त्रस्य संक्षिप्तं संस्करणमिति पुरस्ताद् विस्तरेण प्रतिपादितम्, अतः काशकृत्स्नव्याकरणेन सह भरतीयाख्यातलक्षणस्य साम्यं स्वाभाविकमेव।

पाठविषयिका टिप्पणी—भर्तृहरेः स्वोपज्ञविवरणे सूत्रस्य 'धातुः साधने......' पाठ उपलभ्यते स प्रामादिकः, एवं वृषभदेवीया व्याख्याऽपि चिन्त्या। उभयोर्विषयेऽग्रिमसूत्रस्य पाठविषयिका टिप्पणी द्रष्टव्या।

## २—लिङ्गं किमि [चि]ति विभक्तौ एतन्नाम।[3]

अर्थः—लिङ्गम् = प्रातिपदिकम्,[4] किम् = स्त्रीत्वादिकम्, चित् = संख्या,

---

१. द्र० नाट्यशास्त्र बड़ौदा सं०, भाग २, पृ० २३१। अयं पाठोऽभिनवगुप्तकृत टीकानुसारी वर्तते।

२. नाट्यशास्त्र १४।२९। अत्र पूर्वभागस्यानेन भागेन सह संगतिर्ज्ञेया। बड़ौदासंस्करणे [ ] कोष्ठके पाठ्यमानो भूयान् पाठोऽप्रासङ्गिकः।

३. इदमपि सूत्रं वाक्यपदीयस्य ब्रह्मकाण्डस्य स्वोपज्ञविवरण उद्धृतम्, वृषभदेववचनानुसारं चैतद् काशकृत्स्नसूत्रम् (द्र०–लाहौर सं० पृष्ठ ४०, ४१)।

४. धातुविभक्तिवर्जमर्थवल्लिङ्गम् (२।१।१) इति कातन्त्रसूत्रम्, अर्थवदधातुरप्रत्ययः प्रातिपदिकमिति (१।२।४५) इति पाणिनीयं सूत्रम्।

विभक्तिः = कर्मादिकारकम् । एष्वर्थेषु यच्छन्दरूपं वर्तते तन्नाम इत्युच्यते ।

विवरणम्—नामपदस्योच्चारणेन प्रातिपदिकार्थस्य, स्त्रीपुंनपुंसकानां, एकत्वादिसंख्यायाः कर्मादीनां कारकाणां च बोधो जायते । यथा बालकम् इत्येकस्यैव पदस्योच्चारणेन श्रोता बालकत्वं पुंस्त्वं संख्यैकत्वं कर्मत्वं चावबुध्यते । एवं बालिकाम् इत्यस्योच्चारणेन पुंस्त्वस्थाने स्त्रीत्वस्य विशिष्टो बोधो भवति । एवं सर्वत्र विज्ञेयम् ।

भरतनाट्यशास्त्रे चतुर्दशाध्याये पाठभ्रंशान्नामलक्षणं नष्टमिति प्रतिभाति ।

पाठविषयिका टिप्पणी—भर्तृहरेः स्वोपज्ञविवरणे 'लिङ्गम्' इति मुद्रितः पाठ उपलभ्यते । परन्तु वृषभदेवीयटीकायाम् 'लिङ्गे इति' प्रतीकग्रहणे शुद्धः पाठो दृश्यते । इत्थमेव स्वोपज्ञविवरणे किमिति पाठो मुद्रितः सम्पादकेन । हस्तलेखे तु किति पाठो वर्तते । वृषभदेवीयटीकायां 'किमिति' अशुद्धप्रतीक-निर्देशेन सम्पादकोऽत्र भ्रान्तः । टीकाकारः प्रतिपदमितिना निर्दिशति । यथा—दिशीति चितीति । एवमिहापि किमीति शुद्धेन पाठेन भाव्यम् । तथा सति सूत्रे 'किम्' शब्दस्य सप्तम्यां किमि-रूपेण भाव्यम् । अस्यैव च संकेतः हस्त-लेखस्थेन किति इत्यशुद्धेन पाठेनोपलभ्यते । चिति पदम् सूत्रे त्रुटितं वा स्यात् पूर्वसूत्रेणानुवर्त्यमानं वा स्यात् ।

यथात्र सूत्रे वृषभदेवीयटीकानुसारं लिङ्गे इति सप्तम्यन्तः पाठो शुद्धः, एवं पूर्वसूत्रेऽपि धातौ इति सप्तम्यन्तेन शुद्धेन पाठेन भाव्यम् ।

वृषभदेवीया व्याख्याऽशुद्धा—वृषभदेवेनैतत्सूत्रव्याख्याने लिङ्ग-पदेन स्त्रीपुंस्त्वादयः, किम्-पदेन एकत्वादिसंख्या च गृहीता । इदं व्याख्यानं वृषभ-देवस्याज्ञानविजृम्भितं ज्ञेयम् । यतः पूर्वाचार्या लिङ्गपदेन तमेवार्थवच्छब्दरूपं निर्दिशन्ति यं पाणिनीयाः प्रातिपदिकनाम्ना स्मरन्ति । काशकृत्स्नस्य संक्षिप्ते संस्करणे कातन्त्रे लिङ्गस्य लक्षणम्—धातुविभक्तिवर्जमर्थवल्लिङ्गम् ( २।१।१ ) इत्युपलभ्यते । इयमेव च लिङ्गसंज्ञा भरतनाट्यशास्त्रेऽप्युपलभ्यते । यथा—

एकस्य बहूनां वा धातोर्लिङ्गस्य वा पदानाम् ।

अस्यैव भरतवचनस्य व्याख्यानेऽभिनवगुप्तेन अर्थवल्लिङ्गमिति कातन्त्र-सूत्रस्यैकदेश उद्धृतः ( काशकृत्स्नलक्षणस्य वैकदेशोऽपि संभवति ) ।

एतेन लिङ्गपदस्य वृषभदेवीयं व्याख्यानं चिन्त्यमिति स्पष्टं भवति । अपि च वृषभदेवेन पूर्वसूत्रव्याख्याने संख्यारूपोऽर्थः चित्पदस्य प्रतिपादितः, इह किम्पदस्य सोऽर्थः प्रतिज्ञातः । अयं स्ववचनविरोधोऽपि तस्य दर्शनार्ह एव ।

पूर्वाचार्याणां लिङ्गसंज्ञाऽपरिज्ञानादिह वृषभदेवो भ्रान्तः स्यादिति प्रतिभाति। इत्यलमतिविस्तरेण॥

**कैयटेनाद्धृते सूत्रे—**

### ३—प्रत्ययोत्तरपदयोः।[1]

अर्थः—[ तद्धित ] प्रत्ययविषये उत्तरपदे च परतः संख्यावाचिपदं समानाधिकरणेन पदेन सह समस्यते, स च द्विगुसंज्ञो भवति।

टिप्पणी—पूर्वनिर्दिष्टोऽर्थः पातञ्जलमहाभाष्यं कैयटविरचितं प्रदीपं चानुसृत्य निर्दिष्टः। भाष्यकृता कैयटेन च सूत्रमिदं तद्धितार्थोत्तरपदसमाहारे च (२।१।५१) सूत्रस्य भाष्ये समुद्धृतः। तस्मात् काशकृत्स्नीयं प्रत्ययोत्तरपदयोः सूत्रं समासविधायकं, न तु केवलं द्विगुसंज्ञाविधायकम्। अत्रेदमपि सम्भवति यत् पतञ्जलिना कैयटेन च काशकृत्स्नसूत्रस्य तावानेवांशो निर्दिष्टः स्याद् यावद् विचारार्हः स्यात्। तथा सति काशकृत्स्नीयं कृत्स्नं सूत्रम् प्रत्ययोत्तरपदसमाहारेषु इति स्यात्।

### ४—शताच्च ठन्यतावग्रन्थे।[2]

अर्थः—शतशब्दात् क्रीताद्यर्थेषु ठन् यच्च प्रत्ययौ भवतः, अग्रन्थे वाच्ये। उदाहरणम्—शतेन क्रीतं वस्त्रम्—शत्यं शतिकं वा। अग्रन्थ इति किम्—शतसंख्यायाः परिमाणमस्य निदानग्रन्थस्य इति शतकं निदानम्। इह ठन्यतौ न भवतः।

विवरणम्—पाणिनेः सूत्रमस्ति—शताच्च ठन्यतावशते (५।१।२१)। अस्यायमर्थः—शतप्रातिपदिकात् क्रीताद्यर्थेष्वर्हपर्यन्तेषु ठन्यतौ प्रत्ययौ भवतः, शतं चेद् वाच्यं न भवति। उदाहरणं पूर्ववत्। अशते ग्रहणात् शतसंख्यायां गम्यमानायां ठन्यतौ न भवतः। शतसंख्या च द्विविधा वाच्या भवति—स्वविषयिका अन्यविषयिका च। स्वविषयिका यथा—शतकं निदानम्। इह

---

१. कैयटः 'तद्धितार्थोत्तरपदसमाहारे च' (२।१।५१) सूत्रस्य महाभाष्यप्रदीपे "काशकृत्स्नस्य 'प्रत्ययोत्तरपदयोः' इति सूत्रम्" इत्याह।

२. कैयटः 'शताच्चठन्यतावशते' (५।१।२१) सूत्रस्य महाभाष्यप्रदीपे "आपिशलकाशकृत्स्नयोस्तु 'अग्रन्थे' इति वचनात्" इत्याह। अत्र कैयटेनापिशलकाशकृत्स्नसूत्रस्य तावानेवांश उद्धृतो यावान् पाणिनीयात् सूत्राद् भिद्यते। अतोऽस्माभिः शेषांशेन सह कृत्स्नसूत्रनिर्देशो व्यधायि।

निदानग्रन्थान्तर्गतानां शतसंख्यापरिमितानामध्यायानां शतकम् शब्देन बोधो भवति। अन्यविषयिका यथा—शत्यं शतिकं वा शाटकशतम्। इह शत्यम्—शतिकम् इत्येताभ्यां पदाभ्यां शतशाटकानां शतं रूप्याणि मूल्यमित्येतावानर्थो गम्यते, न तु शाटकानां शतं परिमाणं द्योत्यते। अत एव शाटकानां परिमाणद्योतनाय शाटकेन सह 'शतम्' इति पदमुच्चार्यते। पाणिनीये सूत्रे 'अशते' इत्ययं प्रतिषेधः स्वविषयिकां शतसंख्यां प्रतिषेधति, अन्यविषयिकां वेति स्पष्टीकरणाय कात्यायनेन वार्तिकमारब्धम्—शतप्रतिषेधेऽन्यशतत्वेऽप्रतिषेधः। एतेन स्वविषयिका शतसंख्या यदा वाच्या भवति तदैवाशते इति प्रतिषेधः प्रवर्तते। यथा—शतकं निदानम्। यदा तु अन्यविषयिका शतसंख्या पदान्तरादिनाऽवगम्यते तदाऽशते इति प्रतिषेधो न प्रवर्तते। यथा—शत्यं शतिकं वा शाटकशतम्।

सूत्रभेदस्य लक्ष्येषु प्रभावः—यद्यपि यथोपरि व्याख्यातं तथा शतकं निदानम्, शत्यं शतिकं वा शाटकशतम् लक्ष्येषु भेदो न भवति, तथापि यथा पाणिनीयं सूत्रं तथा शतं परिमाणमस्य गोसंघस्य इत्यत्र शत्यः शतिको वा गोसंघः इति प्रयोगो नोपपद्यते। यतः शत्यशतिकशब्दाभ्यां संघनिष्ठा स्वविषयिका शतसंख्यावद्योत्यते। यथा तु आपिशलीयं काशकृत्स्नीयं च सूत्रं तथा ग्रन्थे वाच्य एव ठन्यतौ प्रतिषिध्येते, न तु ततोऽन्यत्र। तेन 'शतं परिमाणमस्य गोसंघस्य' इत्यत्रापि शत्यः शतिको वा गोसंघः इति प्रयोग उपपद्यते।

प्रयोगभेदस्य समाधानम्—वैयाकरणाः नित्याः शब्दा इति संगिरन्त इति सार्वजनीना प्रसिद्धिः। तथा सति न व्याकरणनियमैः शब्दभेदः संभवति, नित्यत्वविरोधात्। तस्मात् यत्र यत्र व्याकरणान्तरनियमैः शब्दभेदप्रतीतिर्भवति तत्र देशभेदात् कालभेदाद् वा व्यवस्था स्वीक्रियते। देशभेदाद् यथा—इञः प्राचाम् ( २।४।६० ) इति पाणिनीयसूत्रेण प्राग्गोत्रे इञन्ताद्युवप्रत्ययस्य लोप उच्यते, तेन प्राग्गोत्रे वाच्ये 'पान्नागारिः पिता पान्नागारिः पुत्रः' इत्यत्र यञिञोश्च ( ४।१।१०१ ) इत्यनेनोत्पन्नस्य फक्प्रत्ययस्य लुग् भवति, परन्तु उदीच्यगोत्रात् फक् श्रूयत एव। यथा—दाक्षिः पिता दाक्षायणः पुत्रः। यथा वा उदीचां वृद्धादगोत्रात् ( ४।१।१५७ ) इत्यनेन उदीच्यदेशीयानामाचार्याणां मतेन 'आम्रगुप्तायनिः नापितायनिः' इत्यत्र फिञ् भवति, अन्यदेशीयाणामाचार्याणां मते 'आम्रगुप्तिः नापितिः' इति इञ् एव भवति। तत्रोभयत्र देशभेदात् प्रयोगभेदे सत्यपि नैव स्वीक्रियते पारस्परिको विरोधः। एवं कालभेदादपि केचन शब्दा कदाचित् लोके लुप्तप्रचारा भवन्ति, त एव चान्यकाले पुनः प्रचारं लभन्ते। न तेन शब्दभेदः कल्प्यते वैयाकरणैः। एवं शत्यम् शतिकम् शतकम् प्रयोगाणां

विषयेऽप्यविरोधो द्रष्टव्यः। आपिशलिः काशकृत्स्नश्च पूर्वदेशीयौ पाणिनिस्तूदीच्यः। अतः आपिशलकाशकृत्स्नसूत्रानुसारं शतं परिमाणमस्य गोसंघस्य इत्यर्थे शत्यः शतिको वा गोसङ्घः इति प्रयोगः प्राच्यदेशेषु लब्धप्रचार आसीत्, पाणिनीय-सूत्रानुसारमुदीच्यदेशेषु एतस्मिन्नेवार्थे शतको गोसङ्घ इति प्रायुज्यत इति विज्ञेयः। तेन देशभेदादिह उभयथा शब्दव्यवस्था द्रष्टव्या, उभावपि प्रयोगौ साधू इति विज्ञेयम्।

क्षीरस्वामिनोद्धृतं मतम्—

५—[ श्वस प्राणने ] अस्य निष्ठायामनिट्त्वम्।[1]

काशकृत्स्नीयाः श्वस प्राणने इत्यस्य निष्ठायामनिट्त्वमामनन्ति। तेन आश्वस्तः विश्वस्तः इत्यत्र इण् न भवति।

## चन्नवीरकविनोद्धृतानि—

चन्नवीरकविना काशकृत्स्नधातुपाठस्य कर्नाटकटीकायां यानि काशकृत्स्न-वचनानि ( सूत्राणि, सूत्रांशभूतानि, अर्थतोऽनुवादरूपाणि वा ) उद्धृतानि तानीह व्याख्यायन्ते। चन्नवीरकविना कानिचित् समानार्थकानि वचनानि एकाधि-कस्थलेषुद्धृतानि, तानीह एकत्र संगृह्य व्याख्यायन्ते।

६—धातोः क्विप्।[2]

क्विविणौ सर्वधातुभ्यः।[3]

प्रथमस्यार्थः—धातोः क्विप् प्रत्ययो भवति। यथा—भू + क्विप्। क्विपः सर्वस्य लोपे 'भूः', एवं चिती संज्ञाने ( का० धा० १।२ ) इत्यस्य चित्।

द्वितीयस्यार्थः—सर्वधातुभ्यः क्विप् विण् च प्रत्ययो भवति। क्विपो विणश्चो-भयोः सर्वस्य लोपो भवति।[4] विणि णित्वाद् वृद्धिर्भवति।[5] क्विपः—पाः, दाः, सोः, हृत्, कृत्, जित्।[6] विणः—वाक्, माक्, वात्, गात्।[6]

---

१. काशकृत्स्ना श्वस ( श्वस प्राणन इत्यस्य ) निष्ठायामनिट्त्वमाहुः। क्षीरतरङ्गिणी २।६६; पृष्ठ १८५, पं० ५। २. का० धातुव्याख्याने १।२; ५ पञ्चमे पृष्ठ उद्धृतम्।

३. का० धा० व्या० ६।२२; १७५ तमे पृष्ठ उद्धृतम्। प्रत्ययस्य पूर्वनिर्देशप्रयोजनं पूर्वं ( पृ० १७ संदर्भे ३ ) व्याख्यातम्।

४. द्र०—अपृक्त एकवर्णः प्रत्ययः—एकवर्णः प्रत्ययः धातोरुत्पन्नः स्वार्थं प्रदाय लुप्यते ( का० धा० व्या० ६।२२; १७५ पृष्ठे )।

५. द्र०—वृद्धिरादौ सणे ( का० धा० व्या० ९। २१९ तमे पृष्ठे )।

६. इमान्युदाहरणानि का० धा० व्या० ६। २२; १७५ तमे पृष्ठ उद्धृतानि।

टिप्पणी—( १ ) पूर्वनिर्दिष्टयोः सूत्रपाठयोर्मध्येऽन्तिमः सूत्रस्य पाठः, प्रथमस्तस्यैवैकदेशो ज्ञेयः ।

( २ ) पञ्चपाद्युणादिसूत्राणां प्राच्यपाठे[1] ये प्रत्ययाः सर्वधातुभ्य इष्यन्ते तद्विधायकेषु सूत्रेषु 'सर्वधातुभ्यः' पदमुपादीयते । यथा—सर्वधातुभ्यष्ट्रन्,[2] सर्वधातुभ्योऽसुन्[3]; सर्वधातुभ्य इन्[4] इति ।

( ३ ) क्विब्विणौ सर्वधातुभ्यः—इत्यनुष्टुभ एकं चरणम् । पद्यानुरोधेनैव प्रत्यययोः पूर्वनिर्देशः । एवमन्यत्रापि ज्ञेयम् ।

( ४ ) 'सोः' रूपमिदं षो अन्तकर्मणि ( का० धा० ३।२१ ) इत्यस्य क्विप्युद्धृतम् । पाणिनीयनियमानुसारं त्वत्र आदेच उपदेशेऽशिति ( अष्टा० ६।१।४५ ) इत्यनेनात्त्वेन भाव्यम् । परन्तु काशकृत्स्नधातुपाठस्य कर्णाटकवृत्तौ शो तनूकरणे ( का० धा० ३।१९ ) इत्यस्य क्विपि शोः, छो छेदने ( का० धा० ३।२० ) इत्यस्य छोः, षो अन्तकर्मणि ( का० धा० ३।२१ ) इत्यस्य च सोः रूपं स्पष्टमुल्लिख्यते । तेन ज्ञायते काशकृत्स्नमते ओकारान्तानां धातूनां क्विपि आकारादेशो न भवति । काशकृत्स्नस्य सन्ध्यक्षराणामाकारः ( क्रमिक संख्या २६) इति सूत्रम् अग्रे व्याख्यास्यते, तद्विकरणपर आत्वं शास्ति । यथा—ग्लायति म्लायति । विशेषस्तत्रैव द्रष्टव्यः ।

( ५ ) 'वाक् भाक् वात् गात्' एते विण्-प्रत्ययान्ताः । णित्त्वाद् वृद्धिरादौ सणे ( क्रमिक संख्या १२६ ) इत्यनेन वृद्धिः । 'वाक्' शब्दः पाणिनीयव्याकरणानुसारं क्विब्वचिप्रच्छि ( ३।२।१०८ ) इत्यनेन वार्तिकेन क्विपि धात्वचो दीर्घत्वे निष्पद्यते । 'भाक्' प्रयोगस्तु भजो ण्विः ( ३।२।६२ ) इत्यनेन ण्विप्रत्यये णित्त्वादुपधावृद्धौ संपद्यते । 'वात् गात्' उदाहरणे काशकृत्स्नमते वद-गदधात्वोर्ज्ञेये । पाणिनीयमतेऽपि 'ण्विः' इति योगविभागेनाञ्जसा साधयितुं शक्येते ।

## ७—अनुनासिकोऽनुषङ्गः ।[5]

अर्थः—धातुप्रत्यययोरनुनासिकोऽर्थात् पञ्चमो वर्णोऽनुषङ्गसंज्ञो भवति ।

---

१. उणादिसूत्राणां प्राच्योदीच्यदाक्षिणात्यपाठानां विषयेऽस्मत्कृते 'सं० व्या० शास्त्र का इतिहास' नाम्नि ग्रन्थे २४ तमेऽध्याये ( भाग २, पृष्ठ १७८, १७९ ) द्रष्टव्यम् ।

२. उज्ज्वलदत्तीयोणादिवृत्ति ४।१५८॥ ३. उज्ज्वलदत्तीयोणादिवृत्तिः ४।१८८॥

४. उज्ज्वलदत्तीयोणादिवृत्ति ४।११७॥ अमरटीकासर्वस्वे, (भाग १, पृष्ठ ४२) 'इन् सर्वधातुभ्यः' इत्येवं प्रकारेणोद्धृतः ।

५. का० धा० व्या० १ । ६; ५ मे पृष्ठे, ५१४; १५६ तमे पृष्ठे चोद्धृतम् ।

टिप्पणी—(१) अनुनासिकसंज्ञा वर्गीयपञ्चमवर्णानां ज्ञेया। तथा च कातन्त्रीयं सूत्रम्—अनुनासिका ङञणनमाः (१।१।१३)।

(२) अनुषङ्गसंज्ञायाः फलमग्रिमसूत्रे वक्ष्यते। इयमनुषङ्गसंज्ञा कातन्त्रेऽपि व्यवह्रियते। यथा—अनिदनुबन्धानामगुणेऽनुषङ्गलोपः (३।८।१)।

## ८—अनुषङ्गस्य लोपः।[1]

अर्थः—अनुषङ्गसंज्ञकस्य लोपः—अदर्शनं भवति। यथा—मन्थ—मथ्यते।

टिप्पणी—(१) सूत्रमिदं चन्नवीरकविना भ्रस्जो पाके (का० धा० ५।४) इति धातुसूत्र-व्याख्यानेऽप्युद्धृतम्, परन्तु भ्रस्जधातौ न कश्चित् पञ्चमो वर्णः, यस्य लोपः स्यात्। चन्नवीरकविना त्विदं सूत्रमुपन्यस्य भ्रजति भ्रजनम् भ्रजनीयम् इत्यादयः प्रयोगा निर्दिष्टाः, तेन सकारस्य लोप इष्ट इति प्रतीयते। परन्तु सकारस्यानुषङ्गसंज्ञाविधायकं वचनं नोपन्यस्यते। एतेन काशकृत्स्न-धातुपाठे भस्जो पाके इति पाठः शक्यते कल्पयितुम्, परन्तु तथा सति भ्रष्टः भ्रष्टवान् इत्यादयस्तत्रैव निर्दिष्टाः प्रयोगा नोपपद्येरन्। किमत्र तत्त्वमिति देवा एव ज्ञातुमर्हन्ति।

(२) अत्र अनुषङ्गलोपोऽनुनासिकानाम् (क्रमिक संख्या ४४) इति सूत्रमप्यवलोकनीयम्।

(३) कातन्त्रेऽप्यनुषङ्गस्य लोप उच्यते। तथा च सूत्रम्—अनिदनुबन्धानामगुणेऽनुषङ्गलोपः (कात० ३।८।१)।

## ९—इदनुबन्धान्नुः।[1]

अर्थः—इकारानुबन्धाद् धातोः 'नुः' भवति। यथा—कुथि—कुन्थति, इदि—इन्दति।

टिप्पणी—(१) 'नु' इत्यत्र उकारोऽनुबन्धः, आगमस्तु नकारमात्रः। अयं नु—आगमः कुत्र स्याद् इत्यस्य निर्देशकं सूत्रं कर्नाटकवृत्तौ नोपलभ्यते। परन्तु काशकृत्स्नसंक्षेपरूपे कातन्त्रे आगम उदनुबन्धः स्वरान्त्यात् परः (२।१।६) इत्यनेनान्त्यात् स्वरात् परो विधीयते। तथैव चोदाह्रियते कर्नाटक-वृत्तौ।

---

१. का० धा० व्या० १। ६; ५ में पृष्ठ उद्धृतम्।

१. का० धा० व्या० १।७; ५ में पृष्ठ उद्धृतम्।

( २ ) कातन्त्रेऽप्यनुबन्धसंज्ञा प्रयुज्यते। तस्या अप्रयोगो (=लोपो) विधीयते। तथा च सूत्रम्—योऽनुबन्धोऽप्रयोगी (३।८।३१)। पाणिनीयैस्तु इत्संज्ञा विधीयते तस्य च लोपः ( द्र० अष्टा० १।३।२,९ )।

## १०—धात्वादेः षः सः।[१]

अर्थः—धातोरादिर्यः षकारस्तस्य सकारो भवति। यथा—षिधु—सेधति।

टिप्पणी—सूत्रमिदं कातन्त्रे (३।१०।२४) पाणिनीये (६।१।६४) चानयैवानुपूर्व्या पठ्यते।

## ११—नो णः।[२]

अर्थः—धात्वादेरित्यनुवर्तते। धातोरादिर्यो णकारस्तस्य नकारो भवति। यथा—णमु—नमति।

टिप्पणी—सूत्रमिदं कातन्त्रे (३।१०।२५) पाणिनीये (६।१।६५) च तन्त्रेऽनयैवानुपूर्व्या पठ्यते।

## १२—गमां वः।[३]

## गमो गच्छ।[४]

## गमादेश्छः।[५]

टिप्पणी—( १ ) त्रयाणामप्येषां मूलपाठः सन्दिग्धः।

( २ ) प्रथमं वचनं यम उपरमे ( का० धा० १।२२२ ) धातुव्याख्याने पठ्यते, 'गमादीनां मकारस्य वकारो भवति' इत्येवं व्याख्याय यवति इत्युदाह्रियते (पृष्ठ २९)। द्वितीयं वचनं गम्लृ धातुव्याख्याने (द्र० धातुसूत्र १।३३५) उद्ध्रियते, गच्छति इति चोदाह्रियते। (पृष्ठ ५७)। तृतीयं वचनम् इषु इच्छायाम् ( का० धा० ५।७१ ) धातुव्याख्याने निर्दिश्यते, इच्छति इति चोदाह्रियते।

( ३ ) त्रयाणां वचनानां तुलनया प्रथमवचने वः इत्यपाठ इति स्पष्टम्;

---

१. का० धा० व्या० १।१०, ६ ठे पृष्ठे, १।२२९; २९ तमे पृष्ठे चोद्धृतम्।
२. का० धा० व्या० १।२२२; २९ तमे पृष्ठ उद्धृतम्।
३. का० धा० व्या० १।३५५; ५७ तमे पृष्ठ उद्धृतम्।
४. का० धा० व्या० ५।७१; १६५ तमे पृष्ठ उद्धृतम्।

नहि गमेः गवति इतीष्यते ग्रन्थकर्त्रा । तस्मात् गमां छः इति पाठेन भाव्यम् यवति स्थाने च यच्छति पाठेन । तथैव च तत्रास्माभिः शोधनं प्रदर्शितम् ।

( ४ ) काशकृत्स्नवचनेषु प्रायेण बहुवचनेनैव निर्देश उपलभ्यते । यथा— दानादानां सन् सार्वधातुके ( क्रमिक संख्या ६५ ), यज्ञां यवराणाम् ( क्रमिक संख्या ९९ ) तथैवेह गमां छः इत्येव मूलपाठ इति निश्चीयते । द्वितीयः पाठो ऋ ऋच्छः ( क्रमिक संख्या ३७ ) दृशेः पश्यः ( क्रमिक संख्या ३९ ) इत्यादिवद् ऊहितः स्यात् । तृतीयः पाठोऽर्थतोऽनुवादरूपो द्रष्टव्यः ।

( ५ ) कातन्त्रीयाः गमिष्यमां छः ( ३।८।६१ ) इत्यत्र, पाणिनीयाः इषुगमियमां छः ( अ० ७।३।७७ ) इत्यत्र च विस्पष्टं त्रीनपि धातून् पठन्ति ।

## १३—लोपोऽनुनासिकानां कानुबन्धे ।[1]

अर्थः—धातूनां येऽनुनासिका ( = ङ ञ ण न म ) वर्णास्तेषां ककारानुबन्धवति प्रत्यये लोपो भवति । यथा—नम् क्त = नतम्, अवगतम् ।

## १४—उदनुबन्धाद् इड् वा ।[2]

अर्थः—उकारानुबन्धवद्भ्यो धातुभ्यो वा इडागमो भवति । यथा—णमु— नतम् नमितम् ।

टिप्पणी—( १ ) पाणिनीयेन उदितो वा ( अष्टा० ७।२।५६ ) इत्यनेन लक्षणेन क्त्वाप्रत्यय एव इड्विकल्प उच्यते, न तु निष्ठायाम् । तेन पाणिनीयमते नतम् इत्येव भवति । यदि नमितमपीष्यते चेत् स्वार्थिके इनि ( णिचि ) द्रष्टव्यः ।

( २ ) कातन्त्रे पाणिनीये च 'णम' इत्येव पठ्यते, नोदनुबन्धः ।

## १५—दिवादेर्यन् ।[3]

अर्थः—दिवादिगणस्थेभ्यो धातुभ्यो यन् विकरणो भवति । यथा— दीव्यति ।

टिप्पणी—चन्नवीरकविना भ्वादिगणस्थे शुची शूची चुची चूची अभिषवे (१।२३०) इति धातुसूत्रव्याख्याने दिवादेर्यन् सूत्रमुद्धृत्य शुच्यति शूच्यति

---

१. का० धा० व्या० १।२२३; २९ तमे पृष्ठे, १।३५५; ५७ तमे पृष्ठे चोद्धृतम् ।
२. का० धा० व्या० १।२२३; ३० तमे पृष्ठ उद्धृतम् ।
३. का० धा० व्या० १।२३०; ३१ तमे पृष्ठे, ३।१; १३४ तमे च पृष्ठ उद्धृतम् ।

चुच्यति चूच्यति रूपाणि निर्दिष्टानि। दिवादिभ्यो यन् विधायकस्य भ्वादिगणे कथं प्रवृत्तिरिति नोक्तं कविना। पाणिनीयास्तु शुच्यी चुच्यी अभिषवे (तु०क्षीरत० १।३४१) इति यकारवन्तौ पठन्ति, तेषां शुच्यति चुच्यति आदीनि रूपाण्यञ्जसैव सिद्ध्यन्ति। कातन्त्रीया अपि शुच्यी चुच्यी (कात० धातु० १।१६४) यकारवन्तावेवाधीयते।

इत्थमेव च वर्णुव् आच्छादने (२।६२) धातुसूत्रव्याख्याने अन्त्य-वुकारमनुबन्धं मत्वा चन्नवीरकविः तनादेरुः (क्रमिक संख्या ७३) इति सूत्रेण उविकरणं विदधाति। तत्रापि कथं तनादेरुः सूत्रस्य प्रवृत्तिरिति न स्पष्टीकृता कविना।

अत्रानुमानद्वयं शक्यते कर्तुम्। कदाचित् काशकृत्स्ने तन्त्रे शुचीप्रभृतीनां दिवादिवतिदेशकं किञ्चिद् वचनं स्यात् (एवमूर्णोतेरपि तनादित्वातिदेशकम्) यत् चन्नवीरकविना नोद्धृतम्। यद्वा यथा वैदिकप्रयोगेषु क्वचिद् द्विविकरणता दृश्यते[1] तद्वदिहापि द्विविकरणता ज्ञेया।

दिवादिवदतिदेशे 'वन्निर्देशात् स्वाश्रयमपि कार्यं भवति' इति नियमादिह दिवादिवदतिदेशेन यन्विकरणे शुच्यतिप्रभृतीनि रूपाणि, भ्वादिगणपाठाच्च[2] शोचति चोचति प्रभृतीनि रूपाणि ज्ञेयानि। एवं छन्दोवद् द्विविकरणतायामपि एकविकरणप्रयोग उपपद्यत एव।

## १६—चजयोः कगौ कानुबन्धे।[3]

**अर्थः**—धातेश्चकारजकारयोः स्थाने ककारगकारौ भवतः कानुबन्धवति प्रत्यये परतः। यथा – शुच् + क्ति = शुच् + ति = शुक्तिः। [ भज् + क्ति = भज् + ति = भग् + ति = भक्तिः ]

**टिप्पणी**—'भक्तिः' इत्यत्र जकारस्य गकारादेशे ककारः केन भवतीति नोक्तं वृत्तिकृता।

---

१. यथा 'नेषतु' इत्यत्र नयतेर्लोटि सिप्शपौ। द्र० काशिका तथा पदमञ्जरी ३।१।८५॥

२. तुलना कार्या—पाणिनिः श्रुधातुं भ्वादिषु पठित्वा 'श्रुवः शृ च' (३।१।७४) सूत्रेण श्नुविकरणं तत्सन्नियोगेन शृ-आदेशं च विधाय शृणोति रूपं निदर्शयति। तथा सति श्रुधातोर्भ्वादिषु पाठो व्यर्थो भवति। व्यर्थः सन् ज्ञापयति भ्वादिपाठात् शपाऽपि भाव्यम्। तथा सति 'श्रवति' आदीनि रूपाणि सिद्ध्यन्ति। श्रवत्यादीनि वेदेषु बहुत्र प्रयुज्यन्ते। काशकृत्स्नटीकायां (१।३५४, पृष्ठ ५६) श्रुधातोः 'श्रवति' इत्येव रूपं निर्दिश्यते।

३. का० धा० व्या० १।२३०; ३१ तमे पृष्ठ उद्धृतम्।

## १७—चुपादेर्दीर्घः ।[१]

अर्थः—चुपादीनां धातूनां दीर्घो भवति सार्वधातुके परतः । यथा – चुप – चूपति, तुप – तूपति ।

टिप्पणी—(१) चन्नवीरकविना एतत्सूत्रार्थे 'सार्वधातुके' इत्युक्तम्, तत् कुतः संगृहीतमिति न ज्ञायते, किं कस्माच्चिद् पूर्वनिर्दिष्टसूत्रादनुवर्तत इति ? काशकृत्स्नव्याकरणे अन्-विकरण उत्सर्गः । तस्य चन्नवीरकविना भूधातौ निर्देशो नाकारि । कातन्त्रे तु अन्-विकरणः कर्तरि ( ३।४।३३ ) इति सूत्रं पठ्यते । अनः केन सार्वधातुकसंज्ञेति न ज्ञायते ।

(२) कातन्त्रे ( १।२१५–२१९ ) पाणिनीये ( १।४४८–४५३ ) चूषादयो दीर्घोपधा एव पठ्यन्ते । ह्रस्वपाठात् काशकृत्स्नमते ण्वुलि चोषकः तोषकः इत्यादीनि रूपाणि भवन्ति, कातन्त्रे पाणिनीये च दीर्घपाठात् चूषकः, तूषकः इत्येवमादीनि । एवमन्यकृदन्तेष्वपि भेदो ज्ञेयः । अस्मन्मते तु द्विविधा इमे धातवः ह्रस्वोकारवन्तो दीर्घोकारवन्तश्च ।

## १८—हो ढः ।[२]

अर्थः—हकारस्य ढकारो भवति । यथा – मिह + तृ = मिढ् + तृ ।

टिप्पणी—चन्नवीरकविनेह मेढृ-शब्दसाधुत्वं प्रदर्श्यते । हो ढः सूत्रप्रवृत्त्यनन्तर मिढ् तृ रूपे सम्पन्ने तकारस्य धकारविधायकं सूत्रं टीकाकृता नोदाहृतम् । तच्च कार्यमग्रे व्याख्यास्यमानेन चतुर्थात् तथयोर्धः ( क्रमिक संख्या १०८ ) सूत्रेण सम्पद्यते । तेन मिढ् धृ इत्यवस्थायाम् अग्रे निर्दिष्टानि सूत्राणि यथाक्रमं प्रवर्तन्ते ।

## १९—सतवर्गयोः शचवर्गयोगे शचवर्गौ ।[३]

अर्थः—शकारचवर्गयोगे सकारतवर्गयोः [ यथासंख्यं ] शकारचवर्गौ भवतः ।

टिप्पणी—यद्यप्यस्य सूत्रस्य प्रकृते मेढृशब्दे नास्ति किंचित् प्रयोजनम्, तथाप्युत्तरसूत्रसाहचर्यप्रसङ्गेन सतवर्गयोः पदस्यानुवृत्तिनिदर्शनायेहोपन्यस्तम् । यथा काशकृत्स्नस्य १।२२३ धातुसूत्रव्याख्याने ( पृष्ठ २९ ) नो णः सूत्रप्रसंगेन धात्वादेः षः सः ( द्र० क्रमिक संख्या १०, ११ ) सूत्रमप्युपस्थापितम् ।

---

१. का० धा० व्या० १।२८४; ४१ तमे पृष्ठ उद्धृतम् ।
२. का० धा० व्या० १।३१२; ४७ तमे पृष्ठ उद्धृतम् ।
३. का० धा० व्या० १।३१२; ४७ तमे पृष्ठ उद्धृतम् ।

## २०—षटवर्गयोगे षटवर्गौ ।[१]

अर्थः—षकारटवर्गयोर्योगे सकारतवर्गयोः [यथासंख्यं] षकारटवर्गौ भवतः। यथा – मिद् + घृ = मिद् ढृ ।

टिप्पणी—सूत्रमिदं कर्णाटकवृत्तौ त्रुटितं वर्तते । विनाऽनेन सूत्रेण न कथंचित् मेढृ प्रयोगसिद्धिः संभवति । ढृ—आदेशाभावे उत्तरसूत्रप्रवृत्तिरपि न भविष्यति । अतोऽस्माभिरूहितमिदं सूत्रं प्रकरणानुसारम् ।

## २१—ढो ढे लोपः पूर्वस्य समानस्य दीर्घः ।[२]

अर्थः—ढकारपरे ढकारस्य लोपो भवति पूर्वस्य च समानसंज्ञकस्य (=अ इ उ ऋ ऌ) वर्णस्य दीर्घो भवति । यथा – मिद् ढृ = मिढृ = मीढृ ।

टिप्पणी—(१) कातन्त्रव्याकरणे दश समानाः (१।१।३) सूत्रेण अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ इत्येतेषां स्वराणां समानसंज्ञा विधीयते । इह दीर्घाणां दीर्घवचने प्रयोजनाभावात् 'अ इ उ ऋ ऌ' एते पञ्चैवास्माभिर्निर्दिष्टाः ।

(२) इयं समानसंज्ञा प्रतिशाख्यग्रन्थेष्वपि व्यवह्रियते । तत्र क्वचित् दशानां समानसंज्ञा विधीयते । क्वचित् ऌवर्णस्य दीर्घं परिहाप्य नवानाम् । अन्यत्र ऋकारस्यापि दीर्घभेदमनाश्रित्याष्टानामेव ।

(३) आपिशलपाणिनीयाः ऌकारस्य दीर्घभेदं नेच्छन्ति (द्र० आपिशल शिक्षा प्रकरण ६, पाणिनीया सूत्रात्मिका शिक्षा प्रक० ६) ।

(४) कातन्त्रे ढे ढो लोपो दीर्घश्चोपधायाः (३।१०।६) इत्येवं पाठः ।

## २२—नाम्निनो गुणः सार्वधातुकार्धधातुकयोः ।[३]

अर्थः—सार्वधातुकार्धधातुकसंज्ञकेषु प्रत्ययेषु परतः नामि-संज्ञकस्य (=इ ई उ ऊ ऋ ॠ ऌ ॡ) स्वरस्य गुणो भवति । यथा—मीढृ = मेढृ ।

टिप्पणी—(१) अस्मद्देवनागरीप्रतिलिप्यां नामनो गुणः इति पाठः । स कदाचिल्लेखकप्रमादजः स्यात् । अग्रे व्याख्यास्यमाने १३६ तमे नामिनां इति शुद्ध एव पाठ उपलभ्यते ।

---

१. सूत्रमिदं कर्णाटकटीकायां नोपलभ्यते । द्रष्टव्या एतत्सूत्रस्य टिप्पणी ।
२. का० धा० व्या० १।३१२; ४७ तमे पृष्ठ उद्धृतम् ।
३. का० धा० व्या० १।३१२; ४७ तमे पृष्ठ उद्धृतम् ।

( २ ) कातन्त्रे स्वरोऽवर्णवर्जो नामी ( १।१।१७ ) इत्यनेन अ-आवर्जितानामष्टानां (= इ ई उ ऊ ऋ ॠ ऌ ॡ ) स्वराणां नामिसंज्ञा विधीयते।

( ३ ) इह नामिनां सामान्येन गुणविधानात् मीढ़ इत्यत्र दीर्घस्य ईकारस्य गुणो विहितः। कर्नाटकवृत्तावन्यत्रापि अनन्त्ययोर्दीर्घेकारोकारयोर्गुणो विधीयते। यथा ईट—एटति, कूट—कोटति ( धा० सू० १।११३, पृष्ठ १५ )। एवमन्यत्रापि। पाणिनीयाः गुणं नेच्छन्ति।

## २३—सेर्डा।[1]

अर्थः—सेः प्रथमैकवचनस्य स्थाने डा-आदेशो भवति। मेढृसि = मेढृ + डा = मेढृ आ।

## २४—अनुबन्धे स्तनादेर्लोपः।[2]

पाठशोधनम्—कर्नाटकवृत्तौ सूत्रस्य तद्वृत्तेश्च पाठो भ्रष्टो वर्तते। इह प्रकरणानुसारं—डानुबन्धे ऽन्त्यादेर्लोपः इति सूत्रपाठो द्रष्टव्यः। तथा सति अयं तस्यार्थो ज्ञेयः—डकारानुबन्धवति प्रत्यये परतोऽन्त्यः स्वर आदिर्यस्य, तत्समुदायस्य लोपो भवति। तेन मेढृ आ इत्यत्र ऋकारस्य लोपे मेढ्आ = मेढा इति रूपं सिद्धम्।

टिप्पणी—तुलना कार्या—अचोऽन्त्यादि टि (अष्टा० १।१।६४) डित्यभस्याप्यनुबन्धकरणसामर्थ्यात् ( परिभाषा )। कातन्त्रे तु आ च न सम्बुद्धौ ( २।१।७० ) इति सूत्रेण ऋकारस्य आकारादेशः, सिप्रत्ययस्य च लोप उच्यते।

## २५—वृहेरू रो मनि।[3]

अर्थः—वृहधातो ऋकारस्य 'र' आदेशो भवति मनि प्रत्यये परतः। यथा—वृह् मन् = व्रह्मन् = ब्रह्मन्।

टिप्पणी—चन्नवीरकविना पुरुषसूक्तस्य कर्नाटकवृत्तौ बृहो मसन्—मीन्मणिष्व[4] इति सूत्रमुद्धृतम्। तदनुसारं ब्रह्म ब्रह्मन् ब्रह्मी ब्राह्मि शब्दाः सिद्ध्यन्ति।

---

१. का० धा० व्या। १।३१२; ४७ तमे पृष्ठ उद्धृतम्।

२. का० धा० व्या० १।३१२; ४७ तमे पृष्ठ उद्धृतम्। सूत्रस्य पाठो भ्रष्टः प्रतीयते। अत्र पाठशोधनं द्रष्टव्यम्।

३. का० धा० व्या० १।३२० ; ५० तमे पृष्ठ उद्धृतम्

४. अत्र निर्दिष्टः सूत्रपाठो भ्रष्टः प्रतिभाति।

## २६—सन्ध्यक्षराणामाकारः ।[1]

अर्थः—सन्ध्यक्षराणाम् [ अन्ते वर्तमानानाम् ] आकारादेशो भवति । यथा—ग्लै अ ति = ग्ला अ ति । [ शिष्टं कार्यमुत्तरसूत्रेण ] ।

टिप्पणी—कातन्त्रे सन्ध्यक्षराणामाकारोऽविकरणे ( ३।६।२० ) इति पठ्यते । तेन अनादिविकरणाभावे आत्त्वं भवति । पाणिनीया अपि आदेच उपदेशेऽशिति ( ६।१।४५ ) इत्यनेन शपश्यन्श्नाशश्नुश्नम्-विकरणातिरिक्तेषु स्थलेष्वात्त्वं विदधति ।

## २७—आतो युः ।[2]

अर्थः—आकारान्तानां धातूनां 'यु' आगमो भवति अनि विकरणे । यथा—ग्ला अ ति = ग्ला य् अ ति = ग्लायति ।

टिप्पणी—'अनि विकरणे' इत्यंशश्चन्नवीरकविना वृत्तौ कुतः संगृहीत इति न ज्ञायते । इह ५४ चतुःपञ्चाशत्तमं सूत्रमप्यनुसन्धेयम् । कातन्त्रपाणिनीया आकारादेशमविधाय ऐकारस्यायादेशेन रूपं साधयन्ति ।

## २८—ईद् आतः कानुबन्धे ।[3]

अर्थः—ककारानुबन्धवति प्रत्यये परत आकारान्तस्य धातोरीकारादेशो भवति । यथा—रै + क्ति = रा ति = रीतिः, रीतम् ।

## २९—धेटो धयः ।[4]

अर्थः—धेट्धातोर्धय-आदेशो भवति [ अन्विकरणे परतः ] यथा—धयति ।

टिप्पणी—कर्नाटकवृत्त्यनुवादे धेटोयः इत्यपपाठः । अयं कोष्ठान्तर्गतः पाठोऽस्माभिः संयोजितः, कर्नाटकवृत्तौ नोपलभ्यते । एवमुत्तरसूत्रार्थेष्वपि तत्र तत्र ज्ञेयः ।

## ३०—पः पिबः ।[5]

अर्थः—पाधातोः पिब-आदेशो भवति [ अन्विकरणे परतः ] । यथा—पिबति ।

---

१. का० धा० व्या० १।३२४; ५० तमे पृष्ठे उद्धृतम् ।
२. का० धा० व्या० १।३७४; ५० तमे पृष्ठ उद्धृतम् ।
३. का० धा० व्या० १।३३१; ५१ तमे पृष्ठ उद्धृतम् ।
४. का० धा० व्या० १।३१९; ५३ तमे पृष्ठ उद्धृतम् ।
५. का० धा० व्या० १।३३९; ५३ तमे पृष्ठ उद्धृतम् ।

टिप्पणी—सूत्रमिदमनयैवानुपूर्व्या कातन्त्रे ( ३।८।७० ) ऽपि पठ्यते।

### ३१—घ्रो जिघ्रः।[1]

अर्थः—घ्राधातोर्जिघ्र-आदेशो भवति [ अन्विकरणे परतः ]। यथा—जिघ्रति।

टिप्पणी—सूत्रमिदं कातन्त्रे ( ३।८।७१ ) ऽपीत्थमेव पाठ्यते।

### ३२—ध्मो धमः।[2]

अर्थः—ध्माधातोर्धम आदेशो भवति [ अन्विकरणे परतः ]। यथा—धमति।

टिप्पणी—इदमपि सूत्रं कातन्त्रे ( ३।८७२ ) अनयैवानुपूर्व्या पठ्यते।

### ३३—स्थः तिष्ठः।[3]

अर्थः—स्थाधातोस्तिष्ठ-आदेशो भवति [ अन्विकरणे परतः ]। यथा—तिष्ठति।

टिप्पणी—इदमपि सूत्रं कातन्त्रे ( ३।८।७३ ) इत्थमेव पठ्यते।

### ३४—म्नो मनः।[4]

अर्थः—म्नाधातोर्मन-आदेशो भवति [अन्विकरणे परतः]। यथा—मनति।

टिप्पणी—इदमपि सूत्रं कातन्त्रे ( ३।८।७४ ) अनयैवानुपूर्व्या पठ्यते।

### ३५—दाणो यच्छुः।[5]

अर्थः—दाण्धातोर्यच्छु-आदेशो भवति [अन्विकरणे परतः] यथा—यच्छति।

टिप्पणी—'यच्छुः' इत्यत्रोकारानुबन्धः किमर्थ इति न ज्ञायते। कातन्त्रे—दाणो यच्छः ( ३।८।७५ ) इत्येव पाठः।

---

१. का० धा० व्या० १।३४०; ५३ तमे पृष्ठ उद्धृतम्।
२. का० धा० व्या० १।३४०; ५३ तमे पृष्ठ उद्धृतम्।
३. का० धा० व्या० १।३४२; ५३ तमे पृष्ठ उद्धृतम्।
४. का० धा० व्या० १।३४३; ५३ तमे पृष्ठ उद्धृतम्।
५. का० धा० व्या० १।३४४; ५३ तमे पृष्ठ उद्धृतम्।

## ३६—ह्रस्वस्य तोऽन्तः पानुबन्धे ।[1]

अर्थः—ह्रस्वस्वरान्तस्य धातोरन्ते तकारागमो भवति पकारानुबन्धवति प्रत्यये परतः । यथा—सृ + क्विप् = सृत् ।

विवरणम्—चन्नवीरकविना सूत्रार्थनिर्देशानन्तरं सृत् सृ इति द्वे रूपे निर्दिष्टे । इत्थमेव ऋ गृ घृ धातूनां (धातुसूत्र १।३५०, ३५१, ३५२; पृष्ठ ५५) कृदन्तेषु ऋ गृ घृ रूपाणि निर्दिष्टानि । एतैः सह यान्यान्यानि कृदन्तानि तानि नपुंसकलिङ्गानि पठ्यन्ते, अतः साहचर्यात् ऋ गृ घृ रूपाण्यपि नपुंसकलिङ्गान्येव ज्ञेयानि । सृत् सृ प्रयोगाभ्याम् ऋ गृ घृ प्रयोगैश्चैतत् सन्दिह्यते यत् काशकृत्स्न-स्योक्तसूत्रे कस्माचित् पूर्वसूत्रात् वा पदमनुवर्तते । वानुवृत्तेश्चन्नवीरकविना सूत्रार्थे निर्देशो नाकारि, यद्वा विकल्पेन तकारलोपविधायकं सूत्रं कर्नाटकवृत्तौ त्रुटितम् । यथा पूर्वनिर्दिष्टं पटवर्गयोगे पटवर्गौ ( क्रमिक संख्या २० ) सूत्र वृत्तौ नष्टम् । अस्तु किमपि कारणम्, एतावत्तु निश्चितमेव यत् काशकृत्स्नमते ह्रस्वस्वरान्तधातोः क्विपि तकारयुक्ताः तकाररहिताश्च द्विविधाः शब्दा निष्पद्यन्ते इति ।

पाणिनीयास्तु ह्रस्वस्य पिति कृति तुक् (अ० ६।१।७१) इति सूत्रेण तकारान्तानामेव साधुत्वमाचक्षते । यदि तु पाणिनीये तुगागमविधायके सूत्रे शेश्छन्दसि बहुलम् (अ० ६।१।७०) इति सूत्राद् बहुलपदानुवृत्तिः स्यात्तर्हि पाणिनीयेऽपि मते द्विविधानां शब्दानां साधुत्वं शक्यते वक्तुम् ।

वस्तुतः पाणिनेः कः सूत्रार्थोऽभिमत इति नेदानीं शक्यते निश्चयेन वक्तुम्, यतः सम्प्रति यावत्या अष्टाध्याय्या वृत्तयः समुपलभ्यन्ते ताः सर्वा एव प्रायेण महाभाष्यस्य प्रभावेण प्रभाविताः सन्ति । महाभाष्यस्य रचनातः पूर्वमष्टाध्याया या वृत्तय आसन् तासु सूत्रार्थविषये महदन्तरमासीत् । उदाहरणरूपेण गाङ्कुटादि ( १।२।१ ) सूत्रस्य महाभाष्यं द्रष्टुं शक्यते, यत्र सूत्रविषयकाश्चत्वारोऽर्था उपन्यस्ता दृश्यन्ते,[2] परन्तु सम्प्रत्युपलभ्यमानासु वृत्तिषु तेषामेकतम[3] एव महाभाष्यसिद्धान्तरूपेण स्वीकृतोऽतिदेशरूपोऽर्थ उपलभ्यते ।

---

१. का० धा० व्या० १।३४९; ५४ तमे पृष्ठ उद्धृतम् ।

२. द्र० ओरियन्टल कालेज मैगजीन लाहौर, नवम्बर १९३९ ई० प्रकाशितेऽङ्केऽस्मदीयः 'अष्टाध्यायी की महाभाष्य से प्राचीन वृत्तियों का स्वरूप' नामा लेखः ।

३. दशपादुणादिवृत्तौ यत्र यत्र प्रत्ययस्य ङित्त्वं कित्त्वं चित्त्वं च विधीयते तत्र सर्वत्र तत्तत्संज्ञाविधानरूपोऽन्योऽप्यर्थो दृश्यते । तेन महाभाष्ये ( १।२।१ ) संकीर्तितानां चतुर्णामर्थानां सद्भावो ज्ञाप्यते ।

## ३७—ऋ ऋच्छः ।[1]

अर्थः—ऋधातोः स्थाने ऋच्छ-आदेशो भवति [ अन्विकरणे परतः ] । यथा—ऋच्छति ।

टिप्पणी—काशकृत्स्नीये धातुपाठे ऋ प्रापणे च ( १।३५० ) ऋ गतौ ( १।३५१ ) इति द्वौ धातू पठ्येते । तत्र कर्नाटकवृत्तौ पूर्वस्य प्रापणार्थस्य ऋच्छादेशमुक्त्वा ऋच्छति रूपं निर्दिश्यते, अपरस्य तु अरति रूपम् । किमत्र कारणमिति न ज्ञायते । अपि च ऋ प्रापणे च इत्यत्र चाद् गत्यर्थः समुच्चीयत एव, पुनर्गतौ पाठस्य प्रयोजनं मृग्यम् । मन्ये पुनः पाठसामर्थ्यादेव प्रापणार्थस्य ऋच्छतिरूपं गत्यर्थस्य च अरतिरूपमिति वैशिष्ट्यं ध्वन्यत इति ।

पाणिनीये धातुपाठे द्वयोरप्यर्थयोः समुच्चयं कृत्वा ऋ गतिप्रापणयोः ( क्षीरत० १।६६८ ) इत्येवं पठ्यते । यद्यपि कातन्त्रकृद् काशकृत्स्नपाठमेवानुकरोति तथापीह कातन्त्रे ऋ प्रापणे च इत्येव पठ्यते तस्यैव च अर्तेर्ऋच्छः ( ३।२।७७ ) इति ऋच्छादेशो विधीयते ।

## ३८—चजोः कगौ ।[2]

अर्थः—चकारजकारयोः स्थाने ककारगकारादेशौ भवतः । यथा—सञ्ज् अ=सङ्गः, ष्वञ्ज् अ=स्वङ्गः ।

टिप्पणी—पाणिनीयतन्त्रानुसारं सङ्गस्वङ्गयोर्घञि चजोः कु घिण्ण्यतोः ( अ० ७।३।५२ ) सूत्रेण कुत्वं भवति । प्रकृतसूत्रसरूप एव चजयोः कगौ कानुबन्धे ( क्रमिक संख्या १६ ) इति सूत्रं पूर्वं व्याख्यातम् । किमिमे पृथक् सूत्रे उताहो एकस्यैव द्विधारूपेण पाठ इति विचारणीयम् । पूर्वसूत्रोदाहरणे भुक्तौ पाणिनीयमते चोः कुः (८।२।३०) इत्यनेन कुत्वं भवति, सङ्गस्वङ्गयोः चजोः कु घिण्ण्यतोः ( ७।३।५२ ) इत्यपरेण । तथा काशकृत्स्ने तन्त्रेऽपि इमे पृथक् सूत्रे संभवतः ।

## ३९—दृशेः पश्यः ।[3]

अर्थः—दृशधातोः स्थाने पश्य-आदेशो भवति [ अन्विकरणे परतः ] । यथा—पश्यति ।

---

१. का० धा० व्या० १।३५०; ५५ तमे पृष्ठ उद्धृतम् ।

२. का० धा० व्या० १।३६८; ५८ तमेपृष्ठ उद्धृतम्

३. का० धा० व्या० १।३६९; ५९ तमे पृष्ठ उद्धृतम् ।

टिप्पणी—सूत्रमिदं कातन्त्रे ( ३।८।७८ ) अनयैव वर्णानुपूर्व्या पठ्यते।

## ४०—दृशादीनां य्वृणां यवरा अकानुबन्धे।[1]

अर्थः—दृशप्रभृतीनां धातूनाम् इ उ ऋ इत्येतेषां स्थाने यथासंख्यं य व र आदेशा भवन्ति ककारानुबन्धरहिते प्रत्यये परतः। यथा—दृश् तृ = द्रश् तृ [ शिष्टं कार्यमग्रे द्रष्टव्यम् ]।

टिप्पणी—( १ ) इह सूत्रपाठे अकानुबन्धे इत्यस्य स्थाने अनुबन्धे इत्येवोपलभ्यते। कर्णाटकवृत्तौ तु सम्यग्व्याख्यायते तेन प्रतीयतेऽस्मदीयेऽनुवाद एव लेखकप्रमादात् पाठभ्रंशः समजायत इति।

( २ ) एतेन सूत्रे य व र आदेशा अकारविशिष्टा जायन्ते, अन्यथा द्रष्टा इत्यत्र रेफमात्रादेशे तत् पदं न सिध्येत। पाणिनीये मते तु सृजदृशोर्झल्यमकिति ( अ० ६।१।५८ ) ततश्च ऋकारस्य स्थाने यणादेशे स्रष्टा द्रष्टा इति पदे निष्पद्येते।

( ३ ) इहाग्रे निर्दिश्यमानौ य्वृणां यवरास्तृचि, य्वृणां यवराः ( क्रमिक संख्या १०० ) पाठावप्यनुसन्धेयौ। अस्मन्मते तौ पाठावस्यैव सूत्रस्यैकदेशौ स्तः।

## ४१—छशषराजादीनां षोऽघोषे।[2]

अर्थः—छकारशकारषकाराणामन्ते वर्तमानानां राजधातोश्चान्त्यवर्णस्य षकारादेशो भवति अघोषसंज्ञकेषु ( वर्गाणां प्रथमद्वितीयेषु ) वर्णेषु परतः। यथा—दृश् तृ = द्रश् तृ = द्रष् तृ = द्रष् टृ = द्रष्टृ = द्रष्टा।

टिप्पणी—तुल्ना कार्या भृजादीनां षः, छशोश्च (का० ३।८।५९,६०) इति कातन्त्रीयसूत्राभ्यां सह।

## ४२—दिशादीनां कः।[3]

अर्थः—दिशप्रभृतीनां धातूनां शकारस्य ककारादेशो भवति। यथा—दृश् क्विप् = दृश् = दृक्।

टिप्पणी—चन्नवीरकविनेह स्वटीकायाम् 'अघोषे घोषे च वर्णे परतः' इत्युक्तम्, तत्कुतः संगृहीतमिति न ज्ञायते। वस्तुतो वृत्तौ 'अघोषे घोषे च

---

१. का० धा० व्या० १।३६९. ५९ तमे पृष्ठ उद्धृतम्।
२. का० धा० व्या० १।३६९; ५९ तमे पृष्ठ उद्धृतम्।
३. का० धा० व्या० १।३६९; ५९ तमे पृष्ठ उद्धृतम्।

परतः' इत्यंशो लक्ष्यविरोधाच्चिन्त्य एव, यतो ह्यनेन पदान्त एव कुत्वं भवतीत्यु-दाहृतेन हकूपदेन विज्ञायते। तुलनीयं 'क्विन्प्रत्ययस्य कुः' (८।२।६२) इति पाणिनीयं सूत्रम्।

## ४३—कशेर्यप इपुश्च।[1]

अर्थ—कशधातोर्यप इपुश्च प्रत्ययौ भवतः। यथा—कश्यपः, हिरण्य-कशिपुः।

टिप्पणी—(१) अस्मन्नागरीप्रतिलिप्यां कशेर्यपद्युश्च पाठो वर्तते। स लेखक प्रमादाद् भ्रष्टः प्रतीयते। अस्माभिस्तु यथालक्ष्यं पाठः संशोधितः।

(२) तैत्तिरीयारण्यके कश्यपः पश्यको भवति यत्परिपश्यति सौक्ष्म्यात् (१।८।८) पाठ उपलभ्यते स खल्वर्थनिर्देशपरो न वर्णव्यत्ययेन पश्यक एव कश्यपः संवृत्त इति निदर्शनपरः। एवं सिंहतर्कुशब्दयोः पतञ्जलिना (महा० ३।१।१२३) यास्केन (निरु० ३।१८) च यो वर्णविपर्ययः प्रदर्शितः सोऽप्यर्थनिदर्शनपर एव ज्ञेयः। एतच्चानेन काशकृत्स्नधातुपाठेन विस्पष्टं भवति। अत्र हि कश्यपपदं स्पष्टमेव यपप्रत्ययान्तं व्युत्पाद्यते, एवं सिंहशब्दस्य मूलभूता पिहि प्रकृतिरिह (का० धातुसूत्र १।३१६, पृष्ठ ४८,४९) पठ्यते।

## ४४—अनुषङ्गलोपोऽनुनासिकानाम्।[2]

अर्थः—अनुनासिकानामनुषङ्गस्य लोपो भवति। यथा—दंश—दशति।

टिप्पणी—(१) चन्नवीरकवेरस्य सूत्रस्य व्याख्याऽस्पष्टा वर्तते। सूत्रार्थो-ऽपि यथामुद्रितपाठानुसारं न विज्ञायते। अनुनासिकानामेवानुषङ्गसंज्ञा पूर्वम् अनुनासिकोऽनुषङ्गः (क्रमिक संख्या ७) सूत्रेण प्रतिपाद्यते, अनुषङ्गस्य लोपः (क्रमिक संख्या ८) इत्यनेन च तस्य लोपो विधीयते।

(२) यदीह अनुनासिकानाम् इत्यस्यानुनासिकवतां धातूनामित्यर्थः क्रियेत, तस्य चानुषङ्गस्य लोप उच्येत, तथापि न पूर्वनिर्दिष्टाभ्यां सप्तमाष्टम-सूत्राभ्यां किञ्चिद् विशिष्यते।

(३) पाणिनीयास्तु मथ्यते (सप्तमाष्टम-सूत्रयोरुदाहरणे) इत्यत्र अनिदितां हल उपधायाः क्ङिति (६।४।२४) सूत्रेण, दशति इत्यत्र दंशसञ्ज-स्वञ्जां शपि (६।४।२५) इत्यनेन च नकारस्य लोपं विदधति। कातन्त्रीया

१. का० धा० व्या० १।३७०; ५९ तमे पृष्ठ उद्धृतम्।
२. का० धा० व्या० १।३७१; ५९ तमे पृष्ठ उद्धृतम्।

अपि उक्तोदाहरणयोर्यथासंख्यम् अनिदनुबन्धानामगुणेऽनुषङ्गलोपः ( ३।८।१ ) इत्यनेन दन्शिसञ्जिस्वञ्जिरञ्जीनामनि ( ३।८।४ ) इत्यनेन चानुषङ्गस्य लोपं प्रतिपादयन्ति ।

## ४५—भूते भव्ये वर्तमाने भावे कर्तरि कर्मणि ।
## प्रयोजके गुणे योग्ये धातुभ्यः स्युः क्विादयः ॥[1]

अर्थः—भूते भविष्यति वर्तमाने च काले, भावे = धात्वर्थे, कर्तरि, कर्मणि, प्रयोजके च कारके [ = हेतौ], गुणे = गौणे कर्मणि, योग्येऽर्हार्थे धातुभ्यः क्विादयो भवन्ति ।

टिप्पणी—इह सूत्रे 'कर्मणि' पदेन प्रधानं कर्मोच्यते, 'गुणे' इत्यनेन गौणं कर्म । अत्रार्थे गुणशब्दस्य प्रयोगः 'कथिते लादयश्चेत् स्युः षष्ठीं कुर्यात् तदा गुणे[2] इति महाभाष्यनिर्दिष्टायां कारिकायामप्युपलभ्यते । कैयटेनात्र गुणे तव गुणकर्मत्वेनाभिमते[2] इत्येवं व्याख्यातम् । उत्तरवचने तु कथितेऽभिहिते त्वविधिस्त्वमतिर्गुणकर्मणि लादिविधिः सपरे[2] इति स्पष्टमेव गुणकर्मणि पदं पठ्यते । यत्तु ब्रुविशासिगुणेन च यत्सचते[2] इत्यत्र गुणपदं तत्तु क्रिया-पेक्षया गुणरूपसाधनपरम्, तच्चात्रप्रधानं कर्म, तेन प्रधानकर्मणा यत्सचते संबध्यते तदकीर्तितम् तच्च गुणकर्म ।

## ४६—पुल्यगिभ्यामस्त्योऽस्तिश्च ।[2]

अर्थः—पुल अग इत्येताभ्यां धातुभ्याम् अस्त्योऽस्तिश्च प्रत्ययो भवति । यथा—पुलस्त्यः, पुलस्तिः; अगस्त्यः, अगस्तिः ।

टिप्पणी—(१) अत्र यथासंख्यं नेष्यते, तच्च धात्वोः समासनिर्देशेन प्रत्ययो-श्चासमस्तनिर्देशेन ज्ञायते । अन्यथा प्रत्ययावपि समस्तौ पठ्येताम् । कर्नाटकवृत्ति-कृताऽपि चेह अगस्त्यः अगस्तिः इत्युभे रूपे निर्दिष्टे[3], तेनाऽपि यथासंख्या-भावो विज्ञायत एव ।

(२) एतेन अगस्त्य अगस्ति द्विरूपशब्दसाधनेन विज्ञायते यत् पाणिनीये आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् ( २।४।७० ) लक्षणे यस्य 'अगस्तयः' पदस्य साधनाय अगस्त्यस्थाने 'अगस्ति'आदेशो विधीयते, स अगस्ति-प्रकृत्यन्तर-

---

१. का० धा० व्या० १।३७२ तमे सूत्र उद्धृतम् ।        २. महाभाष्य-१।४।५१॥

२. का० धा० व्या० १।४१० तमे सूत्र उद्धृतम् ।

३. पुल-धातुव्याख्याने तु पुलस्त्य इत्येवोच्यते ।

सद्भव इति निदर्शनाय। तेन अगस्त्य-शब्दस्य बहुषु प्रयोगो न भवति, अगस्तिप्रकृत्यन्तरस्यैव भवतीति सूत्रस्य भावो व्याख्येयः।

## ४७—स्फायः स्फी।[1]

अर्थ—स्फायी-धातोः स्फी आदेशो भवति। यथा—स्फीतम्।

टिप्पणी—कातन्त्रस्य वररुचिप्रोक्ते कृदन्तभागे[2] (४२) सूत्रमिदमनयैव वर्णानुपूर्व्या पठ्यते। उत्तरसूत्रस्था टिप्पण्यत्राप्यनुसंधेया।

## ४८—प्यायः पी।[1]

अर्थ—प्यायी-धातोः पी आदेशो भवति। यथा—पीतम्, पीतिः।

टिप्पणी—इदमपि सूत्रं कातन्त्रस्य कृदन्तभागे (४३) इत्थमेव पठ्यते।

विवरणम्—पाणिनिः (अष्टा० ६।१।२२,२८) वररुचिश्च (कातन्त्रकृद्भाग-प्रवक्ता) इमावादेशौ निष्ठायामेव विदधाति। परन्तु कर्नाटकवृत्तौ प्यायः पी सूत्रानन्तरं पीतिः इत्युदाहरणमपि पठ्यते। तेन ज्ञायते क्तिन्प्रत्ययेऽपि स्फी-पी आदेशौ भवत इति। तथा सति तकारादौ किति प्रत्यये सामान्येनेमावादेशौ काशकृत्स्ने विहिताविति विज्ञायते। यद्वा कर्नाटकवृत्तौ पीतिः पदं प्रमाद-पठितं स्वीकार्यम्।

## ४९—नान्तः क्षुणादीनाम्।[3]

पाठशोधनम्—इह कर्नाटकवृत्तौ सूत्रस्य तद्वृत्तेश्च पाठः सन्दिग्धो वर्तते। यथापठितस्य न कश्चनार्थो विज्ञायते। प्रकरणानुरोधेन च ज्ञायते क्षोभनम् क्षोभनीयम् इत्युदाहृतयोरुदाहरणयोर्णत्वं निराकर्तुं सूत्रमिदमुपन्यस्यते वृत्तिकृता। एवं च सति सूत्रस्य नातः क्षुभादीनाम् इत्येवं पाठेन भाव्यम्।

सूत्रार्थः—नातः क्षुभादीनाम् इत्यस्यायमर्थो ज्ञेयः—क्षुभादीनां धातूनां सम्बन्धिनि कृत्प्रत्ययेऽकारादुत्तरस्य नकारस्य णकारादेशो न भवति।

विशेषः—पाणिनीयमते त्वत्र क्षोभणम् क्षोभणीयम् इति णत्वं भवत्येव।

---

१. का० धा० व्या० १।४९२ तमे सूत्र उद्धृतम्।

२. एतद्विषयेऽस्मदीयः 'सं० व्या० शास्त्र का इतिहास' नामा ग्रन्थो (भाग १, पृष्ठ ५??, द्वि० सं०) द्रष्टव्यः।

३. का० धा० व्या० १।५७१ तमे सूत्र उद्धृतम्।

## ५०—इक्श्तिपौ धातुस्वरूपे ।[1]

अर्थः—धातोः स्वरूपे [=क्रियायां भावे च] इक् तिप् इत्येतौ प्रत्ययौ भवतः। यथा—वृतिः=वर्तनम्; वर्त्तिः=दीपाङ्गम् (बत्ती इति भाषायाम्)।

टिप्पणी—महाभाष्ये (३।३।१०८) तु इक्श्तिपौ धातुनिर्देशे इति वार्तिकं पठ्यते। तस्यायमर्थः—धातुनिर्देशे धातोरिक् श्तिप् इत्येतौ प्रत्ययौ भवतः। यथा पाणिनीये—स्तम्बकर्णयोरमिजपोः (३।२।१३) इत्यत्र रमि इतीका, अधिकरणे शेतेः (३।२।१५) इत्यत्र च शेतेः इति श्तिपा निर्देश उपलभ्यते। यदि काशकृत्स्नस्य सूत्रस्याप्ययमेवार्थः स्यात् तर्हि पुल्यगिभ्याम् (क्रमिक संख्या ४६) इत्यत्रोभयोर्धात्वोरिका निर्देशो ज्ञेयः। तिप्प्रत्ययेन च धातु-निर्देशः काशकृत्स्नस्योपलब्धेषु सूत्रेषु न दृश्यते। कातन्त्रे तु तिपानिर्देशो बहुत्रोपलभ्यते। एतेन कर्नाटकवृत्त्युक्तोऽर्थः प्रामादिक इति विज्ञायते।

## ५१—कृपो रो लः ।[2]

अर्थ—कृपधातो रेफस्य लकारो भवति। यथा—कल्पते।

## ५२—मानुबन्धाद् इन्मा ।[3]

अर्थ—मानुबन्धेभ्यो धातुभ्यो इन् प्रत्ययो णानुबन्धवन्न भवति। यथा—ज्वरयति।

टिप्पणी—अस्मिन् सूत्रे 'णानुबन्धवत्' पदं न दृश्यते। तच्चाग्रे व्याख्यास्य-मानेन (क्रमिक संख्या १२५) इन् णानुबन्धवत् सूत्रेण पूर्यते, अर्थात् इन् प्रत्ययस्य यत् णानुबन्धवत्त्वं विहितं तन्मानुबन्धाद् धातोर्न भवति। णानुबन्धवद-तिदेशाभावे वृद्धिरादौ सणे। (क्रमिक संख्या १२६) सूत्रेणोच्यमाना वृद्धिर्न भवति। काशकृत्स्ने धातुपाठे घटादयो मानुबन्धाः इति गणसूत्रेण (१।६१९) घटादीनां मानुबन्धवत्त्वमतिदिश्यते। तेन इनो णानुबन्धवत्त्वकार्यं यत्प्राप्यते तदनेन प्रतिषिध्यते।

पाणिनिकातन्त्रकारौ तु घटादीनां वृद्धिं विधाय पुनर्ह्रस्वत्वमनुशिष्टः। तथाहि—मितां ह्रस्वः (अष्टा० ६।४।९२) मानुबन्धानां ह्रस्वः (का० ३।६।६५) इत्युभयोर्यथासंख्यं सूत्रम्।

---

१. का० धा० व्या० १।५७६ तमे सूत्र उद्धृतम्।

२. का० धा० व्या० १।५८० तमे सूत्र उद्धृतम्। पाणिनिरप्येवमेव पपाठ (८।२।१८)। 'कृपे रो लः' इति कातन्त्रीयः पाठः।    ३. का० धा० व्या० १।५१२ तमे सूत्र उद्धृतम्।

## ५३—दाराः पुंसि भूम्नि ।[1]

अर्थः—दारशब्दः (भार्यावाचकः) पुंल्लिङ्गे भूम्नि = बहुवचने च प्रयुज्यते । यथा दाराः = भार्या ।

टिप्पणी—दारशब्दस्य बहुत्वं प्रायिकम्, एकवचनान्तस्यापि दर्शनात् । तद्यथा—श्रोत्रियस्य दारेण (बृ० उ० ६।४।१२), आचार्यदारे (आप० धर्म० १।२।७।२७), दारे (तन्त्राख्यायिका, पृष्ठ ६७, श्लोक १५७) इत्यादयो बहवः प्रयोगा उपलभ्यन्ते ।

## ५४—आतो युरनि (?, रिनि) ।[2]

अर्थः—आकारान्तस्य धातो 'यु' आगमो भवति अनि परतः ।

टिप्पणी—अत्र अनि इनि वेति संदेहः । अनि श्रायति इत्युदाहरणम् । तथा सति पूर्वनिर्दिष्टः आतो युः (संख्या ३७) सूत्रमस्यैवैकदेशः संभवति । इनि श्राययति इत्युदाहरणम् । अनि पाठे श्राययतीत्यत्र 'यु' आगमो न सिद्ध्यति । तस्मात् इनि इति पाठ एव ज्यायान् प्रतिभाति । उत्तरसूत्रे, 'पु' आगमविधायके इनि इत्येवोपलभ्यते । उत्तरसूत्रस्था टिप्पण्यप्यवलोकनीया ।

## ५५—आतो पुरिनि ।[3]

अर्थः—आकारान्तस्य धातोः 'पु' आगमो भवति इनि परतः । यथा—श्रापयति ।

टिप्पणी—इनि परे यु-पु-उभयोरप्यागमयोर्विधानात् श्राययति श्रापयति इत्युभयोरुदाहरणयोर्निर्देशाद् आकारान्तेभ्यो धातुभ्यः सामान्येन यु-पु-आगमौ काशकृत्स्नमते द्रष्टव्यौ । कातन्त्रे (३।८।२१,२२) तु पाणिनीयशास्त्रवत् (७।३।३६,३७) व्यवस्थया युक्पुगागमौ विधीयेते ।

अपि च श्रा पाके (१।६१५) इत्यस्य घटादिषु पाठात्, घटादीनां च मानुबन्धत्वात् पाणिनीमते पाके श्रपयति, अन्यत्र श्रापयति इति भवति । परन्तु काशकृत्स्नव्याकरणे मानुबन्धानां ह्रस्वत्वविधानस्याभावात् (तत्र णानुबन्धत्वम् एव प्रतिषिध्यते—द्र० क्रमिक संख्या ५२) श्रपयति इति न भवति ।

---

१. का० धा० व्या० १।६१२ तमे; ९। ३०८ तमे च सूत्र उद्धृतम् ।
२. का० धा० व्या० १।६१५ तमे सूत्र उद्धृतम् ।
३. का० धा० व्या १।६१५ तमे सूत्र उद्धृतम् ।

## ५६—ज्ञाजनोर्जा ।[1]

अर्थः—ज्ञ जन इत्येतयोर्धात्वोः स्थाने जा-आदेशो भवति। यथा—जानाति, जायते।

टिप्पणी—कातन्त्रे जा जनेर्विकरणे, ज्ञश्च (३।८।८१,८२) इति पाठो दृश्यते। पाणिनीये तु काशकृत्स्नवदेव पाठः।

## ५७—क्र्यादेर्ना ।[2]

अर्थः—क्रीप्रभृतिभ्यो धातुभ्यो ना-विकरणो भवति सार्वधातुके परतः। यथा—क्रीणाति जानाति।

## ५८—शमादर्शने मानुबन्धः ।[3]

टिप्पणी—कर्नाटकवृत्तावस्य सूत्रस्येह (१।६१३ धातुसूत्रे) पाठः प्रमादजः। वस्तुतो नैतत् स्वतन्त्रं सूत्रमपि तु शमोऽदर्शने इत्यस्य धातुगणसूत्रस्य (द्र० १।६२५) प्रमादजं पाठान्तरम्। अस्य कर्नाटकव्याख्याऽपि चिन्त्या प्रमादजा च। इहास्मदीयस्य काशकृत्स्नधातुव्याख्यानस्य १०३ तमे पृष्ठेऽधस्तात् द्वितीया टिप्पण्यवलोकनीया।

## ५९—स्वार्थे यिन् ।[4]

टिप्पणी—अस्य सूत्रस्य पाठः सन्दिग्धो वर्तते। चन्नवीरकविना च यथासूत्रमेव व्याख्या विहिता। सूत्रमिदम् ऊर्जने छदिः (१।६१८) इति धातुसूत्रस्य व्याख्यान उद्धृतं वर्तते। एतेन प्रतीयते यदिह घटादौ चौरादिकस्य छद संवरणे (धातुसूत्र ९।२९) इत्येवं पठितस्य ऊर्जने बलेऽर्थे मानुबन्धत्वं विहितम्। तथा सति इन् इत्यस्य स्थाने यिन् इति पाठो लेखक प्रमादज एव। एवं च नैतत् स्वतन्त्रमिदं सूत्रमपितु अग्रे व्याख्यायमानस्य चुरादेरिन् स्वार्थे (क्रमिक संख्या ११८) सूत्रस्यार्थतोऽनुवादो ज्ञेयः। यिन इति पाठस्य तु प्रकृते 'छदयति' प्रयोगे न कश्चिदुपयोगः।

---

१. का० धा० व्या० १।६१६ तमे सूत्र उद्धृतम्।
२. का० धा० व्या० १।६१६ तमे सूत्र उद्धृतम्।
३. का० धा० व्या० १।६१६ तमे सूत्र उद्धृतम्।
४. का० धा० व्या० १।६१८ तमे सूत्र उद्धृतम्।

## ६०—सदेः सीदः ।[1]

अर्थः—सद्लृ-धातोः सीद-आदेशो भवति [ अन्विकरणे परतः ]। यथा—सीदति ।

टिप्पणी—सूत्रमिदमनयैवानुपूर्व्या कातन्त्रे ( ३।८।८० )ऽपि पठ्यते ।

## ६१—शदेः शीयः ।[2]

अर्थः—शद्लृ-धातो शीय-आदेशो भवति [ अन्विकरणे परतः ]। यथा—शीयति ।

टिप्पणी—पाणिनीयाः शदेः शितः ( अष्टा० १।३।६० ) इति नियमेन शिद्विकरणेष्वात्मनेपदमामनन्ति । चन्नवीरकृतायां कर्नाटकव्याख्यायां तु परस्मैपदं निर्दिश्यते । कातन्त्रेऽपि शदधातोरन्विकरण आत्मनेपदविधायकं सूत्रं नोपालभ्यते । तुदादौ ( ५।६० ) त्वस्य धातोः कर्नाटकव्याख्याने शीयति शीयते इत्युभयपदं निर्दिश्यते, तत्कथमिति न ज्ञायते ।

## ६२—गतौ न लोपः ।[3]

अर्थः—गत्यर्थेऽञ्चुधातोर्नकारस्य लोपो भवति । यथा—अचति अचते । गतेरन्यत्र—अञ्चति अञ्चते ।

## ६३—खनेः खाः ।[4]

अर्थः—खन-धातोः खा-आदेशो भवति । यथा—परिखा, खेयम्, खातः ।

टिप्पणी—कर्नाटकवृत्त्या नेदं विज्ञायते यत् खा-आदेशः केषु प्रत्ययेषु परतो भवति । पाणिनीयास्तु जनसनखनां सञ्झलोः ( ६।४।४२ ) इति नियमानुसारं झलादौ सनि झलादौ च क्ङिति प्रत्यये नकारस्याकारादेशं विदधति । यकरादौ च क्ङिति विकल्पेन आकारादेशमामनन्ति ( द्र० ये विभाषा ६।४।४३ )।

परिखा-शब्दे तु पाणिनीयमतानुसारं खन धातोर्डप्रत्ययो भवति ( द्र० काशिका ३।२।१०१ वृत्त्यन्ते ) डिति टेर्लोपे स्त्रियां टापि च परिखापदं सिद्ध्यति,

---

१. का० धा० व्या० १।६५३ तमे सूत्र उद्धृतम् ।
२. का० धा० व्या० १।६५४ तमे सूत्र उद्धृतम् ।
३. का० धा० व्या० १।६६२ तमे सूत्र उद्धृतम् ।
४. का० धा० व्या० १।६७५ तमे सूत्रे उद्धृतम् ।

एवमाखादयोऽपि। खेयम् इत्यत्र तु ई च खनः (३।१।१११) सूत्रेण क्यप्सन्नि-योगेन नकारस्य ईकारादेशो भवति-ख ई य, ततः आद् गुणः (६।१।८७) इत्यनेन गुणे खेयम् इति निष्पद्यते। काशकृत्स्नमतानुसारं तु खनः खा-आदेशो भवति। तदनन्तरं खेय-शब्द एत्वं कथमिति न ज्ञायते।

## ६४—गुहो दीर्घः।[1]

अर्थः—गुह्धातोरुकारस्य दीर्घो भवति। यथा—गूहति।

टिप्पणी—कर्नाटकटीकया नैतद् व्यज्यते यदयं दीर्घत्वं केषु प्रत्ययेषु परतो-भवति। पाणिनीयास्तु येष्वजादिषु प्रत्ययेषु परत उकारस्य गुणादेशेन गोह इति रूपं निष्पद्यते, तत्रैव ऊद् उपधाया गोहः (६।४।८९) इति सूत्रेण ओका-रस्य ऊद् आदेशं विदधति। कातन्त्रीया अप्येवमेवामनन्ति (द्र० ३।६।६३)।

## ६५—दानादीनां सन् सार्वधातुके।[2]

अर्थः—दानादीनां धातूनां सन्-आगमो भवति सार्वधातुके परतः। यथा—दीदांसति, दीदांसते; शीशांसति, शीशांसते।

टिप्पणी—(१) पाणिनीयानां मते सन्-प्रत्ययो भवति नागमः।

(२) पाणिनीयाः सामान्येन सनं विधाय, धातुसंज्ञां कृत्वा सार्वधातुकान् आर्धधातुकांश्च सर्वानेव प्रत्ययान् विदधति।

(३) इमं सन्प्रत्ययं पाणिनीयाः दानेरार्जवे, शानेर्निशाने, बधेर्वै-रूप्ये, मानेर्जिज्ञासायाम् इत्येवमर्थविशेषेष्वामनन्ति (द्र० काशिका २।१।६)।

## ६६—द्विः सनि।

अर्थः—दानादीनां द्वित्वं भवति सनि परतः। उदाहरणानि पूर्वसूत्रवदेव।

टिप्पणी—कर्नाटकटीकायाम् अभ्यासस्येत्त्वं दीर्घत्वं च कथमिति नोक्तम्, अर्थात् एतयोः कार्ययोर्विधायके सूत्रे तत्र नोद्धृते।

## ६७—अदादीनामनो लुक्।[4]

अर्थः—अदिप्रभृतीनां धातूनाम् अनो विकरणस्य लुग्भवति। यथा—अत्ति, हन्ति।

---

१. का० धा० व्या० १।६८६ तमे सूत्र उद्धृतम्।
२. का० धा० व्या० १।६९२ तमे सूत्र उद्धृतम्।
३. का० धा० व्या० १।६९२ तमे सूत्र उद्धृतम्।
४. का० धा० व्या० २।१ प्रथमे सूत्र उद्धृतम्।

## ६८—हनो घाः ।[1]

अर्थः—हनधातोर्घाऽऽदेशो भवति । यथा—घातः, घातकः, घाः, घायकः ।

टिप्पणी—( १ ) घातः इति प्रयोगो घञ्प्रत्यये उत क्तप्रत्यय इति नैव स्पष्टं भवति । यदि घञन्तस्य तर्हि घाऽऽदेशः किं हकारमात्रस्य उत सर्वस्य स्थाने भवति । यदि हकारमात्रस्य तर्हि घाः घायक इत्युदाहरणे न सिद्ध्यतः, अथ सर्वादेशस्तर्हि घातः घातकः इत्यत्र तकारश्रुतिः कुतः ? । यदि घातः इति प्रयोगः क्तान्तस्य स्वीक्रियेत तथा सति तत्सिद्धावपि घातकः इत्यत्र कथं तकारश्रुतिरिति न ज्ञायते । पाणिनीयास्तु हकारमात्रस्य कुत्वम् ( ७।३।५४ ) आमनन्ति, नकारस्य च तकारादेशम् ( ७।३।३२ ) ।

( २ ) घाः पदमिदं पाणिनीयमतानुसारं न सिध्यति । अस्य तुलना खनेः खाः ( क्रमिक संख्या ६३ ) सूत्रेग तदुदाहरणेन परिखा-पदेन कार्या ।

( ३ ) घायकः इदमपि पदं पाणिनीयमतानुसारं न सिद्ध्यति । अस्मिन् पदे घादेशे आतो युरिनि ( क्रमिक संख्या ५४ ) सूत्रेण स्वार्थे इनि ( णिचि ) प्रत्यये यु-आगमो भवति । पाणिनीयमतानुसारं तु घातकः इत्येव निष्पद्यते ।

## ६९—द्युवादीनां वृद्धिस्तिसिमिषु ।[2]

अर्थः—द्यु-प्रभृतीनां धातूनां ति-सि-मि-प्रत्ययेषु वृद्धिर्भवति । यथा—द्यौति, द्यौषि, द्यौमि ।

## ७०—रुदादेरिः सार्वधातुके ।[3]

अर्थः—रुदादीनाम् इकारो भवति सार्वधातुके परतः । यथा—रोदिति ।

टिप्पणी—( १ ) काशकृत्स्नसूत्रे सार्वधातुके सामान्येन इकार उक्तः । परन्तु पाणिनीयमतानुसारमिडागमो वलादिसार्वधातुक एव भवति ( द्र० अ० ७।२।७६ ) ।

( २ ) रुदादिषु कियन्तो धातवो गृह्यन्त इति न ज्ञायते । पाणिनीयास्तु रुदादिभ्यः पञ्चभ्यः ( ७।३।७६ ) इत्यत्र 'पञ्चभ्यः' इति स्पष्टमाहुः ।

---

१. का० धा० व्या० २।४ में सूत्र उद्धृतम् ।
२. का० धा० व्या० २।५ में सूत्र उद्धृतम् ।
३. का० धा० व्या० २।३१ तत्रै सूत्र उद्धृतम् ।

( ३ ) आदिशब्द इह प्रकारवाची उत व्यवस्थावाचीत्यपि सन्दिह्यते। अन्यत्र सर्वत्र प्रकारवाच्येवादिशब्दः श्रूयते, इहापि तथैव भवितुमर्हति।[१]

( ४ ) कातन्त्रे रुदादेः सार्वधातुके ( ३।९।३ ) इति पठ्यते।

## ७१—स्वरवद् यः कृत्।[२]

अर्थः—कृत्संज्ञको य-प्रत्ययः स्वरवद् भवति। यथा—दीवय्यम्, दीवाय्यम्; वेवय्यम्, वेवाय्यम्।

टिप्पणी—(१) पाणिनीयमतानुसार दीधय्यम् वेवय्यम् इत्यत्र यत्प्रत्ययः, दीधाय्यम्, वेवाय्यम् इत्यत्र च ण्यत् प्रत्ययो ज्ञेयः। यति गुणे दीधे य, वेवे य इत्यवस्थायां स्वरवदतिदेशेन अयादेशे उक्तरूपसिद्धिः, ण्यति तु वृद्धौ दीधै य वेवै य इत्यवस्थायां स्वरवतिदेशेन आयादेशे उक्तरूपसिद्धिर्ज्ञेया।

( २ ) पाणिनीयमतानुसारं तु यञि यति ण्यति च अय् आय् अव् आव् आदेशाः केषुचिदेव प्रयोगेषु विधीयन्ते। यथा—

वान्तो यि प्रत्यये (६।१।७९)—बाभ्रव्यः माण्डव्यः। धातोस्तन्निमित्तस्यैव ( ६।१।८० )—लव्यम्, पव्यम्, अवश्यलाव्यम्, अवश्यपाव्यम्। क्षय्यजय्यौ शक्यार्थे ( ६।१।८१)—शक्यार्थादन्यत्र क्षेयम् जेयम्। क्रय्यस्तदर्थे ( ६।१।८२ ) तदर्थादन्यत्र—क्रेयम्। भय्यप्रवय्ये च च्छन्दसि (६।१।८३)—लोके भेयम्, प्रवेयम्।

एषु क्वचित् नित्या आदेशा विधीयन्ते, क्वचिच्चर्थान्तरे तदभावः प्रतिपाद्यते।

( ३ ) स्वरवद् इत्यत्र वद्ग्रहणं स्वाश्रयकार्यप्रतिपत्त्यर्थम्[३] इति न्यायेन यदा स्वरवदतिदेशस्तदा सामान्येन सर्वत्र अयादय आदेशाः, यदा तु स्वाश्रयकार्यमर्थात् व्यञ्जनवत्त्वमाश्रीयते तदा अयाद्यादेशाभावे क्षेय–जेय–क्रेय—आदयः शब्दा उपपद्यन्ते। तदेवमेतेन काशकृत्स्नमतेन सर्वत्रैव द्विरूपा प्रयोगा उपपद्यन्ते इतीदं महद् वैशिष्ट्यं प्राक्पाणिनीयस्य काशकृत्स्नतन्त्रस्य।[४]

---

१. एतद्विषये ७४ तमसूत्रस्य तृतीया टिप्पणी द्र० ( पृ० ६२ )।

२. का० धा० व्या० २।५५ तमे सूत्र उद्धृतम्।

३. द्रष्टव्यम्—वद्ग्रहणं किमर्थम्, स्वाश्रयमपि यथा स्यात्। महा० १।१।५६॥

४. प्राक्पाणिनीया आचार्या यण्-सन्धिवद् यण्व्यवधानसन्धिमप्यामनन्ति स्म। यथा—त्रि+अम्बकम्=त्र्यम्बकम्, त्रियम्बकम्। यण्व्यवधानसन्धिविषयेऽस्माभिः 'सं० व्या० शास्त्र का इतिहास' नाम्नि ग्रन्थे (भाग १, पृष्ठ २६-३०, द्वि० सं०) विस्तरेण प्रतिपादितम्, तदिद तुलनार्थं द्रष्टुमर्हम्।

(४) अस्त्यन्यदपि महद् वैशिष्ट्यं काशकृत्स्नतन्त्रे। अत्र हि यत् ण्यत् उभावपि प्रत्ययौ सामान्येन सर्वेभ्यो धातुभ्यो भवन्ति, न पाणिनीयवद् अजन्तेभ्यो विहितेभ्यो हलन्तेभ्यश्च यत्, अन्येभ्यो ण्यदिति। इदं च वैशिष्ट्यं चन्नवीरकविना तत्र-तत्रो दाहृतेभ्यः कृदन्तेभ्यः पदेभ्यः स्पष्टं विज्ञायते। तद्यथा—मेद्यम् मैद्यम् (१।५६८, पृष्ठ ९५); दोह्यम् दौह्यम् (१।५९, पृष्ठ १२८); भव्यम् भाव्यम् (२।६६, पृष्ठ १२८); तर्ष्यम् तार्ष्यम् (२।६४, पृष्ठ १४३); कोप्यम् कौप्यम् (३।६६, पृष्ठ १४४; योप्यम् यौप्यम् (३।७०, पृष्ठ १४४); डेप्यम् डैप्यम् (३।६७, पृष्ठ १४४) इत्याद्युदाहृतानि पदानि द्रष्टव्यानि। एषूदारणेषु पाणिनीय-मतानुसारम् उपधायां विद्यमानानाम् इ उ ऋ वर्णानां (ण्यत्पक्षे) वृद्धिर्न प्राप्नोति, इत्यपि वैशिष्ट्यं काशकृत्स्नतन्त्रे। एवमेवानेकत्र कनार्टकटीकायां यत्ण्यत्-प्रत्ययाभ्यां सह क्यपप्रत्ययान्ताः शब्दा अप्युदाह्रियन्ते। तद्यथा—द्युत्यम् द्यौत्यम् (१।५६४, पृष्ठ ९४); घुट्यम् घोट्यम् घौट्यम् (१।५६९, पृष्ठ ९५)। अत्र द्युत्यम् घुट्यम् इति क्यपः, घोट्यम् इति यतः, द्यौत्यम् घौट्यम् इति ण्यतो यथा-क्रमं ज्ञेयाः। एतेन काशकृत्स्नमते क्यप यत् ण्यत् त्रयोऽप्यौत्सर्गिकाः प्रत्ययाः प्रतीयन्ते, न पाणिनीयतन्त्रवद् व्यवस्थया विहिता इति।

## ७२—ह्रस्वपूर्वयोर्हकारचवर्गयोः कवर्गः।[१]

अर्थः—ह्रस्वं पूर्वं यस्मात् तादृशस्य हकारस्य चवर्गस्य च कवर्गो भवति। यथा—दुह् + ति = दुग् + ति = दुग् + धि = दोग्धि, वच् + ति = वक्ति।

## ७३—तनादेरुः।[२]

## तनादेरुविकरणः।[३]

अर्थः—तनुप्रभृतिभ्यो धातुभ्य उ-विकरणो भवति सार्वधातुके परतः यथा—तनोति।

टिप्पणी—(१) उपरि निर्दिष्टौ द्वावपि पाठावेकस्यैव सूत्रस्य। अस्माकं मते तनादेरुः इति मूलपाठः। यथा दिवादेयन् (क्रमिक संख्या १९), क्र्यादेर्ना (क्रमिक संख्या ५७) इति। द्वितीयपाठे विकरणशब्दोऽर्थतः प्रविष्टः। विकरण-पदसहितान्यपि कानिचित् सूत्राणि दृश्यन्ते। यथा—स्वादेर्नु विकरणः (क्रमिक संख्या ९१) तुदादेरग् विकरणः (क्रमिक संख्या ९३) इति।

१. का० धा० व्या० २।५९ तमे सूत्र उद्धृतम्।
२. का० धा० व्या० २।६२ तमे सूत्र उद्धृतम्।
३. का० धा० व्या० ७।१ तमे सूत्र उद्धृतम्।

विकरणपदस्य पौनःपुन्येन पाठ एव ज्ञापको यदिदं न सूत्रांश इति। कातन्त्रेऽपि तनादेरुः (३।४।३७) इत्येव पठ्यते।

(२) तनादेरुः—इदं सूत्रम् आदादिकस्य ऊर्णुञ्-धातुप्रसङ्गे कर्नाटक-टीकायामुद्धृतं दृश्यते। एतद्विषये—

(क) काशकृत्स्नमते ऊर्णुञ् (२।६२) धातोरुकारोऽनुबन्धः, अथवा धातोः स्वरूपम् ऊर्णञ् वाऽऽसीत्, लेखकप्रमादाद् ऊर्णुञ् सम्पन्न इति सन्दिह्यते। द्वितीयपक्षस्य पोषका इहैव निर्दिष्टा ऊर्णन् ऊर्णकः ऊर्णिता ऊर्णनः प्रभृतयः कृदन्ताः प्रयोगा उपलभ्यन्ते। पाणिनीये मते उकारो नानुबन्धः।

(ख) णु-भागस्य उकारस्य लोपे ऊर्णञ् पाठे वा ऊर्णोति ऊर्णुतः ऊर्णुते आदिप्रयोगाणां सिद्धये उविकरणनिर्देश आवश्यकः। कर्नाटकटीकाकारेण तदर्थं तनादेरुः इति सूत्रमुद्धृतम्, परन्तु धातुरयं तनादौ न पठ्यते, अतोऽस्य धातोस्तनादिवदतिदेशविधायकेन नियमेनावश्यं भाव्यम्, नहि तदृते उविकरणः प्राप्नोति। टीकाकारेण न तादृग् वचनं किञ्चिदुद्धृतम्। अत्र पूर्वव्याख्यातस्य दिवादेर्यन् (क्रमिक संख्या १५) इति सूत्रस्य टिप्पण्योऽपि द्रष्टव्याः। एतद्वि-षयेऽग्रिमसूत्रटिप्पण्यपीह द्रष्टव्या।

## ७४—ब्रुवादेरी तिसिमिपु।[४]

अर्थः—ब्रूञ्प्रभृतीनां धातूनाम् ईकारागमो भवति ति-सि-मि-प्रत्ययेषु परतः। यथा—ब्रवीति ब्रवीषि ब्रवीमि।

टिप्पणी—(१) ब्रूञ् धातोः पूर्ववर्तिनोः ऊर्णुञ् ष्टुञ् (२।६२,६३) धात्वोर्व्याख्याने चन्नवीरकविना ऊर्णोति ऊर्णुते ऊर्णीति स्तौति स्तवीते स्तुते प्रयोगाः प्रदर्शिताः। तत्र ऊर्णीति स्तवीते इत्यनयोरीकारागमः कथमिति न तेन कविना प्रत्यपादि। पाणिनेर्मते तुरुस्तुशम्यमः सार्वधातुके (७।३।९५) नियमेन स्तवीते इत्यत्र ईकारागमः संभवति, परन्तु सूत्रपठितयोः शम्यमोर्धात्वोरीकारा-गमश्छन्दस्येव संभवति, यतो लोके विकरणसद्भावात् धातोरव्यवहितस्य सार्वधातु-कप्रत्ययस्य सम्भव एव नास्ति। अतो व्याख्याकाराणामते पाणिनीयं सूत्रं छन्दोविष-यकमेव, तेन तवीति स्तवीति प्रयोगावपि छान्दसौ। अत एव आपिशलाः तुरुस्तु-शम्यमः सार्वधातुकासु छन्दसि[१] (काशिकायाम् ७।३।९५ उद्धृतम्) स्पष्टमेव

---

४. का० धा० व्या० २।६४ तमे सूत्र उद्धृतम्।

१. आपिशलव्याकरणस्य विषये तदुपलब्धसूत्राणां मतानां वा विषयेऽस्माकं 'सं० व्या० शास्त्र का इतिहास' नामा ग्रन्थो (भाग १, पृष्ठ १३२–१४४ द्वि० सं०) द्रष्टव्यः।

छन्दसि पदमामनन्ति। पाणिनिस्तु लोके केवलं ब्रुञ्-धातोरेव ईडागमं विदधाति (द्र०७।३।९३), परन्तु काशकृत्स्न आचार्यो ब्रुवादेरी इत्यत्र प्रकारवाचिनमादिपदं पठति। एतेनैतावत् स्पष्टं यत्काशकृत्स्नमते ईकारागमोऽन्येभ्योऽपि धातुभ्यो भवति। एतस्य पुष्टिश्चन्नवीरकविना उद्धृताभ्याम् ऊर्णीते स्तवीते प्रयोगाभ्यामपि जायते।

( २ ) अपरमप्येकमस्ति विचारणीयम्—ऊर्णीते इत्यत्र तनादेरुः इति सूत्रेण उविकरणः कस्मान्न भवतीति टीकाकारेण नेह किञ्चित् कारणमुपन्यस्तम्। वयन्त्वनुमिनुमो यत्तनादिवत् कार्यातिदेशात् वद्ग्रहणेन स्वाश्रयकार्यम् अर्थात् अन्विकरणस्य लुक्कार्यमपि भवति। अथवादादौ पाठसामर्थ्यात् विकरणस्य लुगपि द्रष्टव्यः। एतद्विषये दिवादेर्यन् ( क्रमिक संख्या १५ ) सूत्रव्याख्यानमपि द्रष्टव्यम्।

( ३ ) काशकृत्स्नस्य रुदादेरिः सार्वधातुके ( क्रमिक संख्या ७० ) ब्रवादेरी तिसिमिपु ( क्रमिक संख्या ७४ ) सूत्रयोः पाणिनेः तुरुस्तुशम्यमः सार्वधातुके ( ७।३।९५ ) अस्तिसिचोऽपृक्ते ( ७।३।९६ ) बहुलं छन्दसि ( ७।३।९७ ) रुदश्च पञ्चभ्यः ( ७।३।९८ ) रुदादिभ्यः सार्वधातुके ( ७।२।७६ ) ईशः से ( ७।२।७७ ) ईडजनोर्ध्वे च ( ७।२।७८ ) इत्येतैः सूत्रैः सहैकवाक्यतया प्रतीयते यद्विकरणस्य लुकि वलादिसार्वधातुके परतः इडीडागमौ सामान्येन भवत इति। एतस्य पोषणं माध्यन्दिनीयपदपाठेनापि भवति। तद्यथा—माध्यन्दिनसंहितायां शमीष्व ( १।१५ ) इति पदं ईडागमयुतं श्रूयते। अस्य पदपाठे शमीष्व। शमीष्वेति शमिष्व इत्येवं पठ्यते। पदकाराणां चैष सामान्येन नियमो यत्र ते सांहितिकं दीर्घत्वं मन्यन्ते तत्र पदपाठे तं ह्रस्वीकृत्य अर्थात् लौकिकं सम्पाद्य[1] पठन्ति। एतन्नियमानुसारं पदकारमते शमीष्व इति छान्दसं दीर्घत्वम्, शमिष्व इति लौकिकं रूपमिति। सत्येवं भवति विचारणीयम्, यत्पदकारमते लौकिकत्वेनाभ्युपगते शमिष्व-प्रयोगे विकरणस्य लुक् इडागमश्च कथमजायतेति।

अस्मन्मतानुसारं तु देवयुगीनायामादिसंस्कृतभाषायाम्, या वैदिकपदबहुलत्वादतिभाषापदवाच्याऽभूत्[2] तस्यां प्रत्येकधातोर्विभिन्नगणकार्याण्यभूवन्,

१. तुलना कार्या—यत्तु छान्दसं वाक्यं तत्तत् कुर्यात्तु लौकिकम्। बृहद्देवता।

२. द्र० आर्यभाषाऽतिभाषा च, अतिभाषा तु देवानाम्। भरत नाट्यशास्त्र १७।२७, २८ ( बड़ोदा सं० ) ॥ अत्राहाभिनवगुप्तः—वैदिकपदबाहुल्यादार्यभाषातो विलक्षणत्वमस्याः। अस्मिन्नपृष्ठस्था प्रथमा टिप्पण्यपीह द्रष्टव्या।

प्रत्येकं च धातुः सेडनिड्भेदेन द्विधाऽऽसीत्, प्रत्येकधातोश्च वलादिरार्धधातुके इड्-ईडागावभूताम्, एवं विकरणलुक्पक्षे वलादौ सार्वधातुकेऽपि इड्-ईडागमावबाधेताम् इति। पाणिनिनाऽडागमरूपेण निर्दिष्टा अरुदत् आदत् (अष्टा० ७।३।९९, १००) प्रभृतयः प्रयोगा म्वौदादिक-विकरणपक्षीया द्रष्टव्याः। वस्तुतः प्राचीनाया अतिभाषा नाम्ना[1] आदिभाषा नाम्ना[1] वा स्मृतायाः संस्कृतभाषायाः स्वरूपपरिज्ञानान्तरम् अद्ययावत् कृतं भाषाविज्ञानानुशीलनं पुनरनुशीलनीयं भविष्यति। तेन च सुरभारतीरेव संसारस्यादिभाषा सर्वभाषाणां जननीति भारतीयं मतमञ्जस्यैव पुष्टिं गमिष्यति। साम्प्रतिकं भाषाविज्ञानं त्वत्यन्तं ह्रासं प्राप्ताया संस्कृतभाषाया स्वरूपस्याप्येकदेशमधिगत्यैव प्रवृत्तम्। तत्रैकस्य परमभाषाविज्ञत्वेन प्रसिद्धस्य बॉपनाम्नो विदुष एकमेवोदाहरणमधस्तान्निर्दिश्यते। बॉपनामा विद्वान् लिखति—

कतिपयशब्दानां तुलनयैतज्ज्ञायते यद् योरोपीयभाषाणामपेक्षया साम्प्रतिका वङ्गभाषा संस्कृतभाषातोऽधिकदूरा वर्तते। वङ्गभाषाया 'बाप' 'बोहिनी' शब्दयोः संस्कृतभाषायाः पितृस्वसृशब्दाभ्यां सह नास्ति दूरतोऽपि संबध इति।[2]

परमभाषाविज्ञत्वेन प्रसिद्धस्य बॉपनाम्नो विदुषः संस्कृतभाषायाः परिज्ञानं कियान् आसीदिति अनेनोदाहरणेन विस्पष्टम्। भारतीया बालाः, येषां संस्कृतभाषायां चञ्चुप्रवेश एव भवति तेऽपि जानन्ति यत् संस्कृतभाषायां पितृसमानार्थकः वापशब्दः स्वसृपर्यायो भगिनीशब्दश्च विद्यत इति (अभ्यामेव सह वङ्गभाषायाः 'बाप-बोहिनी' शब्दयोः साक्षात् सम्बन्धो वर्तते) अत एवाशेषशेमुषीसम्पन्नेन वेदविद्योद्धारकेन स्वामिदयानन्देन पाश्चात्यानां संस्कृतभाषाज्ञानविषये निरस्तपादपे देशे एरण्डोऽपि द्रुमायते इति न्याय उद्धृतः।[3]

## ७५—ह्वादेर्द्विः।[4]

अर्थः—हुप्रभृतीनां द्विः = द्विर्वचनं भवति। यथा—जुहोति बिभेति।

---

१. भरतनाट्यशास्त्र १७।२८ (बड़ोदा सं०), अत्रैव 'आदिभाषा' इति पाठान्तरमप्यवलोकनीयम्।

२. एतद्विषये पण्डितभगवद्दत्तकृते 'वैदिकवाङ्मय का इतिहास' नाम्नो ग्रन्थस्य प्रथमे भागे (पृष्ठ ६६, ६७, द्वि० सं०) विशेषतोऽवलोकनीयम्।

३. सत्यार्थप्रकाश एकादश समुल्लास, पृष्ठ २९२, सं० १४।

४. का० धा० व्या० २।६५ तमे सूत्र उद्धृतम्।

टिप्पणी—(१) काशकृत्स्नीये धातुपाठे जुहोत्यादिर्न पृथग्गणत्वेन पठ्यते, अदादिगण एव ह्रादीनामप्यन्तर्भावः। अत एव ह्रादिष्वपि विकरणस्य लुकं विधाय द्वित्वमुच्यते। कातन्त्रकारोऽपि काशकृत्स्नतन्त्रमेवानुसार, वोपदेवश्च कातन्त्रम्। अत एवैषां धातुपाठे नवगणा एवोपलभ्यन्ते।

(२) लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणमिति परिभाषाऽपि ह्रादीनां लुग्विकरणत्वमेव द्योतयति। इह का० धा० व्या० २।१ सूत्रस्था टिप्पण्यवलोकनीया।

## ७६—कवर्गहकारयोश्चवर्गः।[1]

अर्थः—अभ्यासस्य कवर्गस्य हकारस्य च चवर्गो भवति। यथा—जुहोति।

## ७७—पूर्वोऽभ्यासः।[2]

अर्थः—द्विर्भावे पूर्वोऽभ्याससंज्ञो भवति।

टिप्पणी—सूत्रमिदं कातन्त्रे (३।५।४) ऽपीत्थमेव पठ्यते।

## ७८—द्वयमभ्यस्तम्।[3]

अर्थः—द्वयं द्वितीयम्[4] अभ्यस्तसंज्ञं भवति।

टिप्पणी—(१) कातन्त्रेऽपीदं सूत्रमित्थमेव पठ्यते (द्र० ३।५।५)

(२) अस्मिन् काशकृत्स्नीये सूत्रे द्वयं पदं द्वितीयार्थे प्रयुज्यते। पाणिनिमते उभेऽभ्यस्तम् (६।१।१५) इत्यनेनोभयोरपि भागयोरभ्यस्तसंज्ञा भवति। यद्यपि काशकृत्स्नमते द्वयमित्यनेन उभयार्थो ग्रहीतुं शक्यते, तथापि अभ्यस्ताद् यु अभ्यस्ते (क्रमिकसंख्या ८३) इति सूत्रे अभ्यासात् परेऽभ्यस्ते परतः 'यु' इत्ययमागमो विधीयते, तेन ज्ञायते काशकृत्स्नमते द्वितीयस्यैव भागस्याभ्यस्तसंज्ञा भवतीति।

## ७९—अभ्यासस्य धुटां तृतीयाः प्रथमाः।[5]

अर्थः—अभ्यासस्य धुटां (=वर्गाणां प्रथम-द्वितीय-तृतीय-चतुर्थाणां) स्थाने

---

१. का० धा० व्या० २।६५ तमे सूत्र उद्धृतम्।

२. का० धा० व्या० २।६५ तमे सूत्र उद्धृतम्।

३. का० धा० व्या० २।६५ तमे सूत्र उद्धृतम्।

४. द्वयमित्यस्य द्वितीयमित्यर्थो यद्यप्यञ्जसा न सम्भवति, तथापीदमयमेवार्थोऽभिप्रेतः। द्रष्टव्या एतत्सूत्रस्था द्वितीया टिप्पणी

५. का० धा० व्या० २।६५ तमे सूत्र उद्धृतम्।

तृतीयाः प्रथमाश्च भवन्ति। (प्रथमद्वितीयानां स्थाने प्रथमाः, तृतीयचतुर्थाणां स्थाने तृतीयाः भवन्ति ) यथा – हुहोति = झुहोति = जुहोति ।

टिप्पणी—( १ ) काशकृत्स्ने तन्त्रे 'धुट्' इतीयं पारिभाषिकी संज्ञा। काशकृत्स्नस्य संक्षिप्ते संस्करणे कातन्त्रे धुट्संज्ञा एवं परिभाष्यते—धुट् व्यञ्जनमनन्तस्थानुनासिकम् ( २।१।१३ )।

( ख ) यद्यपि धुट्-ग्रहणेन वर्गाणां प्रथमतृतीयाणामपि ग्रहणं भवति तथापि प्रथम-तृतीयाणां स्थाने प्रथमतृतीयाणां विधाने प्रयोजनं नास्तीति कृत्वा द्वितीयानां स्थाने प्रथमाः, चतुर्थाणां स्थाने तृतीया इत्येवाऽभिप्रायोऽत्र ज्ञेयः। अत एव कातन्त्रे द्वितीयचतुर्थयोः प्रथमतृतीयौ (३।५।११) इति स्पष्टमेवोच्यते।

( ग ) पाणिनीयाः कुहोश्चु ( ७।४।६२ ) सूत्रेण हकारस्य झत्वं विदधते, ततश्च अभ्यासे चर्च ( ८।४।५४ ) इत्यनेन जत्वं च। काशकृत्स्नीयतन्त्रेऽप्ययमेव क्रमः स्यादिति सम्भाव्यते। कातन्त्रे तु हो जः (३।५।१२) इत्यनेन जत्वमेव विधीयते।

## ८०—ह्रस्वोऽभ्यासस्य।[1]

अर्थः—अभ्यासस्य ह्रस्वो भवति। भीभेति = बीभेति = बिभेति।

टिप्पणी—कातन्त्रे ह्रस्वः ( ३।५।१५ ) इति सूत्रेण ह्रस्वत्वं विधीयते।

## ८१—अभ्यासस्य ऋवर्णस्य इकारम्।[2]

अर्थः—अभ्यासस्य ऋवर्णस्य (=ऋ ॠ वर्णयोः) स्थाने इकारादेशो भवति। यथा—पृपर्ति = पिपर्ति; ऋऋति = इअर्ति = इयर्ति (द्र० अग्रिम ८३ सूत्रम्)।

## ८२—ॠतेरीरूरौ।[3]

अर्थः—ॠकारस्य ईर् ऊर् आदेशौ भवतः। यथा—कॄति = कीर्तिः; पॄतिः = पूर्तिः।

टिप्पणी—(१) अत्र सूत्रे क ॠकारस्य स्थाने ईर् 'भवति क च ऊर् इति न स्पष्टमुच्यते। पाणिनीयानुशासने ॠत इद् धातोः, उदोष्ठ्यपूर्वस्य (७।१।१००,

१. का० धा० व्या० २१६६ तमे सूत्र उद्धृतम्।
२. का० धा० व्या० २१६८ तमे सूत्र उद्धृतम्।
३. का० धा० व्या० २१६८ तमे सूत्र उद्धृतम्।

१०२ ) इत्याभ्यां व्यवस्थया इत्त्वमुत्त्वं चोच्यते। ततश्च दीर्घत्वम्। कातन्त्रेऽपि ऋदन्तस्येरगुणे उरोष्ठ्योपधस्य च ( ३।७।४२, ४३ ) इत्याभ्यां व्यवस्थयैव इरुरौ उच्येते।

( २ ) अत्र अग्रे व्याख्यायमाने ऋ इर्, इरुरो रीरूरौ ( क्रमिक संख्या १०२, १०३ ) सूत्रे, ऋत ईर्, ऋत ऊर् ( क्रमिक संख्या १०४, १०५ ) इति च सूत्रे अपि द्रष्टव्ये।

## ८३—अभ्यासाद् युु अभ्यस्ते।[1]

अर्थः—अभ्यासात् परो यु इत्यागमो भवति अभ्यस्ते परतः। यथा—इअर्ति = इ य् अर्ति = इयर्ति।

## ८४—यनि दीर्घश्च।[2]

अर्थः—[ दिवादिनां ] यनि परे दीर्घो भवति। यथा—दिव्यति दीव्यति।

टिप्पणी—पूर्वनिर्दिष्टः कर्नाटकटीकानुसारी सूत्रार्थोऽपूर्ण इव प्रतिभाति। उक्ते सामान्येऽर्थे शमादेर्दीर्घो यनि (क्रमिक संख्या ८७) इत्यग्रे व्याख्यायमानं सूत्रं व्यर्थं स्यात्। 'शाम्यति' इत्यत्राप्यनेनैव दीर्घत्वं सेत्स्यति किमन्येन सूत्रेण प्रयोजनमिति। अपि च सूत्रे पठ्यमानश्चकारोऽपि कस्यचित् पदस्यानुवृत्तिं द्योतयति तच्च कर्नाटकटीकायाम् नैव निर्दिश्यते। पाणिनीयलक्षणानुसारं तु हलि च ( ८।२।७७ ) इति सूत्रेण रेफान्तस्य वकारान्तस्य च धातोरुपधायां वर्तमानयोरिकारोकारयोर्दीर्घत्वं भवति।

## ८५—ऋ ईर् यनि कृति च।[3]

अर्थः—ऋकारस्य स्थाने ईर् आदेशो भवति यनि कृति च परतः। यथा—जीर्यति, जीर्णः।

टिप्पणी—( १ ) यस्मिन् कृति गुणो न भवति तत्रैव ईर् आदेशो भवति। यथा—जीर्यति, जीर्णः।

( २ ) इह ऋतेरीरूरौ ( क्रमिक संख्या ८२ ) इति सूत्रस्य टिप्पण्यपि द्रष्टव्या।

---

१. का० धा० व्या० २७२ तमे सूत्र उद्धृतम्।
२. का० धा० व्या० ३१२ मे सूत्र उद्धृतम्।
३. का० धा० व्या० ३१२८ तमे सूत्र उद्धृतम्।

## ८६—ओ लोपो यनि ।[1]

अर्थः—ओकारान्तस्य धातोरोकारस्य लोपो भवति यनि परतः । यथा—शो यति = श्यति = श्यति, स्यति, छयति ।

## ८७—शमादेर्दीर्घो यनि ।[2]

अर्थः—शमप्रभृतीनां धातूनां दीर्घो भवति यनि परे । यथा—शाम्यति ।

टिप्पणी—कातन्त्रे शमादीनां दीर्घो यनि ( ३।८।६६ ) इत्येवं सूत्रमिदं पठ्यते ।

## ८८—अनुदात्तङानुबन्ध आत्मनेपदम् ।[3]

अर्थः—अनुदात्तानुबन्धाद् धातोर्ङानुबन्धाच्चात्मनेपदं भवति । यथा—एधते, शेते ।

## ८९—स्वरितञानुबन्ध उभयपदम् ।[4]

अर्थः—स्वरितानुबन्धाद् धातोञानुबन्धाच्चोभयपदं भवति । यथा—पचते, पचति । कुरुते, करोति ।

टिप्पणी—पाणिनीयाः स्वरितञानुबन्धेभ्यो धातुभ्यः कर्त्रभिप्राये क्रियाफल एवात्मनेपदं विदधते । एवं तदनुयायनश्चान्द्रादयोऽपि । परन्तु काशकृत्स्ने कातन्त्रे च न तथा वैशिष्ट्यमुपलभ्यते । तथा चोक्तं वर्धमानेन—

> विशेषः पाणिनेरिष्टः सामान्यं सर्ववर्मणः ।
> सामान्यमनुगृह्णन्ति तत्राचार्यपरम्परा ॥ इति ।

अत्र विशेषो वोपदेवविरचितस्य कविकल्पद्रुमस्य दुर्गादासविद्यावागीश-कृतायां धातुदीपिकायां ( पृष्ठे ८ ) द्रष्टव्यः ।

विशेषे नोक्तेऽप्यात्मनेपदपरस्मैपदसंज्ञयोरन्वर्थलाभात् कर्त्रभिप्राय आत्मनेपदम्, पराभिप्राये च परस्मैपदं स्वतः सिद्धमिति कृत्वा काशकृत्स्नेन शर्ववर्मणा च नोक्तं स्यात् । उत्तरवर्तिभिराचार्यैरनुक्त्यभिप्रायमविज्ञायानुक्तिमात्रेणात्मनेपद-परस्मैपदयोरुभयोरपि सामान्येन विधानं विज्ञातं स्यात् ।

---

१. का० धा० व्या० ३।१९ तमे सूत्र उद्धृतम् ।
२. का० धा० व्या० ३।४१ तमे सूत्र उद्धृतम् ।
३. का० धा० व्या० ३।७८ तमे सूत्र उद्धृतम् ।
४. का० धा० व्या० ३।७८ तमे सूत्र उद्धृतम् ।

## ९०—उदात्तानुबन्धः परस्मैपदम् ।[1]

**अर्थः**—उदात्तानुबन्धाद् धातोः परस्मैपदं भवति । यथा—अतति ।

टिप्पणी—यस्मिन् धातौ न कश्चिदनुबन्ध आसज्यते यथा-भू सत्तायाम्, तस्मात् परस्मैपदविधायकं न किञ्चित् सूत्रं कर्नाटकवृत्तावुपलभ्यते, परन्तु काशकृत्स्ने तन्त्रे तस्य सद्भाव अवश्यम्भावी विज्ञायते । यतः कातन्त्रे तु पाणिनीयतन्त्रवत् शेषात् कर्तरि परस्मैपदम् ( ३।४।४७ ) इति पठ्यत एव ।

## ९१—स्वादेर्नुर्विकरणः ।[2]

**अर्थः**—षुञ-प्रभृतिभ्यो धातुभ्यो नु-विकरणो भवति । यथा—सुनोति ।

टिप्पणी—अत्र त्रिसप्ततितमस्य सूत्रस्य प्रथमा टिप्पण्यप्यवलोकनीया ।

## ९२—ऋनतुबन्धाद् ईः ।[3]

**अर्थः**—ऋकारानुबन्धाद् नकारानुबन्धाच्च ईः प्रत्ययो भवति । यथा—कर्तृ—कर्त्री, स्तृ—स्त्री, दण्डिन्—दण्डिनी ।

टिप्पणी—( १ ) सूत्रेऽनुबन्धशब्दः सन्दिग्धो वर्तते, तथैव कर्नाटकवृत्तिरपि सन्दिग्धा । यतः कर्नाटकवृत्तौ स्तृञ् आच्छादने ( ४।९ ) इत्यस्माद् क्विबन्तात् स्तृरूपात् स्त्री-शब्दनिष्पत्तिः प्रदर्शिता, तस्मात् ऋकारान्तान्नकारान्ताच्च ईप्रत्ययविधानं युक्तम् , ऋकारानुबन्धस्य तत्राभावात् । पाणिनीयाः ऋन्नेभ्यो ङीप् ( ४।१।५ ) इत्यत्र ऋकारान्तान्नकारान्ताच्चैव प्रातिपदिकात् स्त्रियां ङीपं विदधति । तस्मात् शुद्धः पाठः ऋनन्ताद् ईः स्यात् ।

( २ ) उणादौ तु स्त्रीपदं स्त्यायतेर्ड्रट्प्रत्ययेन साध्यते (स्त्यायतेर्ड्रट्—उणादिकोशः ४।१६६ ) तत्र टित्त्वान्ङीप् भवति ( अ० ४।१।१५ ) । वार्तिककारोऽपि संस्त्याने स्त्यायतेर्ड्रट् ( महा० ४।१।३ ) इत्युक्त्वोणादिक्रममेव पुष्णाति ।

## ९३—तुदादेरग्विकरणः ।[4]

**अर्थः**—तुदप्रभृतिभ्यो धातुभ्योऽविकरणो भवति । यथा—तुदति ।

टिप्पणी—अत्र ७३ त्रिसप्ततितमस्य सूत्रस्य प्रथमा टिप्पण्यपि द्रष्टव्या ।

---

१. का० धा० व्या० ३।७८ मे सूत्र उद्धृतम् ।
२. का० धा० व्या० ४।१ मे सूत्र उद्धृतम् ।
३. का० धा० व्या० ४।९ मे सूत्र उद्धृतम् ।
४. का० धा० व्या० ५।१ मे सूत्र उद्धृतम् ।

काशकृत्स्ने तन्त्रे स्वरविवेचना—पाणिनिप्रभृतय आचार्याः प्रत्ययविशेषेषु अनुबन्धविशेषान् आसजन्तः शब्दस्वराणां सूक्ष्मभेदानपि दृष्ट्या नोज्झितवन्तः। अत एव वृत्तिकृता जयादित्येन दात्तः गौप्तः, स्वरे विशेषः[1]। महती सूक्ष्मेक्षिका वर्तते सूत्रकारस्य (४।२।७४) इति महता कण्ठेनोक्तम्। काशकृत्स्निराचार्योऽपि स्वव्याकरणे शब्दस्वरान् यथायथं प्रदर्शयामासेति तत्प्रयुक्तैर्विविधैरनुबन्धैः स्पष्टं प्रतीयते। तद्यथा—

यद्यपि कर्नाटकवृत्तौ अन्विकरणविधायकं सूत्रं साक्षान्नोद्धृतम्, तथापि भ्वादिगणान्ते अन्विकरणो भ्वादिः समाप्तः इति लेखेन, अदाद्यारम्भे च अदादीनामनो लुक् (क्रमिक संख्या ६७) इत्युद्धृतेन सूत्रेण च स्पष्टं प्रतीयेत यत् काशकृत्स्ने तन्त्रे अन्विकरण उत्सर्गरूप आसीत्। कातन्त्रेऽपि अन्विकरणः कर्तरि (३।४।३२) इत्येव पठ्यते। काशकृत्स्निना तुदादिभ्यो धातुभ्यः अन्विकरणस्थाने अक्विकरण उच्यते। अकि ककारानुबन्धस्य यदि गुणप्रतिषेध[2] एव प्रयोजनमभविष्यत्तर्हि अनः किदतिदेशेनैव तद् असेत्स्यत्, किं पृथग् अक्विधानेन। तेन विज्ञायते काशकृत्स्ने तन्त्रे शब्दस्वराणामपि यथायथं विधानमासीत्। तेन भवति पचति इत्यत्र अनो नित्त्वादाद्युदात्तत्वं भवति, तुदति नुदति इत्यत्र च अकः प्रत्ययस्वरेण मध्योदात्तत्वम्। पाणिनीया अपि भ्वादौ शपः पित्त्वमुक्त्वा धातुस्वरमेवामनन्ति, तुदतिप्रभृतिषु च विकरणप्रत्ययस्वरम्। एवमेव काशकृत्स्ने तन्त्रे यन्विकरणस्य सन्प्रत्ययस्य च नित्त्वविधानं पाणिनीयस्वरविधानेन तुल्यं भवति। कातन्त्रे तु न स्वरविधानमाद्रियते, तेन तुदादिभ्योऽपि उत्सर्गः 'अन्' विकरण एवोच्यते, तत्परे च तुदादेरनि (३।७।२९) सूत्रेण गुणाभावो विधीयते। सत्यप्येवम् अनि श्यनि सनि च नित्त्वं कातन्त्रे कस्मादुच्यते इति विचारणीयमेव।

## ९४—सकृद् बाधितो विधिर्बाधित एव।[3]

अर्थः—एकवारं यो विधिर्येन केनापि बाधितः, स बाधित एव भवति,

---

१. विपाश उत्तरकूले निर्मितेषु कूपेषु 'दात्ताः, गौप्ताः' आद्युदात्ताः प्रयुज्यन्ते, दक्षिणकूले निर्मितेषु त एवान्तोदात्ता इत्यभिप्रायः।

२. कर्नाटकटीकायां 'ककारं वृद्धिनिषेधार्थम्' इति पठ्यते। तदशुद्धम्, नहि कस्मादपि तुदादिगणस्थादकि वृद्धिः प्रसक्ता वर्तते।

३. का० धा० व्या० ५।१ प्रथमे सूत्रे उद्धृतम्। सम्भवतः काशकृत्स्नीयपरिभाषापाठस्थेयं परिभाषा स्यात्।

न पुनः प्रवर्तते। यथा—'तुदति' इत्यत्र विकरणस्य कित्त्वाद् गुणः प्रबाधितः, स पुनर्न प्रवर्तते।

टिप्पणी—तुलना कार्या—सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेव ( परिभाषावृत्तिः सीरदेवीया २०, परिभाषेन्दुशेखरः ४० )।

## लृदनुबन्धान्नुः।[2]

अर्थः—लृकारानुबन्धाद् [ तुदादिगणस्थाद् ] धातोः 'नु' आगमो भवति। यथा—मुच्लृ–मुञ्चति।

टिप्पणी—( १ ) कर्नाटकवृत्तौ लृदनुबन्धानुः इत्येवं पठ्यते स चापपाठः। पूर्वत्र इदनुबन्धान्नुः ( क्रमिक संख्या ९ ) इत्यत्र पञ्चम्यन्तः पाठ उपलभ्यते, स एवास्माभिरत्रापि स्वीकृतः। एवमुत्तरत्र ९६, ९७, ९८ सूत्राणां पाठविषयेऽपि विज्ञेयम्।

( २ ) इह कर्नाटकटीकायां सूत्रवृत्तौ 'नु' स्थाने 'नुम्' इत्येवं पठ्यते। स सूत्रविरोधाच्चिन्त्यः। एवमुत्तरत्र ९६, ९७, ९८ सूत्रवृत्तिष्वपि ज्ञेयम्। पाणिनीयास्तु 'नुम्' इत्येव विदधति। यद्वा वृत्त्यनुरोधात् सर्वत्र सूत्रपाठे 'नुः' स्थाने 'नुम्' पाठो द्रष्टव्यः, एवं इदनुबन्धान्नुः ( क्रमिक संख्या ९ ) सूत्रपाठेऽपि। परन्तु तत्र कर्नाटकटीकायां सूत्रवृत्तावपि 'नु' इत्येव पठ्यते। तेन 'नु' पाठ एव ज्यायान् इत्यस्माकं मतम्।

( ३ ) वृत्तौ 'तुदादिगणस्थाद्' इति पदमस्माभिः परिवर्धितम्। तत्रैवास्य सूत्रस्य प्रवर्तनात्, एवमग्रेऽपि सूत्रवृत्तौ द्रष्टव्यम्।

## ९६—इरनुबन्धान्नुः।[3]

अर्थः—इर्–अनुबन्धाद् [ तुदादिगणस्थाद् ] धातोः 'नु' आगमो भवति। यथा—षिचिर्–सिञ्चति।

टिप्पणी—इह ९५ तमस्य सूत्रस्य सर्वा अपि १–२–३ संकेतिताष्टिप्पण्यो द्रष्टव्याः।

## ९७—ईदनुबन्धान्नुः।[1]

अर्थः—ईकारानुबन्धाद् [ तुदादिगणस्थाद् ] धातोः 'नु' आगमो भवति। यथा—कृती–कृन्तति।

१. का० धा० व्या० ५।७ में सूत्र उद्धृतम्।
२. का० धा० व्या० ५।११ में सूत्र उद्धृतम्।
३. का० धा० व्या० ५।१२ में सूत्र उद्धृतम्।

टिप्पणी—इह ९५ तमस्य सूत्रस्य सर्वा अपि टिप्पण्योऽवलोकनीयाः ।

## ९८—स्वरितानुबन्धान्नुः ।[1]

अर्थः—स्वरितानुबन्धाद् [ तुदादिगणस्थाद् ] धातोः 'नु' आगमो भवति । यथा—खिद्–खिन्दति, खिन्दते ।

टिप्पणी—इहापि ९५ तमस्य सूत्रस्य सर्वाष्टिप्पण्यो द्रष्टव्याः ।

काशकृत्स्नतन्त्रे स्वरचिन्तासद्भावेऽन्यत् प्रमाणम्—काशकृत्स्ने तन्त्रे शब्दानां स्वरविषयिकी मीमांसाऽऽसीदिति विषये पूर्वं ९३ तमस्य सूत्रस्य विवरण उक्तम्[2] । इहान्यत् प्रमाणं प्रस्तूयते । प्रकृतसूत्रे पूर्वतनेषु च ८८,८९, ९० सूत्रेषु अनुदात्तस्वरितोदात्तादीन् स्वरानधिकृत्यात्मनेपदादिकार्यं विहितम् । तत् काशकृत्स्ने तन्त्रे स्वरविवेचनायामेव सम्भवति नान्यथा । कातन्त्रे स्वरविवेचनाभावाद् आत्मनेपदादिविधायकेषु अनुदात्तादि-स्वरविशेषाणां निर्देशो नाकारि । काशकृत्स्नेन तु पाणिनिवत् स्वरविशेषानुरोधेनात्मनेपदादिविधानमुक्तम्, तेन ज्ञायते काशकृत्स्नीये तन्त्रे पाणिनीयतन्त्रवत् स्वरचिन्तनमासीदिति ।

## ९९—यजां यवराणां य्वृतः सम्प्रसारणं कानुबन्धे ।[3]
## यवराणां य्वृतः ।[4]

अर्थः—यजादिधातूनां यवराणां [ यथाक्रमम् ] इ उ ऋ सम्प्रसारणं भवति, ककारानुबन्धवति प्रत्यये परतः । यथा—वृश्चति, गृह्णाति ।

टिप्पणी—यवराणां य्वृतः इति सूत्रं यजां यवराणामित्यादिसूत्रस्यैकदेश एव प्रतिभाति । गृह्णाति पदे नाविकरणस्य किद्तिदेशविधायकं सूत्रं कन्नडवृत्तौ नोद्ध्रियते ।

## १००—य्वृणां यवरास्तृचि ।[5]
## य्वृणां यवराः ।[6]

अर्थः—इ उ ऋ इत्येतेषां स्थाने [ यथाक्रमं ] य व र आदेशा भवन्ति तृचि परतः । यथा—सृज् तृ = स्रष्टृ = स्रष्टा ।

---

१. का० धा० व्या० ५।१३ श्रे सूत्र उद्धृतम् ।   २. द्र०-पृष्ठ ६९ ।
३. का० धा० व्या० ५।१९ तमे सूत्र उद्धृतम् ।
४. का० धा० व्या० ८।१४ श्रे सूत्र उद्धृतम् ।
५. का० धा० व्या० ५।५१ तमे सूत्र उद्धृतम् ।
६. का० धा० व्या० ८।१२ श्रे सूत्र उद्धृतम् ।

टिप्पणी—( १ ) पूर्वसूत्रपाठे 'वृचि' इति न सूत्रपदं सम्भवति वृचोऽन्यत्रापि यवरादेशानां दर्शनात्। उत्तरसूत्रपाठो वृञ् धातोर्व्रातः इत्युदाहरणे निर्दिष्टस्तेनापि पूर्वमतमेव दृढीभवति।

( २ ) अस्मन्मते उभावपि पूर्वनिर्दिष्टौ पाठौ पूर्वनिर्दिष्टस्य ४० तमस्य दृशादीनां ऋॄणां यवरा अकानुबन्धे सूत्रस्यैवैकदेशा अनुवादौ वा स्त इति। तथा सति पूर्वपाठे 'वृचि' ग्रहणमनुवादमात्रमेव।

### १०१—ऊदनुबन्धाद् इड् वा।[1]

अर्थः—ऊकारानुबन्धाद् धातोरिड् वा भवति। [यथा–षिधू–सेधिता, सेद्धा।]

टिप्पणी—कर्नाटकटीकाकृता सूत्रमिदम् ओव्रश्चू छेदने (५।१९) धातावुद्धृतः, परं तत्रास्योदाहरणं न प्रदत्तम्। षिधूधातोरुदाहरणं त्वस्माभिः कल्पितमिति ज्ञेयम्।

### १०२—ॠ इर्।[2]

अर्थः—धातोॠकारस्य 'इर्' आदेशो भवति। यथा—कॄ–किरति।

टिप्पणी—अत्र १०५ तमस्य सूत्रस्य टिप्पणी द्रष्टव्या।

### १०३—इरुरोरीरूरौ।[3]

अर्थः—इर् उर् इत्येतयोर् ईर् ऊर् इत्येतौ भवतः। यथा—कॄत = किर् त = कीर्तः कीर्तवान्।

टिप्पणी—( १ ) सूत्रमिदं कातन्त्रेऽपीत्थमेव पठ्यते (द्र० २।३।५२)।

( २ ) कर्नाटकटीकाकारेण सूत्रस्यापूर्ण एवार्थो निर्दिष्टः। कातन्त्रे तु पूर्वसूत्रात् ( २।३।४४ ) विरामव्यञ्जनादिषु इत्यनुवर्तते। तेन विरामे कॄधातोः क्विपि किर् = कीः, पॄधातोः पुर् = पूः[1], व्यञ्जनादौ कीर्तः पूर्तः इति।

### १०४—ॠत ईर्।[4]

### १०५—ॠत ऊर्।[5]

अर्थः—ॠत स्थाने ईर् भवति। ॠतः स्थाने ऊर् भवति। यथा—शीर्णम्, पूर्तम्।

---

१. का० धा० व्या० ५।१९ तमे सूत्र उद्धृतम्। २. का० धा० व्या० ५।२१ तमे सूत्र उद्धृतम्,। ३. का० धा० व्या० ५।२१ तमे सूत्र उद्धृतम्। ४. का० धा० व्या० ८।२५ सूत्र उद्धृतम्। ५. का० धा० व्या० ५।१६ सूत्र उद्धृतम्।

टिप्पणी—(१) १०४,१०५ संख्यकयोः सूत्रयोः पाठः सन्दिग्धः। अस्मन्मते १०२ तमे सूत्रे इर् आदेशेन सह उर् आदेशोऽप्यपेक्षते, पुर्-पूः इत्यादौ उर् आदेशस्य दर्शनात्। तेन ऋ इरुरौ इति पूर्णं सूत्रं स्यात्। तयोरेव इर् उर् आदेशयोः १०३ संख्यकेन सूत्रेण यद्दीर्घत्वमुच्यते तस्यैवानयोः (१०४,१०५) सूत्रयोरनुवादो ज्ञेयः।

(२) पाणिनीयाः कातन्त्राश्चागुणप्रसङ्गे ऋकारान्तस्य इर्, ओष्ठ्यपूर्वस्य च उर् आदेशं प्रशासति, एवमुपधाया अपि यथासंख्यम् (द्र० 'ऋत इद् धातोः उपधायाश्च, उदोष्ठ्यपूर्वस्य च—अष्टा० ७।१।१००-१०२; ऋत इरगुणे, उरोष्ठ्योपधस्य च-कातन्त्र ३।७।४२,४३) तयोश्च दीर्घत्वं ब्रुवते।

(३) पाणिनीया कातन्त्राश्च इर् उर् भावं व्यवस्थया ब्रुवते, परन्तु काशकृत्स्नीये तन्त्रे सामान्येन इर् उर् विधानमासीदिति प्रतीयते। यथा—ओष्ठ्यपूर्वाभावेऽपि दूर्तः दूर्तवान् जूर्तम् जूर्तिः (का० धा० व्या० ८।१९२०, पृ० १८३) इत्यत्र उरादेशो विधीयते। एवं गीर्णम् गूर्णम् (का० धा० व्या० ८।२२, पृ० १८३) इत्यत्र उभयोरपि इरुरोर्विधानमुपलभ्यते।

(४) एवं काशकृत्स्ने तन्त्रे पाणिनीयकातन्त्रवद् अगुणे इत्यपि नियमो नोपलभ्यते, तथाहि गुणप्रसङ्गेऽपीह इरुर् भावावुदाह्रियेते। यथा—बॄ-बूरणम् बूरणीयम् (८।१७); भॄ-भूरणम् भूरणीयम् (८।१८); दॄ-दूरणम् दूरणीयम् (८।१९); जॄ-जूरणम् जूरणीयम् (८।२०); गॄ-गूरणीयम् (८।२२) इति।

(५) इह प्रसङ्गे ऋ ईर् यनि कृति च (क्रमिक संख्या ८५) सूत्रमपि द्रष्टव्यम्।

## १०६—य्वोर्धातोरियुवौ स्वरे।[1]

अर्थः—धातोरीकार-ऊकारयोरिय् उवौ भवतः स्वरे परतः। यथा—नू: अति = नुवति।

टिप्पणी—काशकृत्स्नसूत्रपाठे य्वोः पदेन ह्रस्वदीर्घयोर्भेदो न व्यज्यते। परन्तु टीकाकारेण दीर्घयोरीकारोकारयोरेव निर्देशः कृतः। कातन्त्रकारेण तु स्पष्टमेव ईदूतोरियुवौ स्वरे (२।२।५६) इति दीर्घयोरीदूतोरेव ग्रहणं क्रियते। पाणिनिना तु अचि श्नुधातुभ्रुवां य्वोरियङुवङौ (६।४।७७) इति सामान्येनैव निर्देशः कृतः। तदनुसारं ह्रस्वान्तयोः क्षि-रु-धात्वोः चिक्षियतुः रुरुवतुः प्रयोगयोरियुवौ भवतः। एतत्कार्यसिद्ध्यर्थं कातन्त्रे स्वरादाविवर्णोवर्णान्तस्य

1. का० धा० व्या० ५।१०५ तमे सूत्र उद्धृतम्।

धातोरियुवौ ( ३।६।५५ ) इति पृथक् सूत्रमुपलभ्यते। कातन्त्रस्य पूर्वनिर्दिष्टः ईदूतोरियुवौ स्वरे ( २।२।५६ ) सूत्रं नामिकप्रकरणस्य विद्यते। काशकृत्स्न-धातुपाठस्य कर्नाटकटीकाकृता कातन्त्रीये नामिकप्रकरणे पठितेन समानाक्षरेण सूत्रेण नुवतिपद उवादेशो विधीयते। एतेन विज्ञायते काशकृत्स्नीयं सूत्रं पाणिनि-सूत्रवत् सामान्यविषयकमेव। कातन्त्रकारेण काशकृत्स्नीयमेव सामान्य-विधायकं सूत्रं यत्किञ्चिद्भेदेन नामिक प्रकरणे पठितम्, धातोरियुवौ विधातुं च सूत्रान्तरं विहितम्।

विशेषः—पूर्वविवरणेनैतदपि विस्पष्टं भवति यत्काशकृत्स्नीयं तन्त्रं पाणिनीय-तन्त्रवत् प्रकरणानुसार्येवासीत्, न तु कातन्त्रवत् प्रक्रियानुसारीति।

## १०७—रुधादेर्नुम्।[1]

अर्थः—रुधप्रभृतिभ्यो धातुभ्यो नुम्—विकरणो भवति सार्वधातुके परतः। यथा—रुध्ति = रुणध्ति। धकारात् पूर्वं नुम् कथमिति नोक्तं वृत्तिकृता।

## १०८—चतुर्थात् तथयोर्धः।[2]

अर्थः—वर्गस्य चतुर्थाक्षरात् परे तकारथकारयोर्धकारादेशो भवति। यथा—रुणध्ति = रुणध्धि = रुणद्धि।

टिप्पणी—( १ ) कर्नाटकटीकाकारेण धकारादेशः सार्वधातुके परत इत्युक्तम्, तच्चिन्त्यम्। इह तु सार्वधातुकस्यैव तिपः तकारस्य धकारत्वमिष्टम्।

(२) कातन्त्रे घढधभेभ्यस्तथोर्धोऽधः ( ३।१०।२ ) इति, पाणिनीये च झषस्तथोर्धोऽधः ( ८।२।४० ) इति सूत्रं पठ्यते। तयोस्तुलनया विज्ञायते यत् काशकृत्स्नीये सूत्रे अधः इत्यंशस्त्रुटित इति।

## १०९—अपृक्त एकवर्णः प्रत्ययः।[3]

अर्थः—धातोः पर एकवर्णोऽपृक्तप्रत्ययः स्वार्थं प्रदाय लुप्यते।

टिप्पणी—उक्तः सूत्रार्थः कर्नाटकतन्त्रयनुसारी वर्तते। सूत्रमिदमपृक्तसंज्ञा-विधायकमथवाऽपृक्तस्य लोपविधायकमिति सन्दिग्धम्। अस्मन्मते तु सूत्रमिदम् अपृक्तसंज्ञाविधायकम्। अपृक्तस्य लोपविधायकं तु सूत्रं टीकायां त्रुटितम्। तुलना कार्या—अपृक्त एकाल् प्रत्ययः ( अष्टा० १।२।४१ ), वेरपृक्तस्य ( अष्टा०

---

१. का० धा० व्या० ६।१ प्रथमं सूत्र उद्धृतम्
२. का० धा० व्या० ६।१ प्रथमं सूत्र उद्धृतम्।
३. का० धा० व्या० ६।२२ तमे सूत्र उद्धृतम्।

६।१।६७) इति । अनयोरपि प्रथममपृक्तसंज्ञाविधायकम् अपरमपृक्तस्य लोपविधायकमिति ।

मन्ये इह कर्नाटकवृत्तौ अपृक्त एकवर्णः प्रत्ययः इत्यपृक्तसंज्ञाविधायकस्य वृत्तिभागो नष्टः, तदनन्तरं च अपृक्तस्य लोपविधायकं सूत्रं नष्टम् । तेन लुप्तसूत्रवृत्तिग्रन्थेन सह पूर्वसूत्रस्य सम्बधः समजनि । लेखकप्रमादाद् एतादृशाः पाठदोषा उपपद्यन्त इति विज्ञा विजानन्त्येव, इत्यलमधिकवर्णनेन ।

## ११०—ना ई आत्मनेपदे ।[1]

अर्थः—नाविकरणस्य आकारस्य ईकारादेशो भवति आत्मनेपदे परतः । यथा—क्रीणीते ।

टिप्पणी—( १ ) इह क्र्यादिभ्यो नाविकरणविधायकं सूत्रं कर्नाटकवृत्तिकृता नोदाहियते, यद्वा ग्रन्थान्नष्टं स्यात् ।

( २ ) सूत्रे पठितः 'आत्मनेपदे' इति न सूत्रांशः सम्भवति, तथा सति क्रीणीतः इत्यत्र परस्मैपदे केन ईत्वं स्यात् । तस्मात् क्रीणीते इत्यत्र ईत्वं विधातुं सूत्रस्यार्थतोऽनुवादो ज्ञेयः ।

## १११—क्तक्तवतू निष्ठा ।[2]

अर्थः—क्तः क्तवतुश्च प्रत्ययौ निष्ठा संज्ञौ भवतः ।

टिप्पणी—सूत्रमिदं पाणिनीये ( अष्टा० १।१।२६ ) कातन्त्रे (कृदन्ते ८४) चेत्थमेव पठ्यते ।

## ११२—निष्ठायास्तो नः ।[3]

अर्थः—निष्ठासंज्ञकस्य क्तस्य क्तवतोश्च तकारस्य नकारो भवति । यथा—मीत–मीनः, मीनवान् ।

टिप्पणी—( १ ) अस्मन्मते सूत्रमिदं कस्यचित्सूत्रस्यैकदेशो वा स्याद् अर्थतोऽनुवादो वा । तुल्नीयम्—पा० अ० ८।२।४२, कातन्त्र कृदन्त ५३१ सूत्रेण

( २ ) कर्नाटकटीकायां मत्स्यार्थकोऽपि मीनशब्दः क्तान्त इत्युक्तम् ( द्र० ८।७, पृ० १८१ ) तच्चिन्त्यम् । वस्तुतस्तदौणादिको नक् प्रत्ययान्तः ( उणा० ३।३ ) संज्ञाभूतो शब्दोऽन्य एव ।

---

१. का० धा० व्या० ८।१ प्रथमं सूत्र उद्धृतम् ।
२. का० धा० व्या० ८।७ में सूत्र उद्धृतम् ।
३. का० धा० व्या० ८।७ में सूत्र उद्धृतम् ।

## ११३—प्वादेर्ह्रस्वः ।[1]

अर्थः—पूञ् इत्येवमादीनां धातूनां ह्रस्वो भवति । यथा—पूञ् = पुनाति ।

## ११४—ग्रहादेरीट् ।[2]

अर्थः—ग्रहप्रभृतिभ्यो धातुभ्य ईडागमो भवति । यथा—ग्रहीता ।

## ११५—गृहाः पुंसि च भूम्न्येव ।[3]

अर्थः—गृहशब्दः पुँल्लिङ्गे बहुत्व एव च प्रयुज्यते ।

टिप्पणी—( १ ) अस्मन्मत इह निर्दिष्टो गृहशब्दो भार्यावाचकः । न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते इति सुभाषितेऽपि तथैव निर्देश उपलभ्यते । तथा सत्येव दारशब्दवदेतस्य पुंस्त्वं बहुत्वं च युक्तं भवति । द्र०—दाराः पुंसि भूम्नि ( क्रमिक संख्या ५३ ) इति काशकृत्स्नीयं सूत्रम् ।

( २ ) गृहाः पुंसि भूम्न्येव इत्यनुष्टुभ एकं चरणम् । पूर्वनिर्दिष्टेन भूते भव्ये वर्तमाने (क्रमिक संख्या ६) इत्यनेनानुष्टुप्छन्दोबद्धेन सूत्रेण, गृहाः पुंसि भूम्न्येव इत्यनेन किञ्चिणौ सर्वधातुभ्यः ( क्रमिक संख्या ६ ) इत्यनेन चानुष्टुप्चरणेन विज्ञायते यत्काशकृत्स्नीये तन्त्रे छन्दोबद्धान्यपि सूत्राण्यासन् । काशकृत्स्नस्य संक्षेपभूते कातन्त्रेऽपि छन्दोबद्धानि सूत्राण्युपलभ्यन्ते ।

( ३ ) पूर्वनिर्दिष्टेन दाराः पुंसि भूम्नि ( क्रमिक संख्या ५३ ) इति सूत्रेण गृहाः पुंसि च भूम्न्येव इत्यनेन च विज्ञायते काशकृत्स्नीये तन्त्रे लिङ्गानुशासनमप्यासीत् । तच्च शब्दानुशासनान्तर्गतमपि संभवति, पाणिनीयतन्त्रवत् खिलरूपेणापि ।

## ११६—शादेर्वः ।[4]

अर्थः—शृप्रभृतिभ्यो धातुभ्यो वः प्रत्ययो भवति । [ यथा—शर्वः । ]

टिप्पणी—( १ ) अस्मत्प्रतिलिप्यामुदाहरणं नास्ति, तत् किं प्रतिलिपिकर्तृप्रमादान्नष्टं मूलग्रन्थ एव वा तन्नासीदिति न ज्ञायते । अत्र शर्वः इत्युदाहरणमपेक्षते ।

---

१. का० धा० व्या० ८।८ में सूत्र उद्धृतम् ।
२. का० धा० व्या० ८।१४ में सूत्र उद्धृतम् ।
३. का० धा० व्या० ८।१४ में सूत्र उद्धृतम् ।
४. का० धा० व्या० ८।१५ में सूत्र उद्धृतम् ।

( २ ) पाणिनीये सम्प्रदाये 'शर्व' शब्द औणादिकत्वेन प्रसिद्धः ( उणादिकोश १।१५५ )। काशकृत्स्नीये तन्त्रेऽपि किमेतत्सूत्रं शब्दानुशासनस्योत तदीयोणादिप्रकरणस्येति विचारार्हम्। अत्र १३१ तमस्य सूत्रस्य तृतीया टिप्पण्यवलोकनीया।

## ११७—क्षिप्रादीनां न नो णः ।[१]

अर्थः—क्षिप्राप्रभृतीनां शब्दानां नकारस्य णकारो न भवति। यथ–क्षिप्नाति।

टिप्पणी—तुलनीयं क्षुभ्नादिषु च ( ८।४।३९ ) इति पाणिनीयेन सूत्रेण।

## ११८—चुरादेरिन् स्वार्थे ।[२]

अर्थः—चुरप्रभृतिभ्यो धातुभ्य इन् विकरणो भवति स्वार्थे। यथा–चोरयति।

टिप्पणी—तुलना कार्या चुरादेश्च ( का० ३।४।११ ) इति कातन्त्रीयेण सूत्रेण।

## ११९—लक्षेर्मीमन्मनाः ।[३]

अर्थः—लक्षधातोर्मी मन् मन इत्येते प्रत्यया भवन्ति। यथा–लक्ष्मीः, लक्ष्म, लक्ष्मणः।

टिप्पणी—पाणिनीये सम्प्रदाय एतेऽप्यौणादिकाः शब्दाः।

## १२०—नथादेरिनि दीर्घः ।[४]

अर्थः—नथप्रभृतीनां धातूनाम् इनि परे दीर्घो भवति। यथा–नाथयति।

टिप्पणी—वक्ष्यमाणेन इन् णानुबन्धवत् ( क्रमिक संख्या १२५ ) सूत्रेण णानुबन्धवदतिदेशे वृद्धिरादौ सणे ( क्रमिक संख्या १२६ ) सूत्रेण वृद्धिर्भविष्यत्येव किं नथादेरिनि दीर्घः इति सूत्रेण प्रयोजनम्। सम्भवत्येतत् सूत्रं न स्यात्, कार्यस्यानुवादमात्रमत्रोल्लिखितं कर्नाटकव्याख्यात्रा।

## १२१—चरादन्तिन् ।[५]

अर्थः—चरधातोरन्तिन् प्रत्ययो भवति। यथा—चरन्ती = देशान्तरवासी।

---

१. का० धा० व्या० ८।२९ तमे सूत्र उद्धृतम्।
२. का० धा० व्या० ९।१ प्रथमे सूत्र उद्धृतम्।
३. का० धा० व्या० ९।१० मे सूत्र उद्धृतम्।
४. का० धा० व्या ९।१९ तमे सूत्र उद्धृतम्।
५. का० धा० व्या० ९।१७५ तमे सूत्र उद्धृतम्।

## १२२—नादन्तात् सन् ।[१]

अर्थः—अदन्ताद् धातोः सन् न भवति ।

टिप्पणी—अयं नियमो नान्यतन्त्रे क्वचिदुपलभ्यते ।

## १२३—महादेरन्तः ।[२]

अर्थः—महप्रभृतिभ्यो धातुभ्योऽन्तः प्रत्ययो भवति । यथा—महन्तः = पूज्यः

## १२४—अनाकौ णानुबन्धवत् ।[३]

अर्थः—अन-अकप्रत्ययौ णकारानुबन्धप्रत्ययवद् भवतः ( णिद्वद् भवत इत्यर्थः ) । यथा—मायनम्, मायकम् ।

टिप्पणी—इह मायनम् मायकम् उदाहरणयोः सन्देहो वर्तते मायनं मापनं वा, मायकं मापकं वा । यत आकारान्तात् यु पु उभावागमौ विधीयेते । द्रष्टव्ये ५४,५५ क्रमसंख्याके सूत्रे ।

## १२५—इन् णानुबन्धवत् ।[४]

अर्थः—इन् प्रत्ययो णानुबन्धवद् भवति ( णिद्वद् भवतीत्यर्थः ) ।

टिप्पणी—अस्मत्प्रतिलिप्यां सूत्रवृत्तिपाठौ सन्दिग्धौ स्तः । प्रकरणानुसारं सूत्रपाठो वृत्तिपाठश्च शोधितः ।

## १२६—वृद्धिरादौ सणे ।[५]

अर्थः—धातोर्नामिसंज्ञकानां स्वराणां वृद्धिर्भवति णकारसहिते प्रत्यये परतः । यथा—भू इन् = भावयति ।

टिप्पणी—( १ ) नामिसंज्ञा इ ई उ ऊ ऋ ॠ ऌ ॡ स्वराणां भवति । तथा चोक्तं कातन्त्रे—स्वरोऽवर्णवर्जो नामी ( १।१।७ ) ।

---

१. का० धा० व्या० १९३ तमे सूत्र उद्धृतम् ।

२. का० धा० व्या० २०६ तमे सूत्र उद्धृतम् ।

३. का० धा० व्या० २९४ तमे सूत्र उद्धृतम् ।

४. का० धा० व्या० ३०४ तमे सूत्र उद्धृतम् ।

५. का० धा० व्या० ३०३ तमे सूत्रे चुरादिगणान्ते ( पृष्ठ २२२ ) चोद्धृतम् । तथा चन्नवीरकविना पुरुषसूक्तस्य कर्नाटकटीकायामपि 'भ्राजयै' पदनिर्वचन उद्धृतम् । ( द्र० का० धा० कर्नाटकटीकायाः भूमिका ) ।

(२) इह नामिपदस्यानुवृत्तिः कुतो वर्तत इति न ज्ञायते। सति च तदनुवृत्तौ पाचयति इत्यादिषु वृद्धिर्न स्यात्। तेन नामिपदं न कुतश्चनानुवर्तत इत्येव ज्ञेयम्, वृत्तौ तद्ग्रहणमनुवादमात्रम्।

(ग) सूत्रमिदं कातन्त्रे (३।२।४९) ऽपीत्थमेव श्रूयते।

## १२७—प्रयोज्यकर्तरि णिच्।[१]

अर्थः—प्रयोज्यकर्तरि = हेतुकर्तरि धातोर्णिज् भवति।

टिप्पणी—पाणिनीया अपि णिच्प्रत्ययमेवाहुः। कातन्त्रास्तु—धातोश्च हेतौ (३।४।१०) सूत्रेण इन् प्रत्ययमेवाहुः।

## १२८—नाम्न उपमानादाचारे आयङीयौ।[२]

अर्थः—उपमानवाचकात् नाम्न आचारे आयङ् ईय प्रत्ययौ भवत आख्याते परतः। यथा—वृषभः शिवायते, वृषभीयन्ती।

टिप्पणी—पाणिनीयास्तु आयङ् = क्यङ्, ईय = क्यच् प्रत्ययान्तयो-र्धातुसंज्ञां विधाय तदनन्तरं तिबादीनुत्पादयन्ति।

## १२९—आयङीययोर्लुक्।[३]

अर्थः—आयङ्-ईय-प्रत्यययोर्लोपो भवति नाम्नः परस्य आख्याते प्रत्यये परतः।

टिप्पणी—(१) आयङीययोर्विधानसामर्थ्यात् लोपविधानाच्च विक-ल्पेन लोपो ज्ञेयः। तेन लुगभावे—कुसुमायते कुसुमीयति, लुक्पक्षे—कुसुमाते इत्युभयं भवति।

(१) पाणिनीयव्याकरणानुसारं सर्वप्रातिपदिकेभ्य आचारे क्विब्वा वक्तव्यः (३।१।११ वा०) इति वार्तिकेन क्विब्भवति, तस्य च सर्वस्य लोपः। तेन 'कुसुमति' प्रयोग उपपद्यते। यदा तु क्यङ् तदा कुसुमायते, यदा क्यच् तदा कुसुमीयति इति भवति।

## १३०—अकर्मकेभ्यो धातुभ्यो भावे कर्मणि यङ् स्मृतः।[४]

अर्थः—अकर्मकेभ्यो धातुभ्यो भावे, तथा सकर्मकेभ्यः कर्मणि यङ् प्रत्ययो भवति। यथा—भूयते प्रभुणा, भुज्यते प्रभुः।

---

६. का० धा० व्या० चुरादिगणानन्तरमुद्धृतम् (पृष्ठ २२२)।
७. का० धा० व्या० चुरादिगणानन्तरमुद्धृतम् (पृष्ठ २२२)।
१. का० धा० व्या० चुरादिगणान्ते (पृष्ठ २२३) उद्ध्रियते।
२. का० धा० व्या० चुरादिगणान्ते (पृष्ठ २२३) उद्ध्रियते।

टिप्पणी—कातन्त्रे यङः स्थाने यण् विधीयते ( ३।४।३१ ), पाणिनीये तु यग् उच्यते ( ३।१।६७ )।

## १३१—बृहो ममन्मीन्मणिष्व ( ? )।[1]

अर्थः—बृहधातोर्मन् मीन् मणिष्व ( ? मिण् ) इत्येते प्रत्यया भवन्ति। यथा—ब्रह्म, ब्रह्मन्, ब्रह्मी ( ? ), ब्राह्मिः।

टिप्पणी—( १ ) सूत्रमिदं चन्नवीरकविना पुरुषसूक्तस्य कर्नाटकटीकायां ब्राह्मये पदव्याख्यान उद्धृतम्। द्र० का० धा० कर्नाटकटीकाया भूमिका।

( २ ) पुरुषसूक्तकर्नाटकटीकायामुद्धृतः सूत्रपाठोऽशुद्धो वर्तते।

(३) पुरुषसूक्तकर्नाटकटीकायां चन्नवीरकविना सूत्रमिदमुद्धृत्य कौशिकृत्स्न-दशपादियणादौ उक्तमिदम् इत्युक्तम्। अत्र काशकृत्स्नीयदशपाद्युणादौ इति शुद्धः पाठो द्रष्टव्यः।

( ४ ) किं काशकृत्स्नेन दशपाद्युणादेः प्रवचनमकारि ? सम्प्रत्युपलभ्यमानो दशपाद्युणादिसूत्रपाठस्तु पाणिनीयः प्रतीयत इत्युक्तमस्माभिः संस्कृतव्याकरणेतिहासे ( द्र० भाग २, पृष्ठ १७४–१७७ )।

( ङ ) बर्हरु रो मनि इति ब्रह्मन्शब्दसाधकं सूत्रं पूर्वं व्याख्यातम् ( द्र० क्रमिक संख्या २५ ) तेन सहास्य तुलना कार्या।

# अन्यानि सूत्राणि

सन्ति कर्नाटकवृत्तावन्यान्यपि कानिचित् सूत्राणि व्याख्यातानि। तत्र येषां विषये 'धातुगणसूत्राणी'ति निश्चयेन शक्यते वक्तुं, तानि नेह व्याख्यातानि। सन्ति कानिचिद् एवं भूतानि येषां विषये सन्देहो जायते, यत्तानि पाणिनीय-तन्त्रवत् काशकृत्स्नशब्दानुशासनगतानि उत कातन्त्रधातुपाठवत् धातुगण-सूत्राणि। कातन्त्रधातुपाठः काशकृत्स्नस्यैव संक्षेप इत्यस्मात् कारणाद् एतानि धातुगणसूत्राणीत्येव युक्ततरं स्यात्, तथापि तानीह पठ्यन्ते—

## १३२—प्रशस्तस्य श्रा।[2]

अर्थः—प्रशस्तशब्दस्य श्रा आदेशो भवति। यथा—श्राययति।

---

१. चन्नवीरकविकृतायां पुरुषसूक्तस्य कर्नाटकटीकायां 'ब्राह्मये' पदव्याख्यान उद्ध्रियते।

२. का० धा० व्या० ९।२७२॥

टिप्पणी—यद्यपि टीकाकारेण नेह स्पष्टीकृतं यदित आरभ्य सप्तसूत्रोक्तानि कार्याणि कस्मिन् प्रत्यये परे विधीयन्ते, तथापि अष्टमेन सूत्रेण प्रतीयते यदिनानि कार्याणि इन्प्रत्यये परे विधीयन्त इति। यतस्तत्रेष्ठेमेयस्सु तद्वदतिदेशः क्रियते। अपि च धातुगणसूत्रत्व एषां चुरादौ पाठात् इन्प्रत्ययपरत्वं स्वत एव लभ्यते।

## १३३—वृद्धस्य च ज्या।[1]

अर्थः—वृद्धस्य चात् प्रशस्तस्य ज्या आदेशो भवति। यथा—ज्याययति।

## १३४—अन्तिकबाढयोर्नेदसाधौ।[2]

अर्थः—अन्तिकबाढशब्दयोर्यथासख्यं नेद साध इत्यादेशौ भवतः। यथा—नेदयति, साधयति।

## १३५—युवाल्पयोः कन् वा।[3]

अर्थः—युवाल्पशब्दयोर्विकल्पेन कनादेशो भवति। यथा—युवयति, कनयति; अल्पयति, कनयति।

## १३६—स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणामन्त्यस्वरादेर्लोपो गुणश्च नामिनाम्।[4]

अर्थः—स्थूल दूर युव ह्रस्व क्षिप्र क्षुद्र इत्येतेषाम् अन्त्यस्वरस्य, तस्य य आदिवर्णस्तस्य च लोपो भवति, नामिसंज्ञकानां च स्वराणां गुणो भवति। यथा—स्थवयति, दवयति, यवयति, क्षेपयति, क्षोदयति।

टिप्पणी—(१) नामिसंज्ञाविषये पूर्वत्र द्वाविंशतितमस्य सूत्रस्य टिप्पणी द्रष्टव्या (पृष्ठ ४४, टि० २)।

(२) अस्मिन् सूत्रे अन्त्यस्वरादेः इत्यस्मिन् पदे पूर्वम् अन्त्यश्चासौ स्वरश्चान्त्यस्वरः इति कर्मधारयसमासो ज्ञेयः, ततः अन्त्यस्वरश्च तदादिश्च अन्त्यस्वरादि इति समाहारद्वन्द्वस्तच्छन्दलोपश्च द्रष्टव्यः। युवन्शब्दे नकारलोपाय अन्त्यस्वरादेरित्यत्र तन्त्रावृत्त्या बहुव्रीहिः समासोऽपि ज्ञेयः—अन्त्यस्वर आदिर्यस्य तस्य च लोपो भवति।

---

१. का० धा० व्या० ९।२७३॥ २. का० धा० व्या० ९।२७४॥
३. का० धा० व्या० ९।२७५॥ ४. का० धा० व्या० ९।२७६॥

(ग) कर्नाटकवृत्तौ युवन्-शब्दस्य युवयति इत्युदाहरणमुपन्यस्तम्, अस्माभिस्तु पाणिनीयतन्त्रानुसारं काशकृत्स्नसूत्रानुसारं च वृत्त्यनन्तरं यवयति इत्युदाहृतम्।

## १३७—बहोरियादि भू च।[1]

टिप्पणी—अस्मन्मते सूत्रस्यैतस्य पाठोऽशुद्धो वर्तते। वृत्त्यनुसारं प्रयोगानुसारं च बहोर्यादि भू च इत्येवं शुद्धेन सूत्रपाठेन भाव्यम्। तथा सति—

अयं सूत्रार्थः—बहुशब्दात् पर इन् यकारादिर्भवति (यकार आदावागमो भवति इति यावत्) बहोश्च भू आदेशः। यथा—बहु इन्=बहु यिन्=भूयिन्=भूययति।

विशेषः—माधवीयायां धातुवृत्तौ बहोः भावयति रूपमुपन्यस्तम् (द्र० पृ० ४२९ चौखम्बा काशी सं०)। अस्मन्मते धातुवृत्तिकारस्य मतमयुक्तं वर्तते। चान्द्रशाकटायनकातन्त्रादीनां मते भूययति इत्येव निष्पद्यते (द्र० माधवीया धातुवृत्ति पृ० ४२८)।

## १३८—प्रियस्थिरस्फिरोरुगुरुबहुलतृप्रदीर्घह्रस्ववृद्धवृन्दारकाणां प्रास्थास्फावरागराबृंहात्रपद्राघह्रसवर्षवृन्दाः।[2]

अर्थः—प्रिय स्थिर स्फिर उरु गुरु बहुल तृप्र दीर्घ ह्रस्व वृद्ध वृन्दारक इत्येतेषां स्थाने यथासंख्यं प्रा स्था स्फा वरा गरा बृंहा त्रप द्राघ ह्रस वर्ष वृन्द इत्येत आदेशा भवन्ति। यथा—प्रापयति, स्थापयति, स्फाययति, वरयति, गरयति, बृंहयति, त्रपयति, द्राघयति, ह्रसयति, वर्षयति, वृन्दयति।

## १३९—तद्वदिष्ठेमेयःसु बहुलम्।[3]

अर्थः—इन्-प्रत्ययपरे यत्कार्यमुक्तं तद् इष्ठ इम ईयस् इत्येतेष्वपि प्रत्ययेषु बहुलं भवति। यथा—नेदिष्ठः, नेदिमा, नेदीयान्; यविष्ठः, यविमा, यवीयान्; कनिष्ठः, कनिमा, कनियान्, इत्येवमन्यत्रापि ज्ञेयम्।

टिप्पणी—(१) एतेन सूत्रेण प्रतीयते यदितः पूर्वं सप्त सूत्रेषु यत्कार्यमुक्तं तद् इनि प्रत्यये भवति। तस्यैव चानेनेष्ठेमेयःसु प्रत्ययेष्वतिदेशः क्रियते।

(२) पाणिनिना उक्तकार्याणि प्राधान्येष्ठेमेयःसु परतो विहितानि तुरिष्ठेमेयःसु (६।४।१५४) सूत्रात् इष्ठेमेयःसु पदाधिकारात् (द्र० ६।४।१५६–

---

१. का० धा० व्या० ९।२७७॥ २. का० धा० व्या० ९।२७८॥
३. का० धा० व्या० ९।२७९॥

१६३ )। वार्तिककारेण तत्र भवता कात्यायनेन णाविष्ठवत् प्रातिपदिकस्य ( ६।४।१५५ ) इति वार्तिकेन णिचि तत्कार्याणामतिदेशो व्यधायि।

### १४०—सत्यार्थवेदना अष्ट कारित एव।[1]

टिप्पणी—सूत्रस्य पाठोऽशुद्धः प्रतिभाति। वृत्त्यनुसारमयं सूत्रपाठो ज्ञेयः—

सत्यार्थवेदेभ्य आप् कारित एव।

अर्थः—सत्य अर्थ वेद शब्देभ्यो विहित आप कारिते प्रयोज्यकर्तर्येव भवति अर्थात् न स्वार्थ इति। सत्यापयति, वेदापयति, अर्थापयति।

### १४१—गुणवचनात्।[2]

अर्थः—गुणवचनात् प्रतिपदिकाद् इन् भवति। यथा—पटयति लघयति।

टिप्पणी—( १ ) चुरादिगणसूत्रमेतत् शब्दानुशासनस्य वेति सन्दिग्धम्।

( २ ) पटु लघु इत्यादिषु इनि परे अन्त्यस्वरप्रभृतिभागस्य ( पाणिनीये मते टिसंज्ञकस्य ) लोपो केन नियमेन भवति इति नोक्तं कर्नाटकवृत्तिकृता।

( ३ ) कातन्त्रे तु पटयति आदिप्रयोगसिद्धये इनि लिङ्गस्यानेकाक्षरस्यान्त्यस्वरादेर्लोपः ( ३।४।१२ ) इति सूत्रं पठ्यते।

### १४२—एकस्वरा अदन्ताश्च कैश्चिच्चुरादिषु पठ्यन्ते।[3]

टिप्पणी—नायं पाठः सूत्रस्य, अपि तु कस्यचित् सूत्रस्य वृत्तेः पाठः। तदनुसारं सूत्रपाठ एवं शक्यत ऊहितुम्—

एकस्वरा अदन्ताश्चैके।

अर्थः—एकस्वराः शब्दा अदन्ताश्च कैश्चित् चुरादिषु पठ्यन्ते, तेभ्य इन् प्रत्ययो विधीयते॥

टिप्पणी—सूत्रस्यास्योदाहरणं न कर्नाटक वृत्तिकृतोदाहियते।

इति श्रीपण्डितयुधिष्ठिरमीमांसकेन संकलितं
यशोदाख्यया व्याख्ययाऽलंकृतं
काशकृत्स्नीयं व्याकरणं
सम्पूर्णम्।

शुभं भूयात् लेखकपाठकयोः।

---

१. का० धा० व्या० ९। २८०॥  २. का० धा० व्या० ९। २८१।
३. का० धा० व्या० ९। २८२॥

# व्याख्यातानां सूत्राणां वर्णानुक्रम-सूची

पूर्वत्र व्याख्यातानि काशकृत्स्न-सूत्राणि कस्मिन् ग्रन्थे कस्मिंश्च स्थान उद्धियन्त इत्यस्य निर्देशः सर्वत्राधस्तात् तत्तत्सूत्र-टिप्पण्यां विहितं स तत्रैव द्रष्टव्यम् ।

# काशकृत्स्न-धातुव्याख्यानम्

( चन्नवीरकविकृतकर्नाटकटीकायाः संस्कृतरूपान्तरम् )

ओम्

# काशकृत्स्न-धातुव्याख्यानम्

## चन्नवीरकविकृतकर्नाटकटीकायाः संस्कृतरूपान्तरम्

## भ्वादिगणः

### [ अन्-विकरणः ]

### परस्मैपदभाषाः

प्रकृतिप्रत्ययाङ्गाय परस्मायात्मने पदे ।
नमो यागण्टिशरभलिङ्गेशाय चरण्टिने ॥
धातुपाठः कृतो येन बालव्युत्पत्तिसिद्धये ।
नमस्तस्मै काशकृत्स्नगुरवे शिवरूपिणे ॥

टीका—बालो व्याकरणज्ञानरहितः, व्युत्पत्तिर्व्याकरणज्ञानम्, [ तस्य ] सिद्धये सिद्ध्यर्थं धातूनां क्रियावचनानां भाववचनानां च पाठो येन कृतः, तस्मै शिवरूपिणे काशकृत्स्नगुरवे काशकृत्स्ननाम्ने पूज्याय नमोऽस्तु ।

निपाताश्चोपसर्गाश्च धातवश्च त्रयोऽप्यमी ।
अनेकार्थाः स्मृताः सद्भिः पाठस्तेषां निदर्शनम् ॥

टीका—निपाताश्च चादयः, उपसर्गाश्च प्रादयः, धातवश्च क्रियावचना भाववचनाश्च । अमी एते त्रयोऽपि अनेकार्था बहर्थाः [ बहुप्रयोजना वा ], सद्भिरिन्द्रचन्द्रापिशलिगार्ग्यगालवपौष्करैः स्मृताः कथिताः । तेषां पाठोऽध्ययनं निदर्शनं निदर्शनमात्रम् । [ यथा — ]

सत्तायां मङ्गले वृद्धौ निवासे व्याप्तिसम्पदोः ।
अभिप्राये च शक्तौ च प्रादुर्भावे गतौ च भूः ॥

टीका—सत्तायाम् [ आत्मस्थितौ ], मङ्गले शुभे, वृद्धावुन्नतौ, निवासे गृहे, व्याप्तिसम्पदोः व्यापारे सम्पत्तौ च, अभिप्राये रहस्ये च, शक्तौ शक्यतायां च, प्रादुर्भावे प्राकट्ये, गतौ च 'भू'धातुः स्मृतः ।

१. भू सत्तायाम्—भू धातुः सत्तायां प्रयुज्यते। सा भवति, स भवति, तद्भवति।

सत्तायां यथा—विरला भवन्ति सन्तः, सन्तीत्यर्थः।

मङ्गले—पुत्रस्य भूतिः कार्या, मङ्गलमित्यर्थः, शुभमिति यावत्।

वृद्धौ—गोत्रस्य भूतिः। वृद्धिरित्यर्थः, उन्नतिरिति यावत्।

निवासे—भवनम्, गृहमित्यर्थः।

व्याप्तौ—विश्वं भवति, व्याप्नोतीत्यर्थः। सकर्मकत्वं च।

सम्पद्यर्थे—अदीर्घो दीर्घो भवति, सम्पद्यत इत्यर्थः।

अभिप्राये—इत्ययं भावः, अभिप्रायः इत्यर्थः, रहस्यमिति यावत्।

शक्तौ—तन्तुर्भवति, शक्नोतीत्यर्थः, दृढो भवतीति यावत्।

प्रादुर्भावे—अङ्कूरो भवति, जायत इत्यर्थः, शान्तो भवतीति यावत्।

गतौ—भूता, गता इत्यर्थः।[1]

भू सत्तायाम्—भू क्विप्, सर्वापहारी प्रत्ययः, तस्य सर्वस्यादर्शनं भवति। तेन 'भूः' इति नाम कृल्लिङ्गं[2] भवति।

भूः—भूमिः। भूतिः—ऐश्वर्यम्। भूतः—प्रमथः (शिवगणः), भुवनं—देशः। भविः—जन्म। भवः-शिवः। भावः—प्रकारः। भावनम्—विश्वासः। भाव्यम्—भावयितुं योग्यम्। भावुकम्, भविकम्, भव्यम्—कल्याणम्। भावि भावी भविनी। भूम—देवताराधना। भूमिः—पृथिवी। भवान्। भविता। भवितव्यम् भवनीयम्—भवितुं योग्यम्। प्रभवः—जन्म। विभवः—ऐश्वर्यम्। पराभवः—पराजयः। प्रभुः, विभुः—राजा। शम्भुः—आनन्दरूपः। शम्भूः—सुखस्थानम्। मयोभूः—वेदजनकः। स्वयम्भूः—निरञ्जनः।

---

१. इतोऽग्रे कर्नाटकलिपिमुद्रिते टीकाग्रन्थे पूर्वनिर्दिष्टाः श्लोकाः पुनः पठ्यन्ते। तदग्रे च कतिपयानां धातूनामनावश्यकः पाठ उपलभ्यते। स च निष्प्रयोजन एव, उत्तरत्र यथास्थाने व्याख्यार्थं पठितत्वात्। अपि चायं पाठो न साकल्येनाग्रे यथास्थानं व्याख्यातेन पाठेन संवादं भजते, न च काशकृत्स्नधातुपाठस्य संक्षेपेण कातन्त्रधातुपाठेन। अस्यानर्थकस्यापि पाठस्य सुरक्षायै ग्रन्थान्ते निर्देशः करिष्यते।

२. कृत् कृदन्तम्, लिङ्गं प्रातिपदिकमिति यावत्। काशकृत्स्ने तन्त्रे कातन्त्रे च लिङ्गमिति प्रातिपदिकमुच्यते। तथा च कातन्त्रीयं सूत्रम्—धातुविभक्तिवर्जमर्थवल्लिङ्गम् (२।१।१) इति॥

एवं भूधातोराख्यात-कृत्-तद्धित-समासाः सर्वे ज्ञेयाः।

२. चिती संज्ञाने—सम्यग्ज्ञाने। चेतति–जानातीत्यर्थः। धातोः क्विप्—धातोः क्विप् प्रत्ययो भवति। चित्–ज्ञानम्। चितिः–ज्ञानम्। चित्तम्–ज्ञानम्। चेतः–मनः। चित्तवान्–ज्ञानवान्।

३. अत सातत्यगमने—निरवसानगतौ। अतति गच्छतीत्यर्थः। आत्था (?, आत्मा)–सर्वत्रसंचारी।

४. चुतिर् आसेचने—अल्पावरोधे[१]। चोतति।

५. श्च्युतिर क्षरणे—नाशने[१]। श्चोतति–नाशयतीत्यर्थः।

६. मन्थ विलोडने—मन्थनकर्मणि। मन्थति, मथति[२]–विलोडयतीत्यर्थः। मन्था—मन्थनसाधनी (मथनी इति भाषायाम्)। अनुनासिकोऽनुषङ्गः—धातुप्रत्यययोर्यः पञ्चमो वर्णः सोऽनुषङ्गः। अनुषङ्गस्य लोपः—अनुषङ्गस्य लोपो भवति। [अनेन 'मथति' इत्यत्र नकारस्य लोपः]।

७. कुथि मथि लुथि कथि थुथि किथि हिंसासंक्लेशयोः—वधे पीडनायां च। कन्थति[३]—पार्श्वमेकभागं वा संपीडति सीव्यति वा। कन्था–वस्त्रखण्डैर्निर्मितो वस्त्रविशेषः (गुदड़ी इति भाषायाम्)। थुन्थति–धारयति। थुन्था—पुराणैर्वस्त्रैर्निर्मितो वस्त्रविशेषः। सन्थति[४]—संपीडयति। सन्था–नियतदिवसको हाटः। कुन्थति मन्थति लुन्थति–हिंसयति ताडयति वा। कुन्था, मन्था, लुन्था–युद्धम्। इदनुबन्धान्नुः—इकारानुबन्धवद्भ्यो धातुभ्यो 'नुः' इत्यस्यागमो भवति।

८. अति अदि बन्धने—अन्तति—बध्नाति। अन्तकः–यमः। अन्दति–बन्धयति। अन्दूः–कूपः।

---

१. कर्नाटकटीकायां धात्वर्थानामुदाहृतपदानां च येऽर्था निर्दिष्टास्ते बहुत्र वैचित्र्यं भजन्ते। तेषां मूलमन्वेषणीयम्। अस्माभिस्तु यथापाठं तेषामेव संस्कृतीकरणं विहितम्।

२. पाणिनीयमतानुसारं नात्र लोपो नकारस्य प्राप्नोति। पाणिनीयमते 'मथे विलोडने' इत्यस्य स्वतन्त्रधातो रूपम्।

३. अक्रमेण प्रयोगनिदर्शनं कर्नाटकटीकाकृता केन हेतुना कृतमिति न ज्ञायते। धातुक्रमवैपरीत्येन व्याख्यानमस्यां टीकायां बहुत्रोपलभ्यते। अग्रे क्रमवैपरीत्यनिर्देशो न सर्वत्र करिष्यते।

४. धातुरयं धातुसूत्रे न पठ्यते।

९. इदि परमैश्वर्ये—सम्पत्तौ। इन्दति—शासनं करोति। इन्द्रः—अधिपतिः।

१०. षिधु गत्याम्—सेधति—गच्छति। सिद्धम्—सिद्धिः। धात्वादेः षः सः—धातोरादौ यः षकारस्तस्य सकारो भवति। णो नः—धात्वादेर्णकारस्य नकारो भवति।

११. षिधू शास्त्रे माङ्गल्ये च—सेधति—पठति पाठयति, मङ्गलं शुभं वा भवति।

१२. खाद भक्षणे—अदने। खादति—अभ्यवहरति। खादनम्—अभ्यवहारः।

१३. बद स्थैर्ये—स्थिरतायाम्। बदति—स्थिरो भवति। बदरी—बदरवृक्षः।

१४. खद हिंसायां च—चात् स्थैर्येऽपि। खदति—हिंसयति। खदिरः—वृक्षविशेषः (खैर इति नाम्ना भाषायां प्रसिद्धः)।

१५. गद व्यक्तायां वाचि—निरन्तरभाषणे। गदति—वदति। गदा—लोह-दण्डः (शस्त्रविशेषः)।

१६. रद विलेखने—लेखने। रदति—लिखति। रदनः[1]—लेखनी।

१७. णद अव्यक्ते शब्दे—अव्यक्तध्वनौ। नदति—अव्यक्तं ध्वनति। नदी।

१८. अर्द गतौ याचने च—गत्यां भिक्षायां च। अर्दति—गच्छति, भिक्षते वा। अर्दनम्—भिक्षा।

१९. णर्द गर्द शब्दे—नर्दति—शब्दयति। नर्दनम्—शब्दः। गर्दति—शब्दं करोति। गर्दभः—रासभः।

२०. तर्द हिंसायाम्—तर्दति—मारयति। तर्दुः—काष्ठमयश्चमसः।

२१. कर्द कुत्सिते शब्दे—निन्दिते शब्दे[2]। कर्दति—कुत्सितं शब्दयति कर्दः—पङ्कः।

२२. खर्द दन्दशूके—दन्तैर्दशने। खर्दति—दशतिः। खर्दः—कुक्कुरः।

२३ बिदि अवयवे—अवयवक्रियायाम्। बिन्दति—रूपं धत्ते। बिन्दुः—अवयवविशेषः ('बूँद' इति भाषायाम्)।

२४. णिदि कुत्सायाम्—निन्दायाम्। निन्दति—कुत्सयति। निन्दा—कुत्सा।

---

१. काष्ठतक्षणसाधनविशेषः, 'रन्दा' इति भाषायाम्।

२. काकध्वनावुदरध्वनौ चेति कोषकाराः।

२५. टुनदि समृद्धौ—नदति–समृद्धो भवति । नन्दनः–पुत्रः ।

२६. चदि आह्लादने दीप्तौ च—सन्तोषानन्दयोः प्रकाशे च । चन्दति–आनन्दितः प्रकाशितो वा भवति । चन्द्रः–चन्द्रमाः ।

७२. त्रदि चेष्टायाम्—गतौ । त्रन्दति–गच्छति चेष्टयति । त्रन्दी–जवनिका ।

२८. कदि क्रदि क्लदि आह्लादने[1] रोदने च—संतोषे रोदने च । कन्दति–रोदिति । कन्दः–पुत्रः । क्रन्दति–रोदिति । क्रन्द्रः, क्रन्दनम्–रोदनम् । क्लन्दति–म्लायति । क्लन्दनम्–म्लानम् ।

२९. क्लिदि परिवेदने (परिदेवने)—दुःखे । क्लिन्दति–दुःखितो भवति । क्लिन्दा–दुःखं, रोदनम् ।

३०. शुन्ध शुद्धौ—शौचे । शोधति[2]—पवित्री करोति ( मार्जयति ) । शुधा–दुग्धम् । शुद्धम् ।

३१. फक्क नीचैर्गतौ—व्यभिचारे । फक्कति–व्यभिचारं करोति । फक्का-व्यभिचारः ।

३२. तक तक्क गग्घ हसने—तक्कति[3], तकति, गग्घति–हसति । तक्कः, तकः, गग्घः–हसनम् ।

३३. तकि कृच्छ्रजीवने—कष्टमये जीवने । तङ्कति–परिश्राम्यति । तङ्कः–परिश्रमः ।

३४. शुक गतौ—[ शोकति–गच्छति । ] शोकः–गतम् । शुकः–व्यासपुत्रः ।

३५. बुक्क बुक्क भाषणे भषणे च—श्वरवे भाषणे च । बुक्कति, बुक्कति–भषति । बुक्कः, बुक्कः–कुक्कुरः ।

३६. ओखृ राखृ लाखृ द्राखृ ध्राखृ शोषणालमर्थयोः—शोषणे श्रृङ्गारे

---

१. काशकृत्स्नीयसंक्षेपरूपे कातन्त्रधातुपाठे 'आह्वाने' इत्यर्थः पठ्यते । अन्यधातुपाठेष्वपि 'आह्वाने' इत्येव दृश्यते ।

२. 'मन्थ'धातुवृत्तौ पठितेन 'अनुपञ्जस्य लोपः' ( पृष्ठ ५ ) सूत्रेण नकारलोपे उपधाया गुणे शोधति रूपम् । सत्यप्येवम्, अनुपञ्जासंजनात् 'शुन्धति' इत्यपि वक्तव्यम् । अत एवान्यैः शुध शुन्ध इत्युभावपि पठितौ ।

३. उदाहरणेषु तकतक्कयोर्वैपरीत्येनोदाहरणनिर्देशे किं कारणमिति न विद्मः ।

च। ओखति–शुष्यति, अलंकरोति च। राखति–शुष्यति, सह गच्छति। लाखति–शुष्यति, विस्मरति च। द्राखति–म्लायति। ध्राखति–म्लायति। उखनम् (?, ओखनम्), राखनम्, लाखनम्, द्राखनम्, ध्राखनम्–शोषणं मण्डनं च।

३७. शाखृ श्राखृ श्लाखृ व्याप्तौ—आवरणे। शाखति–व्याप्नोति। श्राखति, श्लाखति–अङ्कुरितो भवति। शाखा–वृक्षावयवविशेषः ('डाल' इति भाषायाम्)। श्लाखा–शाखा, नवपल्लवं वा।

३८. अख रख णख वख मयूख मख मुख रख रिख लख लिख रखि लखि इखि वखि रगि रिगि लगि रिगि (?, अगि) वगि मगि खखि इगि पिगि लिगि गतौ—अखति–(भूमिं) विदारयति। आखुः–मूषकः। ओखति–ज्वलति। उखा–अङ्गारधानी। नखति–अङ्कुरितो भवति। नखः–अङ्गुल्यग्रावयवविशेषः। वखति–गच्छति। वखः। मयूखति–पाटयति (तमः), रिङ्गति। मयूखः–आतपः (?, रश्मिः)। मखति–प्रज्वलितो भवति। मखः–यज्ञः। मोखति–अत्ति। मुखम्–प्राण्यङ्गविशेषः। रखति–गच्छति। रखः–(?)। रेखति–रेखां करोति। रेखा–लेखा। लखति–गच्छति। लखः–गमनम्। लेखति–लिखति। लेखः–देवः (?)। रङ्खति–आरोहति। रङ्खः–आरोहः (उच्चैस्त्वम्)। लङ्खति–सीव्यति। लङ्खः–सूची। इङ्खति–प्रविशति। इङ्खः–प्रवेशनम्। वङ्खति–गुन्थति। वङ्खि–वङ्क्रिः (पार्श्वस्थि)। रङ्गति–रजति। रङ्गः–रजनम्। लङ्गति–चञ्चलो भवति (लंगड़ा कर चलना)। लङ्ग–चञ्चलः। अङ्गति–अङ्कुरितो भवति। अङ्गम्–अवयवः। वङ्गति–म्लायति। वङ्गः–जनपदविशेषः (बंगाल)। मङ्गति–उत्प्लुत्य गच्छति। मङ्गः–वानरः। खङ्गति–एकेन पादेन चलति। खङ्गः–एकपात्। इङ्गति–अल्पी भवति। इङ्गः–लता। खिङ्गति–उपद्रवति। खिङ्गः–कपिविशेषः। लिङ्गति–लक्षयति (लक्ष्यं करोति)। लिङ्गम्–लक्ष्यम्, चिह्नम्, पुँल्लिङ्गादि।

३९. त्वगि कम्पने—त्वङ्गति कम्पते। त्वङ्गः—कम्पनम्।

४०. युगि तुगि[1] जुगि वर्जने—परित्यागे। युङ्गति–परित्यजति। जुङ्गति–भ्रंशति–('फिसलना' इति भाषायाम्)। जुङ्गः–भ्रंशनम्। बुङ्गति–ककुद्मान् (कुबड़ा इति भाषायाम्) भवति। बुङ्गः–ककुद्मान्, वक्रः।

४१. इघि पालने—रक्षणे। इङ्घति–रक्षति पुष्णाति वा। इङ्घः–पालनम्।

---

१. उदाहरणक्रमे 'जुङ्गति, जुङ्गः' इति पठ्यते। तेनात्र 'जुगि' इति युक्तं स्यात्। उदाहरणयोर्वा 'तुङ्गति, तुङ्गः' इत्येवं पाठः कल्पनीयः।

४२. लघि शोषणे उत्पवने[1] च—शोषणे उत्क्रमणे च। लङ्घति—शुष्यति। लङ्घनम्—उत्क्रमणम्, शोषणम्।

४३. शिघि आघ्राणे उत्पवने च[2]—गन्धग्रहणे। शिङ्घति—जिघ्रति। शिङ्घाणः—दुर्गन्धम् ( नासामलं च )।

४४. शुच शोके—दुःखीभावे चिन्तायां च। शोचति—दुःखितो भवति। शोकः—दुःखम्, चिन्तनम् ( इष्टवियोगानुचिन्तनम् )।

४५. कुच शब्दोत्तारे—प्रतिध्वनौ। कोचति—प्रतिध्वनति। [ कोचः—प्रतिध्वनिः ( गूँजना इति भाषायाम् ) ]।

४६. क्रुञ्च क्लुञ्च कौटिल्याल्पीभावयोः—कुटिलतायाम् अल्पतायां च[3]। क्रुञ्चति—कुटिलो भवति ('मुड़ता है' इति भाषायाम्)। क्रुञ्चा—आकुञ्चनम्। क्लुञ्चति—कुटिलो भवति। क्लुञ्चा—( ? )।

४७. लुञ्च अपनयने—अल्पत्वे। लुञ्चति[4]—अपनयति। लुञ्चनम्—अल्पता हीनता वा।

४८. अञ्चु गतिपूजनयोः—गमने प्रशंसायां च। अञ्चति—गच्छति, प्रशंसति, पूजयति। अञ्चुः[5]—तदम्।

४९. वचि चचि तचि त्वचि म्रुचि म्लुचि ग्रुचि ग्लुचि प्रुचि ष्लुचि पुष्प गतौ—गमने। वञ्चति—विप्रलम्भति। वञ्चनम्—विप्रलम्भनम्। चञ्चति—अनृतभाषणं करोति। चञ्चा—अनृतभाषणम्। तञ्चति—वञ्चयति। तञ्चः—वञ्चनम्। त्वञ्चति—गच्छति। त्वञ्चः—गमनम्। म्रुञ्चति—द्यूतं क्रीडति। म्रुञ्चः—द्यूतक्रीडा। म्लुञ्चति—अपराध्यति। म्लुञ्चः—अपराधः। ग्रुञ्चति—विप्रलम्भते। ग्रुञ्चः—विप्रलम्भनम्। ग्लुञ्चति—निगूहति। ग्लुञ्चः—रहस्यम्। लुञ्चति—भ्रमयति। लुञ्चः—भ्रमणम्। स्लुञ्चति—( ? )। स्लुञ्चः—( ? )। पुष्पति—पुष्पितो भवति। पुष्पम्—कुसुमम्।

---

१. अत्र 'उत्क्रमणे' इति पाठो युक्तः स्यात्। उत्तरसूत्रटिप्पण्यपि द्रष्टव्या।

२. 'उत्प्लवने च' इति पुनः पाठो व्यर्थः। यद्वा पूर्वसूत्रे 'उत्क्रमणे' इति पाठः स्यात्।

३. कौटिल्येन यत्र विस्तारः सङ्कोचमापद्यते तादृश्युभयगुणविशिष्टा क्रिया इह अभिप्रेता, या भाषायाम् 'मुड़ना' पदेन व्यवह्रियते।

४. कतरना, छीलना, नोचना, बाल आदि का उखेड़ना, इत्यादयोऽर्था ज्ञेयाः।

५. अस्यां टीकायाम् एतादृशो बहव 'उ'प्रत्ययान्ताः शब्दाः पठ्यन्ते। तेनौणादिकस्य 'इन्'प्रत्ययस्यैव सामान्यः 'उ'प्रत्ययोऽपीति ज्ञायते।

५०. ग्रुचु ग्लुचु गुजु घुजु कुच खुचु स्तेयकरणे—चौर्ये । ग्रोचति-चोरयति । ग्रोचः—चौर्यम् । ग्लोचति—कूर्दते । ग्लोचः—कूर्दनम् । गोजति—मुष्णाति । गोजुः—अपहरणम् । घोजति—नियन्त्रयति । घोजुः-नियन्त्रणम् । कोचति—चोरयति । कोचा—चौर्यम् । खोचति—चोरयति । खोचा—चौर्यम् ।

५१. अर्च पूजायाम्—अर्चति—पूजयति । अर्चकः—पूजकः ।

५२. म्लेच्छ अव्यक्तायां वाचि—अस्पष्टभाषणे । म्लेच्छति—अस्पष्टं भाषते । म्लेच्छः—अस्पष्टम् ।

५३. लछि लाछि लक्षणे—चिह्ने । लञ्छति—परिचिनोति । लञ्छनम्—चिह्नम् । लाञ्छति—लक्षयति । लाञ्छनम्—चिह्नम् , लक्षणम् ।

५४. वाछि इच्छायाम्—कामनायाम् । वाञ्छति—कामयते । वाञ्छा—कामना ।

५५. आछि आयामे—पादप्रसारणे । आञ्छति—पादावग्रे प्रसारयति । आञ्छा—पादप्रसारणम् ।

५६. ह्रीच्छ लज्जायाम्—ह्रीच्छति—लज्जते । ह्रीच्छा—लज्जा ।

५७. हूर्च्छा कौटिल्ये—कुटिलतायां विप्रलम्भने । हूर्च्छति—विप्रलम्भते । हूर्च्छा—विप्रलम्भनम् ( कौटिल्यम् ) ।

५८. मूर्च्छा मोहसमुच्छ्राययोः—विस्मरणे, मूर्च्छने । मूर्च्छति—विस्मरति । मूर्च्छा—विस्मरणम् ।

५९. कच्छ धारणे—सहने । कच्छति—सहते ( धारयति ) । कच्छा—सहनम् । कच्छपः—कूर्मः ।

६०. स्फूर्च्छा विस्मृतौ—विस्मरणे । स्फूर्च्छति—विस्मरति । स्फूर्च्छा—विस्मरणम् ।

६१. युछि प्रमादे—विप्रलम्भने, प्रमादे । युञ्छति—विप्रलम्भितो भवति । युञ्छा—विप्रलम्भनम् ।

६२. उछि उञ्छे—कणश आदाने । उञ्छति—कणश आदत्ते । उञ्छा—एकैकश आदानम् ।

६३. उच्छी विवासे—बन्धनत्रोटने । उच्छति—त्रोटयति ( रज्जुम् ) । उच्छा—खण्डनम् ।

६४. धृज धुज ध्रज धज ध्वज वज व्रज षज गतौ—गत्याम् । धुजति[1]—चलति । धृजति, ध्रजति, धजति, वजति, व्रजति, सजति—गच्छति चलति । धृजः, धुजः, धजः, ध्रजः, ध्वजः, वजः, व्रजः, सजः—एतेऽष्टौ गमने ।

६५. अज क्षेपणे च—स्थापने गमने च । अजति—स्थापयति गच्छति । अजः—क्रीडनम् ( १, वर्करः ) ।

६६. अर्ज षर्ज अर्जने—अलब्धस्य लाभे । अर्जति—अलब्धं लभते । अर्जनम्—लम्भनम् । सर्जति—प्राप्नोति । सर्जनम्—प्रापणम् ।

६७. तर्ज व्यथने—व्यसने । तर्जति—दुःखयति । तर्जः—पीडा ।

६८. खर्ज मार्जने च—शोधने, पीडायां च । खर्जति—शोधयति, पीडितो भवति पीडया । खर्जः—पीडा, खर्जूरम् ।

६९. खज मन्थे—मथने । खजति—मन्थति । खजिः—मथनम् ।

७०. खजि गतिवैकल्ये—निन्दायाम्[2] । खञ्जति—निन्दयति । खञ्जः—निन्दा ।

७१. एजृ कम्पने—चलने । एजति—कम्पते । एजनम्—कम्पनम् ।

७२. स्फूर्जा वज्रनिर्घोषे—देवशब्दे ( विद्युद्ध्वनौ ) । स्फूर्जति—गर्जति । स्फूर्जथुः—गर्जनम् ।

७३. क्षी क्षये—नाशे अल्पीभावे । क्षयति—क्षीणो भवति । क्षयः—क्षीणम् ।

७४. कीज कूज कुजि अव्यक्ते शब्दे—अस्पष्टध्वनौ । कीजति—अस्पष्टं वदति । कीजकः—अस्पष्टवक्ता । कूजति—शब्दयति । कूजकः—पिकः । कुञ्जति—शब्दं करोति । कुञ्जरः—हस्ती ।

७५. लज लजि लाज लाजि तर्ज भर्त्सने—निन्दायां गालिप्रदाने । लजति—गालिं ददाति, निन्दयति । लजा—निन्दा । लञ्जति—आकर्षति । लञ्जा—वेश्या । लाजति—भृज्जति[3] । लाजा—भृष्टं धान्यम् । लाञ्जति—विप्रलभते ।

---

१. उदाहरणेषु क्रमव्यत्यासे, 'धुजति, धृजति, धृजः, धुजः' इत्येतेषु गुणाभावे च कारणं मृग्यम् ।

२. अत्र 'निन्दितगतौ । खञ्जति—वैकल्येन गच्छति । खञ्जः—पादविकलः' इति निर्देशो युक्तः प्रतिभाति ।

३. अन्यत्र 'लाज लाजि भर्जने च' इत्यपि पठ्यते । भर्त्सनस्य वा लाक्षणिकोऽयमर्थो ध्येयः ।

लाञ्जः—व्यभिचारी । तर्जति—आकर्पति[1] । तर्जनम्—आकर्पणम्[1] ।

७६. जज जजि युद्धे—संग्रामे । जजति—उपद्रवं करोति । जाजिः—'जायफल' इत्येवं प्रसिद्धं द्रव्यम् । जञ्जति—भ्रमति । जञ्जा—अस्पृश्यः ।

७७. तुज हिंसायाम्—मारणे । तोजति—मारयति । तोजा—वस्त्रविशेषः ।

७८. तुजि चलने च—मारणे गमने च । तुञ्जति—बन्धयति । तुञ्जा (?) ।

७९. गज गजि गुज गुजि गृज गृजि मुज मुजि म्रुज म्रुजि गर्ज शब्दे—शब्दने । गजति—रोदिति । गञ्जः—कङ्कणम् ( चूड़ी इति प्रसिद्धं द्रव्यम् ) गञ्जति—भ्रमति । गञ्जा—मादकं द्रव्यम् । गोजति—कृच्छ्रे पतति । गोजुः—कृच्छ्रम् । गुञ्जति—आकर्पति । गुञ्जा—कञ्जनी (?) । गृञ्जति—मुखेन सीत्कारं करोति ( 'सीटी बजाता है' इति भाषायाम् ) । गृञ्जः—सीत्कारवत् ( सीटी ) शब्दकर्ता पक्षिविशेषः । गृजति—(?) । गृजः—पक्षिविशेषः । मोजति[2]—हर्पेणोन्मत्तो भवति । मोजुः—सन्तोषः । मुञ्जति—संपीडयति । मुञ्जिः—बालकः । म्रुजति—निन्दयति । म्रुजा—निन्दा । म्रुञ्जति—गालिं वदति । म्रुञ्जा—गालिः । गर्जति—शब्दं करोति । गर्जनम्—ध्वनिविशेषः ( गर्जना ) ।

८०. शौडृ गर्वे—अभिमाने । शौण्डति—गर्वति ( =अभिमत्तो भवति ) । शौण्डीरः—गर्वी ।

८१. यौण्डृ सम्बन्धे—यौण्डति—स्पृशति, संबद्धो भवति । यौण्डीरः—स्प्रष्टा ।

८२. मेडृ म्रेडृ उन्मादने—मानसव्याधौ । मेडति, म्रेडति—उन्मादयुक्तो भवति । मेडीरः, म्रेडीरः—उन्मत्तः ।

८३. म्रडृ म्लडृ अनादरे—अपमाने । म्रडति—अनादरं करोति । म्रडीरः—अनादरः । म्लडति—मूर्खां करोति । म्लडीरः—मूर्खः ।

८४. कट वर्षावरणयोः—ग्रीष्मे वर्षायां च । कटति—वर्षति पतति वा । कटाहः—महत् पात्रम् ( 'कड़ाह' इति प्रसिद्धम् ) ।

८५. रट परिभाषणे—ध्वनौ । रटति—ध्वनति, शब्दयति । राटा—सूत्रनिर्माणयन्त्रम् ( 'चरखा' इति प्रसिद्धम् ) । राटालः—जलाकर्पणयन्त्रम् ।

८६. लट बाल्ये च—बालक्रियायाम्, अव्यक्तध्वनौ च । लटति—अव्यक्तं

---

१. मत्सर्यति, मत्सर्नम् इति शुद्धः पाठः स्यात् ।

२. अस्य घञन्तस्य 'मोज' इत्यस्य "मौज" इत्यपभ्रंशो ज्ञेयः ।

शब्दयति ( 'तुतलाता है' इति भाषायाम् ), क्रीडति । लाटम्—बाल्यावस्था, बालस्य अव्यक्तध्वनिश्च । लाटः—नगरम् ।

८७. शट निवासे—आवासे आच्छादने च[1] । शटति—आच्छादयति । शाटी—लघूपवस्त्रम् ( 'रूमाल' इति प्रसिद्धम् ) । शाटः—( ? ) ( धौतवस्त्रम्—'धोती' इति प्रसिद्धम् ) ।

८८. रुट विशरणे गत्यवसादनेषु—छेदने गमने दुःखे च । रुटति—दुःखयति । रोटिः—दीर्घा यष्टिः । रुष्टिः—रोटिका । रुट्टु—दुःखम् ।

८९. वट वेष्टने—परित आवेष्टने ( 'लपेटना' इत्यर्थं ) । वटति—वेष्टयति । वटः—न्यग्रोधः । वटुः—बालकः । वाटः—परिवेष्टनम् । वाटी—मार्गः ।

९०. खिट उत्त्रासने—भये । खेटति—बिभेति । खेटकः—रिङ्गिता ( रेंगने वाला ) ।

९१. पिट शिट अनादरे—अपमाने । सेटति—अनादरं करोति, गालिं ददाति । सेटः—वीथी ( 'गाली' इति भाषायाम् ) । शिटति—अपमानं करोति । शेटः ( अनादरः ? ) ।

९२. जट मट पट सङ्घाते—संश्लेषे । जटति—संश्लिष्यति । जटा—( 'जटा' इत्येव भाषायां प्रसिद्धा ) । मटति—उपद्रवति । मटा—जटा । सटति—समीपमागच्छति ( 'सटना' इति भाषायाम् ) । सटा—जटा ।

९३. तट भट भट्ट उच्छ्राये—भृतककर्मणि ( 'मजदूरी' इति भाषायाम् ) तटति—तडागं गच्छति । ताटः—तडागः । भटति—भृतकं करोति । भटः—वीरः । भटति ( ?, भट्टति ) प्रशंसति । भटः ( ?, भट्टः ) जनसम्मर्दः ।

९४. वट सेवायाम्—सेवने । वण्टति[2]—सेवयति । वण्टः[2]—सेवकः ।

९५. भाण्ड अव्यक्तायां वाचि—अस्पष्टवाक्ये । भाण्डति—अव्यक्तमुच्चारयति । भाण्डीरः—संस्कृताभासवाक्यम् ।

९६. तुटि स्तेये—चौर्ये । तुण्टति—चोरयति । तुण्टः—चौरः ।

---

१. निवास इति रूपं निपूर्वकस्य वसतेर्वस्तेश्चोभयोः समानमिति कृत्वा उभयार्थौ निर्दिष्टौ ।

२. धातौ 'वट' इति निरनुबन्धकः, उदाहरणयोः सनुमः पाठः, एकतरत्र पाठभ्रंशो ज्ञेयः ।

९७. कुटि गतिवैकल्ये—स्खलितगमने ('लंगड़ाना' इति भाषायाम्)। कुण्टति–स्खलति। कुण्टः–विकृतपात्।

९८. मटि दाहे—ज्वलने[1]। मण्टति–ज्वलति। मण्टः–ज्वलनम्।

९९. मुटि वक्रे—कौटिल्ये। मुण्टति—कुटिलो भवति। मुण्टः–पृष्ठम् (शरीरस्य मध्यभागः)।

१००. कटि वेदनायाम्—पीडायाम्। कण्टति–पीडितो भवति। कण्टकः–(कांटा इति प्रसिद्धम्)।

१०१. हिटि शोषणे—शुष्कीभावे। हिण्टति–शुष्यति। हिण्टा–कुक्कुटी, मृल्लोष्टम्।

१०२. खट काङ्क्षायाम्—इच्छायाम्। खटति–इच्छति। खट्वा–इच्छा। खट्वा–तल्पम्।

१०३. मिटि प्रहरणे—प्रहारे। मिण्टति–प्रहरति। मिण्टा–प्रहारः।

१०४. नट नृत्तौ—नृत्ये। नटति–नृत्यं करोति। नटकः–नर्तकः।

१०५. पिट शब्दसङ्घातयोः—ध्वनौ। पेटति–गायति। पेटकः–गायकः पेटिः–पेटिका ('सन्दूक' इति भाषायाम्)।

१०६. हट दीप्तौ—प्रकाशे। हटति–प्रकाशते। हाटकम्–सुवर्णम्। हाटुः–चीयम्।

१०७. वट अवयवे—(अवयवक्रियायाम्)। वटति–संश्लेषयति ('बाँटना–पीसना' इति भाषायाम्)। वटा–जटा।

१०८. लुट विलोडने—मन्थनक्रियाम्। [लोटति–मन्थयति।] लोट्टुः–जनसम्मर्दः।

१०९. चट चिट चुट प्रैष्ये माने च—मापने प्रेषणे च। चटति–प्रेषति। चाटुः–वाचालः। चाटिकः–('चिमगादड़' इति प्रसिद्धः)। चाटति–परिमापयति। चांटुः–वितस्तम्। चेटति–शूर्पेण निष्पवनक्रियां करोति ('फटकना' इति भाषायाम्)। चेटः–शूर्पम्। चेटी–दासी।

११०. विट शब्दे—हास्यशब्दे। वेटति–हसति। विटः–विटनामा पुरुषः (विदूषक इति प्रसिद्धः)।

---

१. ईर्ष्यायां वा। तदा मण्टति–ईर्ष्यति, मण्टः–ईर्ष्या।

१११. विट विड आक्रोशे—रतिविषयके शब्दे । वेटति—रतिविषयिकां वार्ता करोति । वेडति—वार्ता करोति । विडालः—मार्जारः ।

११२. घटि निर्णये—निश्चये । घण्टति—निश्चिनोति ( निर्णयं करोति )। निघण्टुः—निर्णयः । घण्टा—( 'घण्टा' इत्येव भाषायां प्रसिद्धः )। घण्टिः—कर्णाभरणम् ।

११३. अट पट इट ईट किट कीट कुट कूट गुट उट इ गतौ—गमने । अटति—भ्रमति क्रीडयति । आटः—क्रीडनम् । पटति—आच्छादयति । पटः—वस्त्रम् । एटति—प्रक्षिपति । एट्टुः—प्रक्षेपणम् । एटति[1]—ताडयति । ईटिः—अस्त्रविशेषः ('भाला' इति प्रसिद्धः)। केटति—चलति । किटः (?)। केटति[1]—क्रुध्यति । कीटः—क्षुद्रप्राणिः । कोटति—अङ्कुरितो भवति । कुटजः, कुटः—वृक्षविशेषः । कुटः—पर्णमय आवासः । कोटति[1]—अङ्कुरितो भवति । कोटः—शिखरपाषाणम् । कोटिः—शतलक्षसंख्या । ओटति—चलति । उटः, उटजः—पर्णमयी कुटी । एतति (?, अयति)—प्रेरयति । इष्टि[2]—कामः ।

११४. घरट्ट हिंसायाम्—मारणे । घरट्टति—मारयति । घरट्टकः—घातकः । घरटः ( घरट्टः )—पेषणी ( 'चक्की' इति भाषायाम् )।

११५. रट्ट शकुने—रट्टति—जानाति । रटः (?, रट्टः )—ज्ञाता ।

११६. मट्ट भूषायाम्—शृङ्गारे । मट्टति—भूषयति । मटनम् (?, मट्टनम्)—भूषणम् ।

११७. कुट्ट वैकल्ये—रूपान्तरे । कुट्टति—रूपान्तरितो भवति । कुट्टिमम् ( ? )।

११८. मुट्ट प्रमर्दने—उपकारे । मुट्टति—उपकरोति । मुट्टु—उपकारः ।

११९. चुट्ट अल्पीभावे—न्यूनतायाम् । चुट्टति—अल्पीभवति । चुट्टः—अल्पम् ।

१२०. घट्ट खण्डने—घट्टति—घनो ( 'कठोर' इति यावत् ) भवति । घटः (?, घट्टः )—घटः । घट्टिः—कठोरः ( ? )।

---

१. दीर्घोपधधातूनां पाणिनीयेन शास्त्रेण गुणो न भवति, एष तु ईट कीट कूट आदीनां एटति केटति कोटति इत्येवं रूपाणि प्रदर्शयन्, तद्गुणविधायकं सूत्रं न क्वचित्कृता निर्दिष्टम् ।

२. एतेन 'इ' स्थाने 'इष'धातुरिति विज्ञायते । तथा सति 'एतेति' स्थाने 'एषति' रूपं साधु स्यात् ।

१२१. हट्ट निवासे—व्यावहारिकगृहे ( = आपणे ) हट्टति—व्यवहरति ( व्यापारं करोति )। हट्टः—आपणम् ।

१२२. पिट्ट चलने—कूर्दने । पिट्टति—चलति । पिट्टः—पक्षी ।

१२३. हिट्ट बन्धने—हिट्टति—बन्धयति । हिट्टः—( ? )।

१२४. किट्ट चूर्णे—चूर्णभावे । किट्टति—चूर्णयति । किट्टम्—चूर्णम् ।

१२५. पट्ट भद्रासने—भद्रपीठे ( मङ्गलपीठे )। पट्टति—शुभासन उपविशति । पट्टम्—पट्टाभिषेकः ।

१२६. अट्ट मञ्चिकायाम्—मञ्चक्रियायाम् । अट्टति—मञ्चं करोति । अट्टम्—मञ्चः, खट्वा ।

१२७. वटि विभाजने—विभागक्रियायाम् । वण्टति—विभजति । वण्टकम्—महानसः ( पाकगृहम् )।

१२८. रुटि लुटि स्तेये—चौर्ये । रुण्टति, लुण्टति—चोरयति । रुण्टाकः, लुण्टाकः—चौरः ।

१२९. स्फुटिर् विशरणे विकासे च—मारणे विकासे च । स्फोटति—मारयति, विकसितो भवति ( पुष्पम् )। स्फोटकम्—विभजनम् । स्फुटितम्—विकसितम् ।

१३०. वट्ट सेचने—संघर्षे ( 'रगड़ना'[1] भाषायाम् )। वट्टति—संघर्षयति । वट्टः—खण्डः ( उपलम् )। वट्टिः ( ? )। वट्टा—उष्ट्रः ।

१३१. पठ व्यक्तायां वाचि—व्यक्तवचने । पठति—अधीते । पाठः—पठितुं योग्योऽशः । पाठकः—अध्येता । पठनम्—अध्ययनम् ।

१३२. वठ स्थौल्ये—दैर्घ्ये ह्रस्वत्वे ( ? ) च । वठति—दीर्घो ह्रस्वो वा भवति ।

१३३. कुठ छेदने—कर्तने । कोठति—छिनत्ति । कुठारः—परशुः ।

१३४. जठ धारणे—जठति—धारयति वा । जठरः—उदरम् ।

१३५. मठ निवासे—निवासक्रियायाम् । मठति—निवसति । मठः—निवासस्थानम् ।

---

१. दृषदोपलाभ्यां पेषणम् ।

१३६. कठ कृच्छ्रजीवने—कष्टमये जीवने। कठति—कष्टं प्राप्नोति। कठोरः—कष्टम्। कठारः—अग्निः।

१३७. रठ परिभाषणे—निन्दात्मके वाक्ये। रठति—निन्दयति। रठः—निन्दकः।

१३८. हठ बलात्कारे—प्रसह्य कर्मणि। हठति—प्रसहते। हठ-प्रसहः (बलात्कारः)।

१३९. रुठ लुठ उपघाते—ताडने। रोठति—मारयति। रुठः—हिंसा। लोठति—ताडयति। लुठः—ताडनम्।

१४०. पिठ हिंसासंक्लेशयोः—मारणे, पीडने च। पेठति—मारयति क्लेशयति। पिठरम्—घातकः।

१४१. शठ कैतवे च—द्यूते स्पर्धायां[1] च। शठति—[अक्षैः] दीव्यति। शठः—कितवः। शठा—अनृतम्।

१४२. शुठ गतप्रतिघाते—अपराधे। शोठति—अपराध्यति। शुठः—अपराधकः। शुठा—अपराधनम्।

१४३. पिठ स्थितौ—आसीदने। पिठति[2]—आसीदति। पिठकः—आसीदनम्।

१४४. कुठि गुठि आलस्ये च—आलस्ये तृषायां[3] च। कुण्ठति—गतिहीनो भवति। कुण्ठः—आलस्ययुक्तः। गुण्ठति—तृष्यति। गुण्ठः—तृषा।

१४५. मिठि व्यभिचारे—व्यभिचारक्रियायाम्। मिण्ठति—व्यभिचरति। मिण्ठः—व्यभिचारी।

१४६. कठि गिलने—निगरणे। कण्ठति—निगरति। कण्ठः—गलः।

१४७. शुठि शोषणे—शुष्कीभावे। शुण्ठति—शुष्यति। शुण्ठिः—विश्वभेषजी ('सोंठ' इति भाषायां प्रसिद्धं द्रव्यम्)।

१४८. रुठि लुठि गतौ—गमने। रुण्ठति—धावति। रुण्ठाकः—धावकः। लुण्ठति—कूर्दते। लुण्ठाकः—कूर्दकः।

---

१. चाद्धिंसासंक्लेशयोः स्यात्। स्पर्धायाः कुतः समावेश इति न जानीमः।

२. पिठति, पिठकः उभयत्र गुणाभावः कथम्? यद्वा 'पीठ स्थितौ' पाठः स्यात्, 'पीठः' इति प्रयोगस्य दर्शनात्। पूर्वत्र (१४० सूत्रे) पिठधातोः पाठाच्च।

३. चात् तृषायाः संग्रहः कथम्?

१४९. क्रीडृ विहारे—खेलने। क्रीडति—खेलति। क्रीडा—खेलनक्रिया।

१५०. अड उद्यमे—कार्ये। अडति—उद्योगं करोति। आड्डः—कर्कर:। आडः—कर्मशीलः; उद्योगी।

१५१. लड विलासे—संतोषे प्रसन्नतायां वा। लडति—प्रसन्नो भवति। लाडः—संतोषी। लडः—प्रसन्नता।

१५२. कड मदे—गर्वे। कडति—गर्वति, अभिमत्तो भवति। कडः—मदः। काडः—(?)। काड्डः—जंगलम्।

१५३. गुड माधुर्ये—गोडति—मधुरो भवति। गुडम्—गुड़नाम्ना प्रसिद्धं द्रव्यम्।

१५४. गोडृ बन्धने—गोडति—बन्धयति। गोडा—भित्तिः।

१५५. पीड व्यथायाम्—संक्लेशे। पीडति—दुःखयति। पीडा—दुःखम्।

१५६. चुड्ड हावकरणे—मैथुनसंभ्रमे। चुड्डति—मैथुनं करोति। चुड्डम्—मैथुनसंभ्रमः।

१५७. अड्ड अभियोगे—रहस्ये। अड्डति—रहस्यं भवति। अड्डम्—रहस्यम्।

१५८. कड्ड कार्कश्ये—कठोरव्यवहारे। कड्डति—कठोरं व्यवहरति। कड्डायः—कठोरः। कड्डी—तृणम्।

१५९. गड्ड वदनैकदेशे—मुखैकदेशे चिबुके। गड्डति—कूर्चमुत्पद्यते ('डाढ़ी आती है' इति भाषायाम्)। गड्डम्—चिबुकम्। गड्डा—कन्दमूलम्।

१६०. मड्ड उच्चैर्ध्वनौ—उच्चैश्शब्दे। मड्डति—उच्चैर्ध्वनति। मड्डः मूर्खः। मड्डुः—वाद्यविशेषः। मड्डिः—मुखस्थमन्नम् ('कौर' इति भाषायाम्)। मड्डा—मूर्खः।

१६१. वड्ड खनने—खननक्रियायाम्। वड्डति—खनति। वड्डः—खनकः। वड्डुः—(?)। वड्डिः—(?)। वड्डनम्—(?)।

१६२. मुड्ड सेचने—घर्षणे। मुड्डति—घर्षति। मुड्डः—वटुः। मुड्डिः—गुद-मध्यभागः।

१६३. दड्ड धारणे—सहने। दड्डति—सहते। दड्डः—बुद्धिहीनः। दड्डः—(?)।

१६४. पडु मदे—गर्वे। पडुति–गर्वते। पडुः[1]–स्थूलः पुरुषः। पडुा[1]–नवयौवना स्त्री।

१६५. बुडु उद्गमने—उपरि गमने। बुडुति–उपरि आगच्छति। बुडुा[2]–वृद्धः।

१६६. मडि भूषायाम्—शृङ्गारे। मण्डति–विभूषयति। मण्डनम्–भूषणम्। मण्डलम्–'मण्डल' इत्येव प्रसिद्धम्। मण्डूकः–भेकः।

१६७. कुडि वैकल्ये—जातिभ्रंशे। कुण्डति–जात्या भ्रंश्यते। कुण्डः–जारजः। कुण्डलम्–कर्णाभरणम्। कुण्डम्–मार्तिकं द्रव्यम् ( 'कूंडा' इति प्रसिद्धम् ), तडागो वा। कुण्डा–लघुपर्वतम् ( छोटी पहाड़ी )।

१६८. पडि धारणे—सहने। पण्डति–सहते। पण्डा–बुद्धिः। पण्डितः–बुद्धिमान्।

१६९. पिडि धारणे[3]—सहने। पिण्डति–सहते। पिण्डम्–सङ्घातः।

१७०. अडि आवरणे—आच्छादने। अण्डति–आच्छादितो भवति। अण्डः–प्राण्यवयवः। अण्डुः–वृक्षविशेषः।

१७१. भडि कुत्सायाम्—निन्दायाम्। भण्डति–निन्दति। भण्डः–नर्तकः। भण्डुः–लज्जा।

१७२. भाडि आधारे—आधारक्रियायाम्। भाण्डति–आधरति। भाण्डीरम्–विलासद्रव्यम्। भाण्डम्–घटः।

१७३. लडि कोपे—क्रोधे। लण्डति–कुप्यति। लण्डः–क्रोधी। लण्डा–क्रोधिनी। लण्डी–क्रोधी।

१७४. चडि तैक्ष्ण्ये—दुष्टतायाम्। चण्डति–दौष्ट्यमाचरति। चण्डः–दुष्टः। चण्डी–दुष्टा। चण्डा–पापिनी।

१७५. रडि व्यभिचारे—रण्डति–व्यभिचरति। रण्डा–व्यभिचारिणी।

१७६. एरडि स्नेहने—( तैलक्रियायाम् )। एरण्डति–स्नेहनं करोति। ( चिकना करता है )। एरण्डः–स्नेहनद्रव्यविशेषः।

---

१. अस्यैवापभ्रंशः 'पट्ठा' इति भाषायाम्।

२. अस्यैव 'बुड्ढो' 'बुड्ढा' इति अपभ्रंशौ वृद्धार्थे।

३. पूर्वत्र 'धारणे' अर्थस्योक्तत्वात् पुनः 'धारणे' पाठोऽनर्थकः। 'सङ्घाते' इति पाणिन्यादयः पठन्ति—'पिण्डन्ति सङ्घातभावं गच्छन्ति' इत्यर्थो ज्ञेयः।

१७७. कडि मांसपृथुले—मांसपेश्याम्। कण्डति—मांसेन प्रथते। कण्डम्—मांसपेशी। कण्डूः—रोगविशेषः ('खुजली' इति प्रसिद्धः)।

१७८. काडि परिच्छेदे—विभाजने। काण्डति—विभजति। काण्डः—विभागः।

१७९. तडि समूहे—सङ्घाते। तण्डति—समर्दनं ('भीड़' इति भाषायाम्) भवति। तण्डुः—आकाशः। तण्डः—समूहः।

१८०. खडि रुडि मुडि खण्डने—अवयवविभागे। खण्डति—निकृन्तति (विभजति)। खण्डः—विभागः। रुण्डति—निकृन्तति। रुण्डः—खण्डः। मुण्डति—केशान् निकृन्तति, मुण्डयति। मुण्डः—मुण्डितः। मुण्डा—विधवा। मुण्डिः—मुण्डितः।

१८१. तुडि भक्षणे—भक्षणक्रियायाम्। तुण्डति—खादति। तुण्डम्—मुखम्। तुण्डः—चौरः। तुण्डा—चौरी। तुण्डु—खण्डम्।

१८२. गडि वदनैकदेशे—मुखैकावयवे। गण्डति—साहाय्यं करोति। गण्डम्—कपोलः। गण्डः—अधिपतिः। गण्डम्—पापम्। गण्डकिः (?, की)—गण्डकनाम्ना प्रसिद्धा नदी। गण्डूपम्—मुखस्थं जलम्। गण्डी—छेदः। गण्डुः—पुरुषः।

१८३. हडि हुडि उडि दडि डुडि डिडि चुडि इडि पापडि पडि (?, पढि) शडि शिडि शुडि गुडि पुडि हिंसागत्योः—हिंसायां गत्यां च। हण्डति—मारयति। हण्डः—राक्षसः। हण्डिः—पात्रविशेषः। हण्डः—हरिद्राराग:। हण्डा—दासी। हुण्डति—निकृन्तति। हुण्डः—कृपणः। हुण्डिः—अपजयः (पराजयः)। हुण्डा—गर्तः। उण्डति—छिनत्ति। उण्डः—मत्कुणः ('खटमल' इति भाषायाम्)। उण्डुकम्—द्यूतम्। उण्डलिका—क्रिमिविशेषः। दण्डति—ताडयति। दण्डम्—दण्डम् ('डण्डा' इति भाषायाम्), सर्वस्वापहरणम्, आक्रमणम्। दण्डा—माला। दण्डी—यमः। डुण्डति—निकृन्तति। डुण्डः—कुर्दनम्। डुण्डुः—जलचरपक्षिविशेषः। डुण्डुमः—पक्षी। डिण्डति—आह्वयति। डिण्डिमः—आघोषविशेषः ('ढूंडी' इति भाषायाम्)। डिण्डिः—शिवयोगी। चुण्डति—अन्तर्गच्छति। चुण्डः—मूषकः। इण्डति—ग्रन्थयति। इण्डा—माला। पापण्डति—पतति। पापण्डः[1]—पतितः। पण्डति—पुंस्त्वहीनो भवति। पण्डः—नपुंसकः।

---

१. अस्मादेव ताच्छील्यार्थे णिनिः (इनिः वा) पापण्डी। केचन पाश्चात्यमतानुयायिनः पापण्डधातोः णिनिप्रत्ययरूपमबुद्ध्वा ब्रुवते—यदा कर्तृवाचकः पापण्डशब्दो

शण्डति–शोकं करोति । शण्डः–नपुंसकः । शिण्डति–आसेचति । शिण्डः–महागर्तः । शुण्डति–वर्तयति । शुण्डः–हस्ती । शुण्डालः–शुण्डः ( 'सूंड' इति भाषायाम् ) । गुण्ठति–अवतरति । गुण्ठि–गर्तः, तडागः । गुण्डः–पुरुषः । गुण्डारः–( ? ) । पुण्डति–चौर्यम् ( 'गुण्डापन' इति भाषायाम् ) आचरति । पुण्ड्रम्–पुण्ड्ररेखा । पुण्डः–धूर्तः । पुण्डि–रुद्राक्षशाकम् ।

१८४. गिडि जन्मनि—जनने । गिण्डति–उत्पद्यते । गिण्डा–जन्म ( ? ) । गिण्डि–पात्रविशेषः ( 'लोटा' इति भाषायाम् ) ।

१८५. भिडि हिंसायाम्—मारणे । भिण्डति–मारयति । भिण्डितालः–आयुधविशेषः ।

१८६. निड गूड निवासे—गृहे । नेडति–निवसति । नीडम्[१]–वयसामावासः ( 'घोंसला' इति प्रसिद्धम् ) । गोडति[२]–निवसति । गूडम्–निवासस्थानम् । गुडुः–निवासस्थानम् ( नीडम् ) ।

१८७. दृढ धारणे—सहने । दर्ढति–सहते । दृढम्–बलवत् ।

१८८. वृढ पालने—पालने–पोषणे । वर्ढति–पालयति । वृढः–पोषकः ।

१८९. गाढ बाढ तीव्रगतौ—शीघ्रगत्याम् । गाढति, बाढति–शीघ्रं चलति । गाढम्, बाढम्–शीघ्रगमनम् ।

१९०. ढढि शब्दे—ध्वनौ । ढण्ढति–शब्दयति । ढण्ढः[३]–शब्दः ।

१९१. ढुढि अन्वेषणे—अनुसन्धाने । ढुण्ढति–अन्वेषयति । ढुण्ढिः–काशीविनायकः ।

१९२. षडि शिखडि निर्बीजे[४]—सन्ततिहीने । षण्डति–सन्ततिरहितो

---

कालान्तरे गुणवाचकः सम्पन्नस्तदनन्तरं गुणवाचकात् पाषण्डशब्दात् मत्वर्थे इनिप्रत्यये 'पाषण्डिन्' इति शब्दो निष्पन्नः । एतस्मात् कारणात् 'पाषण्डिनो विकर्मस्थान्' ( ४ । ३० ) इति मनुस्मृतौ 'पाषण्डिन्' शब्दप्रयोगात् मनुस्मृतिः कौटिल्यार्थशास्त्रात् परं संगृहीता (यतोऽर्थशास्त्रे 'पाषण्ड' इति शब्द एवोपलभ्यते) । तदेतत्सर्वमविचारितरमणीयम् । पाषण्ड-पाषण्डिन्नुभावपि स्वतन्त्रौ कर्तृवचनौ । कस्यचित् कचित्प्रयोगः, अपरस्यापरत्र ।

१. दीर्घत्वं कस्मादिति नोक्तम् ।

२. दीर्घोपधस्य गुणकार्यम् ( =ए ओ भावः ) अन्यत्रापि दृश्यते, परन्तु लक्षणं न काप्युपदिष्टम् ।

३. अस्यैव पशुवाचकः 'ढांढा' इति शब्दो नीमाडादिप्रान्तीयभाषासु प्रयुज्यते ।

४. ढान्तप्रकरणे षडि-शिखण्डि-ढुढि धातूनां पाठः क्रमविपरीतः ।

भवति। षण्डः—सन्तानहीनः। शिखण्डति—निष्फलो भवति। शिखण्डी—शिखण्डी [ एतन्नामा क्षत्रियः ]।

१९३. तुडि भक्षणे[1]—खादने। तुण्डति—अत्ति। तुण्डम्—मुखम्। तुण्डुः—चौर्येण भक्षणम्। तुण्डः—चौरः। तुण्डा—चौरी।

१९४. गुपू रक्षणे—पालने। गोपायति[2]—रक्षति। गोपः—रक्षकः।

१९५. तप धूप सन्तापे—दुःखे। तपति—दुःखितो भवति, प्रकाशयति वा। तपनः—सूर्यः। तापनी—नदी। तापः—घर्मः, दुःखम्। तपः—कायकष्टम्। धूपायति[2]—आतपं करोति। धूपः—आतपः।

१९६. रप लप जल्प व्यक्तायां वाचि—विस्पष्टवाक्ये। रपति—वदति। रप्ता—भाषा (?)। रपणः—सुवर्णम्। लपति—कथयति। लपनम्—दुःखप्रकाशनम्। जल्पति—वदति। जल्पकः—जल्पी ( बहुभाषी )।

१९७. जप मानसे च—मानसिकभाषणे। जपति—मनसोचारयति। जपः—मानसमुच्चारणम्।

१९८. चप सान्त्वने—सन्तुष्टीकरणे। चपति—सन्तुष्टो भवति। चापम्-धनुः। चापा—कटम्।

१९९. चुप जप (?, जुप) कुण्ठायां गतौ—शनैर्गतौ। चोपति, जोपति—शनैर्गच्छति। चोपः, जोपः—मन्दगतिः।

२००. जाप जूप आलस्ये—अलसीभावे तृषायां वा[3]। जापति—तृष्यति। जापः—तृषितः। जापुः—तृषा। जूपति—अलसो भवति। जूपः—अलसः। जूपुः—आलस्यम्।

२०१. तप (?, तुप ) तुम्प त्रुप त्रुम्प तुफ तुम्फ त्रुफ त्रुम्फ ऋफ ऋम्फ (?, रुफ रुम्फ ) रिफ रिम्फ पृभ पृम्भ भर्त्सनहिंसयोः—निन्दायां हिंसने च। तोपति—मारयति। तोपः—घातकः ( अस्त्रविशेषः 'तोप'संज्ञकः ? ) तोपु—वनम्। तुम्पति—दूषयति। तुम्पुरः—दूषकः। तुम्पः—गालिः। त्रोपति—(?)। त्रोफः (?) त्रोफणम् (?)। त्रुम्फति—मारयति। त्रुम्फः—घातकः। त्रुम्फणम्—हिंसनम्।[4] रोफति—मारयति। रोफः—मारकः। रोफणम्—हिंसनम्। रुम्फति—

---

१. पूर्वत्र १८१ सूत्रे पठ्यते, पुनः पाठो व्यर्थः।

२. गोपायतिधूपायत्योरायः केनेति नोक्तम्।

३. सूत्रं १४४ द्र०।

४. इतोऽग्रे पाठभ्रंशः प्रतीयते।

मारयति । रम्फः–मारयिता । रम्फणम्–हिंसा । रेफति–मारयति । रेफः–हिंसकः । रेफणम्–हिंसा । रिम्फति–हिंसयति । रिम्फः–हिंसकः । रिम्फणम्–हिंसा । सर्भति–मारयति । सर्भः–मारयिता । सर्भणम्–हिंसनम् । सुम्भति–मारयति । सुम्भः–घातकः । सुम्भणम्–हिंसा ।

२८२. शुभ शुम्भ भाषणे—वचने । शोभति–वदति । शोभः–वाचालः । शुभम्–मङ्गलम् । शोभनम्–मङ्गलम् । शुम्भति–वदति । शुम्भः–एतन्नामा राक्षसः ।

२८३. वफ रफ रफि पर्ब बर्ब सर्ब कर्ब गर्ब शर्ब खर्ब चर्ब पघि जघि गुल्फ पृप गतौ—गत्याम् । वफति–गच्छति । वफः–नाभिदेशीयं मांसम् । रफति–चलति । रफः (?) । रम्फति (?) । रम्फः–कलहः । पर्बति–संपीडयति । पर्बन्–भोजनम् । बर्बति–चलति । बर्बन्–वायुः । मर्बति–रहस्यं गच्छति । मर्बन्–स्वल्पः प्रकाशः । कर्बति–आच्छादयति । कर्बन्–कृष्णत्वम् । गर्बति–अभिमत्तो भवति । गर्बः–मदः । खर्बति–ह्रस्वो भवति । खर्बः–वामनः ( 'बौना' इति भाषायाम् ) । सर्बति–कृत्स्नतां गच्छति । सर्बम्–कृत्स्नम् । चर्बति–दन्तैः पिंशयति ( 'चबाता है' इति भाषायाम् ) । चर्बणम्–दन्तैः पेषणम् । सङ्घति–चलति । सङ्घः–समूहः । जङ्घति–उत्थापयति । जङ्घा–जघनम् । गुल्फति–( घुटने के बल चलता है ) । गुल्फः–विस्तारः । पर्पति–ऋजु भवति । पार्ष्णिः–मदः ।

२८४. अर्ब शर्ब थर्ब हिंसायाम्—हिंसने । अर्बति–पद्भ्यां ताडयति । अर्बन्–घोटकः । शर्बति–मारयति । शर्बः–शिवः । जापकान् न थर्बति = जपकर्तॄन् न हिंसयति–अथर्बन्–वेदः ।

२८५. लुबि रुबि तुबि तबि कबि बिबि अबि णिबि लबि रबि शिबि णबि शबि चुबि चुब चबि चब हिबि पुबि जृबि इर्बि द्वाळिबि रोलबि टुबि प्रुब ष्टुबि टबि डबि कूबि कडबि डुबि ताबि ह्वबि तुणुबि मर्दने—मर्दनक्रियायाम् । लुम्बति—(?) । लुम्बः ( ? ) । रुम्बति–मिश्रयति ( ? ) रुम्बः–मिश्रणम् । तुम्बति–विकसति ( महद् भवति ) । तुम्बा–अलाबूः ( 'तूँबा' इति प्रसिद्धः ) । तुम्बुः–तडागजलरन्ध्रः । तुम्बिः–भृङ्गः । तुम्बुरः–वाद्यविशेषः ('तंबूरा' इति भाषायाम् ) । तम्बति–निवसति । तम्बः–गृहम् । तम्बुः–राजगृहम्

---

१. पवर्गीयान्तेषु अन्तस्थान्तान् पठन् बवयोरभेदं द्योतयन् स्वस्य प्रान्तत्वं बोधयति धातुसूत्रकारः । काशकृत्स्नधातुपाठानुकर्तारः कातन्त्रकृच्चन्द्राचार्यादयोऽपि पश्चद्देशीया एव ।

('तम्बू' इति भाषायां प्रसिद्धम् ?)। तम्बालिः—भाण्डम्। तम्बूलम्—(?) तम्बूरा—वाद्यविशेषः। ताम्बूली—तम्बूलम्। चम्बति—विजयते। चम्बीः—दर्विः ('कड़छी' इति भाषायाम्) कम्बुः—शङ्खम्। कम्बलः—सर्पः, कम्बलं वा। चिम्बति—निवसति। बिम्बः—प्रतिच्छाया। अम्बति—वदति। अम्बः, अम्बकः—पिता। अम्बा, अम्बिका—माता। अम्बु—जलम्। अम्बिलम्—अम्लं जलम्। अम्बिलिः—(?)। अम्बाला—देवगणिका, वेश्या। अम्बाडा—वेश्या। अम्बष्ठः—नाविकः। निम्बति—अम्ली भवति। निम्बा—जम्बीरम् ('नींबू' इति प्रसिद्धम्)। निम्बः—मधुरनिम्बवृक्षस्य पत्रम्। निम्बि—वृक्षविशेषः। निम्बुलिः—'नारङ्गी' इति प्रसिद्धा। लम्बति—अवरोहति ('लटकता है' भाषायाम्)। लम्बा, लम्बिका—जिह्वा। लम्बनम्, लम्बालम्—मुखान्तर्गतोऽङ्गविशेषः। रम्बति—कम्पते। रम्बा—कम्पनम्। शिम्बति—सेवते। शिम्बः—सेवकः। शिम्बा—अवतारणम्, अवतरणम्। शिम्बी—सेविका। शिम्बिकः—सेवकः। शिम्बुलम्—नासिकामलम्। नम्बति—पूजयति। नम्बि—(?)। नम्बुः—विश्वासः। शम्बति—ताडयति। शम्बः—गर्जनम्। शम्बरः—राक्षसः। शम्बरम्—जलम्। चुम्बति—ओष्ठाभ्यां स्पृशति ('चूँबता है'), चुम्बुकः—मुखस्पर्शः। चुम्बनम्—ओष्ठाभ्यां स्पर्शनम्। चुबति[1]—दैन्येन प्रार्थयति। चुबुकम्—कूर्चम्। चम्बति—भयं दर्शयति। चम्बरः—चद्दरः। चम्बुः—उदपात्रम् ('लोटा' इति प्रसिद्धम्)। चम्बू—(?)। चबति—निपातयति। चबकः—तडागः (?)। चबुकः—कशा ('चाबुक' इति भाषायाम्)। हिम्बति—बिभेति। हिम्बः—कायरः। हिम्बा—कायरता। कोसम्बति[2]—पृथिव्या उपरि कर्षति। कुसुम्बा—वृक्षविशेषः (कुसुम्भवृक्षः)। जृम्बति—अवलम्बति। जृम्बा—पञ्चमेदासुरस्य पत्नी। हेरम्बति—बहु भक्षयति। हेरम्बः—विनायकः। दालिम्बति—हसति। दालिम्बः—वृक्षविशेषः। रोलम्बति—जिघ्रति। रोलम्बः—भ्रमरः। आपस्तम्बति—जले उत्पद्यते। आपस्तम्बम्—जलान्तर्गतो घासः (तृणविशेषः), आपस्तम्बनामा ऋषिः।[3] ताम्बति—दीप्यते। ताम्बरम्—ताम्रम्। डम्बति—मारयति। डम्बः—राक्षसः। स्तबति—स्तम्बयति (गुच्छयति)। स्तबकम्—आम्रगुच्छम्। कुस्तुम्बति—पृथिव्या उपरि गन्धयति। कुस्तुम्बरी—धान्यकम्। टम्बति—आकृषति। टम्बलः—मत्कुणः। विडम्बति—अत्यन्तं भक्षयति। विडम्बः। कनलेन (?, नलेन) कूबति—मैथुनं करोति नलकूबरः—कुबेरपुत्रः। कदम्बति—

---

१. गुणाभावः कथमिति न सूचितम्। २. 'कुसुम्बति' इति युक्तः पाठः।

३. इतोऽग्रे पाठभ्रंशः, पाठस्य पौर्वापर्यदर्शनात्।

मिश्रितं भवति । कदम्ब—मिश्रितम्, कदम्बनामा वृक्षविशेषः, सुगन्धं वा । कुम्बति—क्रीडति । कुम्बः—क्रीडनम् । नुणुम्बति—श्रमं करोति । नुणुम्बः—कर्षकः ।

२०६. अण रण रिणि वण भण मण कण क्विण क्षुण खुण वण चण गुण गण गिण पण शण पण फण हण घण घृण तृण पुण पूण गुण पीण पिण जण झण ह्रिण इरण क्षण दण लुण घण कण इण ष्टूण[1] ष्टन ष्ट्वन[2] भन ध्वन श्वन वन चन शब्दे—शब्दक्रियायाम् । अणति—ध्वनयति । अणिः—लघु द्रव्यम् । अणुः, अणिः—अल्पपरिधिद्रव्यम् । आणः—सौन्दर्यम् । अण्णः—ज्येष्ठः । रणति—शब्दयति । रणः—युद्धम् । राणिः—साम्राज्ञी । रेणति—अल्पीभवति । रेणुः—चूर्णम् । रेणुका—एतन्नाम्नी स्त्री । वणति—वदति । वणुः—वाक्यम् । वाणी—सरस्वती । भणति—पाठयति । भाणिः—असिः । भाणः—नाटकभेदः । मणति—कथयति । मणः—कथनम् । मणिः—द्रव्यविशेषः । माणिः—बटुः, पुरुषचिह्नम् । मण्—मृत्तिका । कणति—[ 'आरा'शस्त्रेण ] कर्तयति । कणः—क्षुद्रद्रव्यम् । कणिमा—गिरिपर्व ( 'घाटी' नाम्ना प्रसिद्धम् ) । काणः—एकाक्षः । कणु—चक्षुः । काणिः—पणम् ( 'पैसा' इति भाषायाम् ) । काणिका—उपहारः ( 'भेंट' इति भाषायाम् ) । केणति—( 'चिढ़ाता है' इति भाषायाम् ) । केणः—'चिढ़ाना' इति भाषायाम् । केणिः—सम्भारः ( 'सामान' इति भाषायाम् ) । क्विणः—ध्वनिः । क्विण्णः—शब्दापनम् । कोणति—युध्यते ( 'झगड़ता है' इति भाषायाम् ) । कोणाः—महिषः, वाद्यविशेषो वा । कुणिः—मदः । कुणपः—चाण्डालः । कुणः—( ? ) । कोणा—वीणायाः तारम् । खोणति—गर्जति । खोणः—सिंहः । खोणिः—ध्वनिः । खुण्णः—ध्वनिसमूहः ( 'चिल्लाहट' इति भाषायाम् ) । वणति[3]—जनसम्मर्दो ( भीड़ ) भवति । वणः—सम्मर्दः । चणति—दीप्यते । चणः—दीप्तिः ( 'चमक' इति भाषायाम् ) । चणकः—धान्यविशेषः ( 'चना' इति प्रसिद्धः ) । गोणति—शब्दापयति । गुणः—गुणः । गुण्—क्रमः । गणति—संख्यापयति । गणः—संख्यानम् (गणितम्) । गाणः—तिलादिसंपीडकम् । ( 'कोल्हू' इति भाषायाम् ) । गण्—गणितम् । गणाः—शरणागताः । गेणति—मापयति । गेणुः—वितस्तम् । सणति—प्रकाशते । सणः—कीटविशेषः ('टिड्डी' इति प्रसिद्धम् ) । सणिः—शनिः (शनैश्चरः) । शणति—उपद्रवति । शणिः—शनिः । शणुः—पत्रम् । शाणिः—बुद्धिमान् । शाणः—कुठारः । शाणा—क्षुरादीनां धारोत्पादयितृ पाषाणम् ('शाण' इत्येव प्रसिद्धम्) । पणति—व्यवहरति । पणम्—( निष्कस्य

1. व्याख्याने 'ष्टूणति ष्टूणा' इत्येवं निर्देशात् 'ष्टूण' इत्येवमत्र पाठ अपेक्ष्यते । अपि च व्याख्याने 'इण ष्टूण' इत्येतयोः पूर्वापरं व्याख्यानमुपलभ्यते ।
2. व्याख्याने 'स्वनति स्वनः' इत्येवं दर्शनात् ष्वन इत्येव शुद्धः पाठः ।
3. अर्थभेदादस्मिन्नेव दण्डके पुनः पाठः ।

दशमो भागः )। पणिनः—मुनिविशेषः । पाणिनिः—पणिनः पुत्रः । पण्यम्—पणम्—विक्रयार्हं द्रव्यम् । फणति—आश्रयति । फणा—फालः । फणिन्—सर्पः । फणहः—वाद्यम् । हणति—उपद्रवति । हणः—निष्कस्य दशमो भागः । हाणः—उपद्रवः । हाणाहाणिः—कलहः । घोणति—जिघ्रति । घोणा—नासिका । घोणी—सूकरः । घुणः—कीटः । घण्—अण्डम् । घर्णति—मत्तो भवति । घर्णः—सूकरः । घृणिः—सूर्यरश्मिः । घूर्णति—भ्रमति । घूर्णः—वक्रता ( 'घुमाव' इति भाषायाम् )। अर्णति—जलेन आर्द्री भवति । अर्णः—जलम् । ऋणम्—ऋणम् । क्षोणति—निवसति । क्षोणिः—पृथिवी । क्षुण्णः—पिष्टं द्रव्यम् । तर्णति—अङ्कुरितो भवति । तृणः—घासः । पोणति-संयुनक्ति । पुणम्—ऋजुः । पुण्यम्—सुकृत् । पूर्णति—पूर्णो भवति । पूर्णिमा—पौर्णमास्या । मोणति—सिञ्चति । मुणः—सिञ्चनम् । मणुः—गर्तः । पेणति[1]—दुर्गन्धि भवति । पिणम्—( ? पीणम् )—शवः । पेणति—श्रयति । पिणम्, पिण्याकम्—तिलादीनां तैलनिष्कासनेऽवशिष्टं 'खली' इति प्रसिद्धम् । जणति—जानाति । जणिः—ज्ञाता । जाणः—बुद्धिमान् । झणति—उत्सुको भवति । झणः—उत्सुकः । झाणः—स्वरः । हेरणति[2]—दीप्यते । हिरणः—रागः ( 'रङ्ग' इति भाषायाम् ) । हिरण्यम्—हिरण्—सुवर्णम् । एरणति —( ? ) । इरणम्, इरण्यम्—ऊषरभूमिः (?) । क्षणति—दीप्यते । क्षणः—'क्षण' इत्येव प्रसिद्धः कालविशेषः । ढणति—एकत्रितो भवति । ढणति—नदति ( शब्दयति ) ढणः—घण्टा । ढोणति (?) । ढुणा (?) । ऋणति—वदति । ऋणः—प्रतिध्वनिः । स्थूणति[3]—दीर्घो भवति । स्थूणा—वीणादण्डः । एणति[4]—वदति । इणः—प्रतिध्वनिः । वीणा—वाद्यविशेषः वीणेत्येव प्रसिद्धः । स्तनति—त्यजति ( रेचयति वा ) । स्तनः—उरोजः । स्वनति—गर्जति । स्वनः—शब्दः । स्वानः—ध्वनिः । श्वनति[5]—गालिं भाषते । श्वानः—कुक्कुरः । घनति—चलति । घनः—पशुः । धनम्—द्रव्यम् । धान्यम्—अन्नम् ( शालिर्वा ) । ध्वनति—आर्त्तशब्दं करोति । ध्वनिः—शब्दः ।[6]

२०७. कृणु खृणु पृणु वृणु अपनयने—परित्यागे । कर्णति—शृणोति ।

---

१. दीर्घोपधस्य गुणभावः पूर्ववद् ( पृष्ठ १५ टि० १ ) द्रष्टव्यः ।
२. हिरण-इरण-धात्वोराद्यस्य इकारस्य गुणविधायकं सूत्रं नोल्लिखितं वृत्तिकृता ।
३. मन्त्रपाठे 'ष्टूण' इत्येवं निर्देशः । तथा सति 'स्तूणति' इति स्यात् ।
४. सूत्रपाठे 'इण ष्टूण' इत्येवं पूर्वापरपाठः ।
५. सूत्रपाठे 'ष्टवन धन ध्वन श्वन' इत्येवं पूर्वापरं पाठः ।
६. सूत्रपठितौ 'वन चन' धातू नात्र व्याख्यातौ । एतेनात्र पाठभ्रंशः प्रतीयते । वन चन धात्वोरग्रे ( २१९ सूत्रे )ऽपि पाठ उपलभ्यते ।

कर्णः—श्रवणेन्द्रियम् । खर्णति—परित्यजति । स्वर्णः—ध्वनिः । पर्णति—पल्लवितो भवति । पर्णः—दलम् । वर्णति—[ वस्त्रं ] रजति ( वर्णनं करोति वा ) । वर्णः—रागः, प्रेम ।

२०८. शोणृ वर्णगत्योः—रागे गतौ च । शोणति—रजति ( वस्त्रम् ) । शोणः—रक्तं वर्णम् ।

२०९. हुणु हूणु गतौ—गमने । होणति—गच्छति । होणः—त्यजनम् । हुण्—व्रणम्, स्फुटिका ( 'फुंसी' इति भाषायाम् ) । होणति—निशिष्टविषये व्यवहरति । हूणम्—लक्षणम् ।

२१०. व्रण क्रिमिभक्षणे—कीटदशने । व्रणति—कीटो दशति । व्रणम्—कीटदशनम् ।

२११. श्रोणृ श्लोणृ संघाते—समूहे । श्रोणति—संहतो भवति । श्रोणिः—कटिप्रदेशः । श्लोणति—स्थूलो भवति । श्लोणम्—स्थूलता ।

२१२. प्रेणृ फ्रेणृ वेणृ भेणृ चेणृ केणृ खेणृ गेणृ घेणृ गोणृ घोणृ गतिप्रेषणाश्लेषणेषु—गत्यां प्रेरणे सहने ( १ ) च । प्रेणति—वर्धापयति । प्रेणः—वर्धापनम् । फ्रेणति—थपथपा करोति ( थपकी देता है ) । फ्रेणः—थपकनम् । वेणति—अङ्कुरितो भवति । वेणम्—गवादीनां भक्ष्यस्थानम् ( 'चारागाह' इति भाषायाम् ) । वेणा—कीलकम् । भेणति—सान्त्वयति । भेणम्—सान्त्वनम्, सहनम् । भेणा—पश्वादिबन्धनम् ( 'खूंटा' इति भाषायाम् ) । चेणति—चयति । वेणुः—वंशः । वेणिः—जटा । केणति—गच्छति । केणम्—नष्टं वस्तु । केणिः—वस्तु । खेणति—संचयति । खेणम्—पक्षः । खेणिः—नदी । गेणति—लिखति । गेणिः—स्रोतः । घेणति—रिङ्गति ( 'रेंगता है' इति भाषायाम् ) । घेणा—खननम् ।

२१३. क्रुड क्रूड चलने—गतौ । क्रोडति—कम्पते । क्रोडः—एतन्नामा प्राणिविशेषः । क्रोडनम्—कम्पनम् । क्रुडति—गुदगुदयति । क्रूडः—भालुः । क्रूडनम्—गोदनक्रिया । क्रूडति[१]—खनति । क्रूडः—खनकः । क्रूडनम्—खननम् ।

२१४. हुड्[२] हूडृ होडृ हेडृ हैडृ हौडृ गतौ—चलने । होडति—खनति । हुडः—सूकरः । हुडिः—चूर्णं धूलिः । हूडति—कूदति । हूडिकः—कूपकः । होडति—जानाति । होडः—व्याघ्रः । हेडति—बिभेति । हेडः—भित्तिः । हेडिः—भीरुः ।

---

१. कूडत्यादीनां पदानां पुनः पाठोऽर्थभेदप्रदर्शनार्थः प्रतीयते ।

२. कचडपाठे 'हुण्डृ' इत्यपपाठः, व्याख्याने 'होडतीति' दर्शनात्, कातन्त्रेऽपि 'हुडृ' इत्येव पाठाच्च ।

हैडति—बिभेति । हैडिकः—अग्रे धावनम् ( ? ) । हौडति—धावति । हौडः—धावकः ।

२१५. इड ईड एड धारणे—घर्षणे । एडति—घर्षति । इडा—नासिकाया वामभागस्था नाडिः । एडति[1]—छिद्रं करोति । इडिकः—छिद्रकर्ता । एडति—सहते । एडूकः—भित्तिः ( बाधा वा ) ।

२१६. रोडृ अनादरे—अनादरे मौनधारणे वा । रोडति—मौनं धरति । रोडः—मौनधारकः ।

२१७. लोडृ उन्मादे—उमत्ततायाम् । लोडति—उन्मत्तो भवति । लोडः—उन्मत्तः । लोडुः—शायकः ।

२१८. कनि व्याप्तिकान्तिगतिषु—व्यापने प्रकाशे गतौ च । कनति—प्रकाशितो भवति ( 'चमकता है' इति भाषायाम् ) । कनकम्—सुवर्णम् । काननम्—जङ्गलम् । कन्या[2]—कुमारी । कान्तिः—प्रकाशः ।

२१९. वन षण रन (?, इन) एन वेन उन (?, ऊन) शून शुन जिन जिन्न जुन जुन्न चन चन्न च्वन्न च्वन छन्न संभक्तौ—मिश्रणे । वनति—मिश्रितो भवति । वनम्—जलम्, जङ्गलं च । वानः—वर्षा । सनति—योग्यो भवति । सनकः, सनातनः—एतौ ब्रह्मणो मानसौ पुत्रौ । सानुः—तटम् ( गिरिशृङ्गं वा ) । एनति—प्रकाशते । इनः—सूर्यः । एनति—दुष्यति । एनः—पापम् । वेनति—रक्षति । वेनः—प्रभुः । ऊनति—अल्पी भवति । ऊनः—स्वल्पम् । शूनति—शून्यं भवति । शून्यम्—रहितम् ( रिक्तं वा ) । शोनति—मुक्तो भवति । शुनकः—[ यस्य पुत्रः ] शौनको मुनिः, श्वा वा । शुनिः[3]—कुक्कुरी ( शुनी ) । जिनति—

---

१. दीर्घोपधस्य गुणभावः पूर्ववद् ( पृष्ठ १५ टि० १ ) द्रष्टव्यः ।

२. अस्मादेव कनधातोः 'इनन्' प्रत्यये कन्यार्थकः कनीना शब्दोऽपि सिद्ध्यति । तस्यैव 'कानीनः' इति तद्धितान्तो विकारः । पाणिनिकाले कन्यार्थकस्य 'कनीना' शब्दस्य लोकेऽप्रयोगात् तद्विकारस्य कानीनस्य च प्रयोगोपलम्भात् भगवता पाणिनिना कानीन-शब्दार्थपरिज्ञापनाय 'कन्यायाः कनीन च' ( अष्टा० ४।१।११६ ) सूत्रे कन्याशब्दमुपादाय ततोऽपत्यार्थेऽण् प्रत्ययं च विधाय कन्यास्थाने च मूलभूतं प्रातिपदिकम् आदिश्य कानीन-शब्दस्य साधुत्वं तदर्थनिर्देशश्च कृतः । वैदिकवाङ्मये 'कनीनकेव' ( ऋ० ४।३२।२३ ) इत्यादिषु ह्रस्वार्थककन्प्रत्ययान्तः प्रयोगो दृश्यते । अवेस्ता-ग्रन्थे ( हओमयश्त ९, २३ ) 'ह ओमा तास् चित् या कइनीना' इत्यादिषु कनीनाशब्दस्यापभ्रंशः 'कइनीना' शब्दः प्रयुज्यते । तैत्तिरीयारण्यके (१।२७।६) च कनीनासमानार्थकः 'कनीनी' पदमपि प्रयुज्यते । विशेषोऽत्र 'संस्कृत व्याकरण शास्त्र का इतिहास' नाम्नि ग्रन्थे ( भाग १ पृष्ठ ११ ) द्रष्टव्यः ।

३. औणादिक इन् प्रत्ययान्तः ।

त्यजति । जिनः–तीर्थङ्करः ( अर्हन्तः ), त्यागी । जेनः, जेनुः–मधु । झिन्नति–जयति । झिन्नः–नाभिराजपुत्रः, तपस्वी । जोनति–जयति । जोनिकः–रक्षकः । जोनिः–क्षुधा । जुन्नति–परिभ्रमति । जुन्नः–परिभ्रमकः ( यायावरः–'घुमक्कड़' इति भाषायाम् ) जोनाळः–'मक्की' नामा धान्यविशेषः । जुन्नुः–आमिक्षा । चनति–प्राप्नोति । चनः–प्राप्तुं शीलः । चानम्–आयुधविशेषः । चन्नति–भूषति ( सुन्दरो भवति ) । चन्नः–सुन्दरः पुरुषः । चन्निः–सुन्दरी । चन्नं–सौन्दर्यम् । छन्नति–गृह्णाति । छन्नः–निगृहीतो मनुष्यः । नखछन्नम्–नखनिकृन्तकः । वन्नति (?), वन्नम् (?), वन्नविन्नम् (?) ।

२२०. चमु छमु जमु झमु जिमु झिमु अदने—भक्षणे । चमति–भक्षति । चमरी–गवयी ( चमरी गाय, नील गाय ) । चामरः–राक्षसः । चामीकरम्–सुवर्णम् । चमूः–सेना । छमति–अत्ति । छमनम्–भोज्यवस्तु । आचमनम्[1]–आचमन क्रिया । आछमनम्–गण्डूषकरणम् । जमति–निगलति । जमः–निगलितो ( भक्षितो ) मनुष्यः । जमदग्निः–एतन्नामा ऋषिः, अग्निः, पक्षी [ च ] । जमनम्–भक्षणम् ( अदनम् ) । झमति–भोजयति । झमकः–भुक्तभोजनो मानवः । झमनम्–आहारः । झामः–अदनम् । जेमति–ददाति, अर्पयति । जेमिनः–ऋषि विशेषः, यस्य जैमिनिः पुत्रः । जेमिनम्–भोजनम् । झेमति–भुङ्क्ते । झेमनम्–भोजनम्, आहारः ।

२२१. क्रमु क्रिमु पादविक्षेपे—पद्भ्यां चलने । क्रमति–पद्भ्यां चलति । क्रमः–क्रमशः, पश्चाद् वा । क्रमणम्–कालक्षेपः । क्रान्तः–यातो मानवः । क्रन्ता–गन्ता, यात्री । संक्रान्तिः–सूर्यस्य राश्यन्तरसंयोगः । क्रेमति–दशति । क्रिमिः–कीटः ( क्षुद्रप्राणी ) । क्रिमणम्–क्रीडाविशेषः । क्रिन्ता–दशकः ।

२२२. यमु उपरमे—समाप्तौ, उपसंहारे । गमाम् वः ( ?, गमिष्यमां छः )–गमादीनां मकारस्य वकारो ( छकारो ) भवति । यवति ( ?, यच्छति )–समापयति । यमः–अन्तकः । यामः–कालविशेषः । यामिनी–रात्रिः । यमिः–तपस्वी । यमनम्–तपः । यन्ता–प्रेरकः । यन्त्रम्–उद्धरणिः, उद्धरणम् ।

२२३. णमु प्रह्वत्वे शब्दे—शब्दे नमस्कारे । धात्वादेः षः सः–धातोरादेः षकारस्य सकारो भवति । णो नः–धात्वादेर्णकारस्य नकारो भवति । नमति–नमस्करोति । नन्ता–नमस्कर्ता । नमनम्–नमस्कारः । नाम–नाम ( संज्ञा ) । नमन्–शरणार्थी । लोपोऽनुनासिकानां कानुबन्धे–अनुनासि-

---

१. आचमनशब्दस्तदर्थश्च चमुधातु व्याख्याने युक्तः, नात्र छमुप्रकरणे ।

कानां धातूनां ङ ञ ण न म वर्णानां लोपोऽदर्शनं भवति कानुबन्धे ककरानुबन्धके प्रत्यये परतः । नम्+क्त अत्र मकारस्य लोपो भवति । नतः–नमस्कर्ता, अवगतम्–ज्ञातम् । नतिः–नमनम् । नत्वा–नमस्कृत्वा । प्रणम्य–नमस्कृत्य । नतवान्–कृतनमस्कारः पुरुषः । नमसियम् (?, नमस्यम्)–नमस्कर्तुं योग्यम् । नम्यः–नमस्करणीयः । उदनुबन्धादिड् वा–उकारानुबन्धवतो धातोरिडागमो वा भवति । नमितम्–नमस्कृतः । नन्ता–नमस्कर्ता ।

२२४. अम अम्म द्रम द्रम्म हम हम्म मि मृ[१] हय गतौ—गमने । अमति–चलति । अन्ता–गन्ता । अमनम्–हरिलम् । आमः–अपक्वः । अमिः–गतिः । अति–अधिकम् । अतः–गन्ता । अम्मति–धारयति । अम्मा–माता । अम्मिः–पुत्री । अम्मिता–पोषकः । द्रमति–पुष्णाति । द्रमः–पोषकः । द्रामः–पोषकः । द्रमगः, द्रन्ता–पोषकः । द्रतिः–पोषणम् । द्रतः–पोषकः । द्रम्मति–प्रभवति । द्रम्मः–प्रभुः, स्वामी । द्रम्मिः–स्वामिनी । हमति–प्रेरयति । हन्ता–प्रेरकः । हमः (?) । हम्मति–गर्वं करोति । हम्मः–गर्वी । हम्मुः–गर्वः । मयति–चलति । मिः–बालिका । मरति[१]–गच्छति । मर्त्यः–मनुष्यः । हयति–कूर्दते, नृत्यति । हयः–घोटकः । हयनम्–नृत्यम् । हायः–पालः (?) । हयिता–नर्तकः ।

२२५. हर्य क्षि क्लान्तौ च—शोषणे [चात्] चलने च । हर्यति–शुष्यति । हर्यक्षः–सिंहः । हर्यः–सिंहगतिः ।

२२६. मव्य मव अव्य अव्व अल्ल अक्क बन्धने पालने च—मव्यति–बध्नाति । मव्यः–बन्धकः । मवति–पालयति । मवः–राजा । मावः–श्वशुरः । मावा–रागः । माबुः–चूतवृक्षः । अव्यति–पालयति । अव्यः–राजा । अव्वति–पालयति । अव्वा–माता । अव्वः–पिता । अल्लति–पालयति । अल्लः–प्रभुः, स्वामी । अल्ला–स्वामिनी । अक्कति–पालयति । अक्कः–राजा । अक्का–ज्येष्ठा भगिनी ।

२२७. अप अप्प पालने—अपति–पालयति । अपस्–जलम् । आपः–अप्सुजो घासः (शैवालः) । आपुः–तृणविशेषः । आपिः–अपिसेनदेशः (?) । अप्पति–पालयति । अप्पः–जनकः पिता । अप्पु–रक्षणम् । अप्पि–रक्षणम् । अप्पा–माता ।

---

१. पाणिनीयधातुवृत्तिकाराः 'मांमृ' इत्येवमेकं धातुं मन्यन्ते । चान्द्रादयोऽप्येवमेव । इह काशकृत्स्नीयः पाठः साधुः । वैदिकग्रन्थेषु 'मरति' इत्यादिप्रयोगदर्शनात् ।

२२८. अब्य जनने—जन्मनि । अब्यति–जनयति । अब्यः–पिता । अब्या–माता ।

२२९. सूर्क्ष्य ईर्क्ष्य ईर्ष्य ईर्ष्यायाम्—सूर्क्ष्यति–ईर्ष्ययाधरं दन्तैर्दशति । सूर्क्ष्यम्–दन्तपेषणम् ( 'दाँत पीसना' इति भाषायाम् ) । ईर्क्ष्यति–दन्तान् पिंषति । ईर्क्ष्यम्–क्रोधेन दन्तपेषणम् ।

२३०. शुची शूची चुची चूची अभिषवे—मन्थने । दिवादेर्यन्[1]–दिवादिभ्यो यन् विकरणो भवति । शुच्यति–मन्थति । चजयोः कगौ कानुबन्धे–चकारजकारयोः ककारगकारौ भवतः कानुबन्धे प्रत्यये परतः । शुच्यति–मन्थति । शुक्तिः–बुद्बुदः । शुचिः–अग्निः, पवित्रवान् । शूच्यति–सीव्यति । शूचिः–सूचिः ( 'सूई' इति भाषायाम् ) । शूचनम्–अपकारप्रयुक्तं सूचनम् ('चुगलीखाना' इति भाषायाम्) । शूचकः–सूचकः । चुच्यति–कृन्तति । चुचिः–सोमलताखण्डः । चूच्यति–स्नाति । चूचकम्–स्नानम् , स्तनाग्रभागो वा ।

२३१. दलञि फलञि विशेषणे—खण्डने । दलति[2]–खण्डयति । दलम्–पुष्पदलम् ('पंखुडी' इति भाषायाम्) । दालम्–कालः । फलति–कृन्तति । फलम्–प्रसिद्धम् । फालम्–हलाग्रभागः ।

२३२. मील श्मील क्ष्मील निमेषणे—अक्षिनिमेषे । मीलति–चक्षुषी

---

१. भ्वादिगणस्थेषु धातुषु 'दिवादेर्यन्' इत्यस्य कथं प्रवृत्तिः कृता काशकृत्स्नवृत्तिकृतेति न ज्ञायते । एवमेवाग्रेऽपि वृत्तिकारः 'उणुंञ् आच्छादने' इत्यत्र उकारमनुबन्धं मत्वा 'तनादेरुः' इति सूत्रेण उकारविकरणं कृत्वा ऊर्णोति प्रयोगं साधयति । धातोरुकारस्यानुबन्धत्वात् 'ऊर्णः ऊर्णन् ऊर्णकः ऊर्णिता ऊर्णनम्' इत्यादीन् कृदन्तांश्च दर्शयति । कथमन्यगणस्थेभ्यो धातुभ्योऽन्यगणीयो विकरणो भवति इति न स्पष्टीकृतं वृत्तिकारेण । वयं तु पश्यामः यथा वेदे कचिद् द्विविकरणता क्वचिच्च त्रिविकरणता दृश्यते तथैव प्राक् लोकभाषायामपि कचित्क्वचित् प्रवृत्तिरासीत् । तस्यैवावशेषोऽत्र काशकृत्स्नधातुपाठ उपलभ्यते । अन्ये वैयाकरणास्तु लोके द्विविकरणतां हापयितुं 'शुच्य चुच्य' इत्येवं यकारसहितान् धातून् अपठन् । कातन्त्रेऽपि 'शुच्यी चुच्यी' इत्येवं सयकारावेव धातू उपलभ्येते । यद्यप्युभयथाऽपि पाठे उभयप्रक्रियानुसारं सार्वधातुकलकारेषु न रूपभेदप्रसंगः, परन्तु आर्धधातुकलकारेषु तु रूपभेदः प्राप्नोत्येव । यथा शूची चूचीति पाठे लुटि शूचिता चूचिता इति स्यात्, शुच्य चुच्य पाठे तु शुच्यिता चुच्यिता इति । एवमन्यत्रापि ज्ञेयम् ।

२. दलञि फलञि धात्वोर्ञिकारानुबन्धस्य कथं लोप इति न व्यक्तीकृतं वृत्तिकारेण कातन्त्रे तु 'योऽनुबन्धोऽप्रयोगी' ( ३।८।३१ ) इति सूत्रेण प्रयोगाभाव उक्तः ।

निमीलयति । मीलनम्—अक्षिस्पन्दनम् । स्मीलति[1]—चक्षोरुपरिस्थं पालकं मोटयति ( येन पलकस्यान्तर्भागस्थो रक्तवर्णो दृश्येत )। स्मीलनम्—पूर्वोक्तक्रियाकरणम् । क्ष्मीलति—अर्धं निमिषति । क्ष्मीलनम्—अर्धनिमीलनम् ।

२३३. पील प्रतिष्टम्भे—प्रतिष्ठापने । पीलति—प्रतिष्ठापयति । पीलुः—हस्ती, वृक्षविशेषो वा ।

२३४. णील वर्णे—आच्छादने रञ्जने च । नीलति—( आच्छादयति अभिभवति = चढ़ता है )। नीलम्—नीलरागः । नीलिमा—रागविशेषः ।

२३५. शील समाधौ—शीले चरित्रे । शीलति—चरित्रवान् भवति । शीलम्—चरित्रम् ।

२३६. कील बन्धे—कीलति—( 'कील ठोंकता है' इति भाषायाम् ) कीलम्—एतन्नामकं लोहद्रव्यम् । कीलिः—तालकम् ( 'ताला' इति भाषायाम् )। कील—कीलम् । कीलालम्—जलम् , पयः । कीलालम् ( ? ) गोशाला ।

२३७. कुल[2] ( ?, कूल ) कोल आवरणे—कुलति ( ?, कूलति ) परिश्राम्यति । कूलिः—भारवाहकः । कूलम्—नदीतटम् । कोलति—खनति । कोलः यष्टिका ( 'छड़ी' इति भाषायाम् )। निकोलः—वृक्षविशेषः ।

२३८. शूल रुजायाम्—रोगे, दुःखे । शूलति—पीडयति । शूला—पीडा । शूलम्[3]—शूलनामा शस्त्रविशेषः । शूली—शिवः ।

२३९. तूल निष्कर्षे—लाघवे[4] ( हलका होने में ) तूलति—लघुर्भवति । तूलम्—रूई इति भाषायां प्रसिद्धम् ।

२४० पूल संघाते—पूलति—पल्लवितो भवति । पूलम्—तृणम् । पञ्चपूली—तृणविशेषः ।

२४१. मूल प्रतिष्ठायाम्—प्रतिष्ठापने । मूलति—प्रतिष्ठापयति । मूलम्—रोगकारणम् , कन्दविशेषो वा ।

---

१. धातुसूत्रे 'ष्मील' इति पठ्यते, व्याख्याने 'स्मीलति, स्मीलनम्' इति दन्त्यसकारो दृश्यते ।

२. कूलिः कूलम् इत्यत्र द्विमात्रिकस्यदर्शनात् ह्रस्वोकारवान् अपपाठः । कातन्त्रेऽपि 'कूल' इत्येव पठ्यते ।

३. शूलं कण्टकमपि । अस्यैव 'सूल' इति राजस्थानीयभाषायामपभ्रंशः ।

४. माधवीयधातुवृत्तौ तु 'निष्कर्षो निष्कोषणम्, तत्रान्तर्गतस्य बहिर्निःसारणम् । तूलं हि कर्पासवृक्षकोशात् निष्काश्यते ।

२४२. फल पल पल्ल वल वल्ल निष्पत्तौ—फलितभावे। फलति[1]—फलितो (फलयुक्तो) भवति। फलम्—प्रसिद्धम्। फालम्—हलाग्रभागः। फली—वृक्षः। फलिनी—लता। पलति—पलितो भवति। पलम्—खण्डः। पललम्—खण्डः। पलाशः—एतन्नामा वृक्षविशेषः। पलारम्—चिह्नम्। पल्—दन्तः। पाल्—दुग्धम्। पलितम्—परिपक्वम् (केशानां श्वेतीभावः)। पल्लति—पल्लवितो भवति। पल्लः—हस्ती। पल्ली—गृहगोधा ('छिपकली' इति भाषायाम्), ग्रामः। पल्लवः—नवीनं दलम्। पल्लनम्—(?)। वलति—अङ्कुरितो भवति। वलम्—अङ्कुरः। वालम्—केशः। वला—जालम्। वल्लितम्—उदरा (?)। वल्लति—विक्रीणाति। वल्लः—गोपालः। वल्लभः—प्रियः, पतिः। वल्लरिः—देशः, गुच्छः। वल्लिः—लता, शाटिः।

२४३. चुल चुल्ल द्रावकरणे[2] पाकाग्निकुण्डे च—मैथुने सम्भ्रमे पाककरणे च। चुल्लति[3]—मैथुनं पाकं वा करोति। चुल्लिः—पाकाग्न्याधारः ('चूल्हा' इति भाषायाम्)। चुल्लनम्—मैथुनम्, सम्भ्रमः। चुल्लकः—मैथुनसंभ्रमवान्। चोलति—शृङ्गारं करोति। चोलः—जनपदविशेषः। चोलिः—उरआच्छादनवस्त्रम्।

२४४. फुल फुल्ल विकसने—विकासे। फोलति—विकसितो भवति। फुल्लम्—विकसनम्। फुल्लति—विकसितो भवति। फुल्लः—विकासः।

२४५. चिल चिल्ल शैथिल्ये—शिथिलतायाम्। चेलति—दशति। चेलः—वृश्चिकः। चेला—उत्तरीयम् ('दुपट्टा' इति प्रसिद्धम्)। चिल्लति—शिथिलो भवति। चिल्लः—वृक्षः।

२४६. मल मल्ल कल कल्ल धारणे—घर्षणे। मलति—घर्षति। मलम्—विष्ठा। मला—वनम्। मलिनम्—('मैला' इति प्रसिद्धम्)। माला, माल्यम्—(प्रसिद्धम्)। मालेयम्—(?)। मल्लति—रं घर्षति (झगड़ता है)। मल्लः—(प्रसिद्धः)। मल्लिका—एतन्नाम्नी लता। कलति—मन्थति। कललम्—मन्थनम्। कलिः—एतन्नामा युगविशेषः। कलुषम्—पापम्। कल्मषम्—पापम्। कालः—समयः। कलना—समुद्रः। काली—पार्वती। कल्कम्—क्षुद्रं द्रव्यम्। कलापम्—

---

१. फलधातुः पूर्वम् (सूत्र २३१) अपि पठ्यते।

२. कातन्त्रे 'द्रावकरणे' इति पाठः। अयमेव साधु प्रतीयते। पाणिनीये—'हावकरणे' इति क्षीरस्वामी मैत्रेयश्च, 'भावकरणे' इति सायणः।

३. धातुसूत्रे चुल चुल्ल इति विपर्यासेन पाठः।

भूषणम् । कलकलः—कलकलरवः । कल्—पाषाणम् । कल्लति—सहते । कल्लः—सहनम् । कल्लिः—जालः । कल्याणम्[1]—विवाहः । कल्यम्[1]—कल्याणम् । कल्ली—(?) ।

२४७. वेल्ल चेल्ल छेल्ल केल्ल खेल्ल कैल्ल खैल्ल फौल्ल खौल्ल क्वेल्ल ख्लेल्ल ह्वेल्ल हेल्ल पेल्ल फेल्ल सेल्ल येल्ल[2] शल शल्ल भल भल्ल वल वल्ल गल गल्ल तिल तिल्ल भिल भिल्ल इल इल्ल विल विल्ल रल रल्ल पुल पुल्ल चुल चुल्ल चूल्ल गतौ—वेल्लति— व्यत्येति । वेला—समयः । वेल्लु—हस्ताभरणम् । चेलति—चलति । चेलनम्—चलनम् । केलति[1]—क्रीडति । केलिः—क्रीडा । केलुः—अङ्गुलिः । खेलति—क्रीडति नृत्यति । खेला—विलासः । खेल्लिता—क्रीडिता । क्वेलति—लिखति । क्वेल्लिता— लेखकः । ख्वेलति—भ्रमति । ख्वेला—संचरणम् । ह्वेलति— भ्रमति । ह्वेला—भ्रमणम् । ह्वेलुः—मलम् अशुचि । प्रहेलिका—( कहावत, बुझावत, पहेली नाम्ना प्रसिद्धा ) । हेलति—भ्रमति । हेला-भ्रमणम् । पेलति—अक्षैर्दीव्यति । पेला—द्यूतम् । पेल्लिता—द्यूतक्रीडकः । फेलति—नृत्यति । फेलकः—नर्तकः । फेलिः—नृत्यम् । सेलति—श्लिष्यति ( श्लेष्मद्रव्येण परस्परं संश्लिष्यति ) सेलुः—( श्लेष्मद्रव्यम् ) । याल्लति एलति[3]—विस्तरितो भवति । याल्ला एला—'इलायची' इति प्रसिद्धं द्रव्यम् । शलति—स्थिरो भवति । शाला—घरः[4] । शलभम्—एतन्नामा कीटविशेषः । शल्यम्—शस्त्राद्याघातः । शाली—धान्यम् । सलिलम्—[5] जलम् । शलाका—( छड़ी ? ) । शल्लति—(?) । शल्ला शल्लूकः । भलति—विकर्तयति । भल्लूकः, भालः—फालः । भल्लति— ( हिंसयति ) । भल्लूकः—ऋक्षः । भल्ला—शूलम् ( 'भाला' इति प्रसिद्धम् ) । वलति—मारयति । वलः[6]—राक्ष[स]ः ।

---

१. कल्ल प्रसङ्गे कलधातोः कृदन्तनिर्देशः कथम् ?

२. उत्तरत्र व्याख्याने "याल्लति एलति याल्ला एला" इत्यादीनि रूपाणि निर्दशितानि । तदनुसारमत्र—'याल्ल एल्ल' इत्येवं पठितं भाव्यम् ।

३. धातुसूत्रे 'सेल्ल' धातोरनन्तरम् 'येल्ल' इत्येव पठ्यते । अत्र व्याख्याने तु 'याल्ल एल्ल द्वौ धातू निर्दिष्टौ ।

४. गृहपर्यायः 'घर' शब्दः दशपाद्युणादौ 'हन्तेरन् घ च' ( ८।१०४ ) इति सूत्रेण व्युत्पाद्यते । अतः साधुशब्दोऽयं न त्वपभ्रंशः ( द्र० सं० व्या० शास्त्र का इतिहास, भाग १, पृष्ठ ४६, ४७ ।

५. तालव्य शकारवतो धातोः दन्त्यसकारवत् सलिलं रूपं कथम् ?

६. वेदे रक्षोवाचको दन्त्योष्ठ्यवान् 'वल' शब्दः, न त्वोष्ठ्यवान् । एवमग्रे प्रयुक्तः 'वलाहक' इत्यत्रापि दन्त्योष्ठ्य एव वकारो न पवर्गीयः । वबयोः सांकर्यमत्र धातुपाठे इति पूर्वमप्युक्तम् ( पृष्ठ २३, टि० १) ।

बलिः—राक्षसः। बालः—कुमारः। बालकः—बालः। बाला—बालिका, कदली। बलिष्ठः, बलूलः— बलवान्। बलाहकः[1]—मेघः। बल्लति—धारित। बल्लालः—राजा। गळति—निगरति। गळः, गाळम्—मत्स्यनिग्रहणे प्रयुज्यमानं कण्टकम्। गळा—वंशः। गळका—गोः खुरः। गळकम्—कण्ठ उन्नतमस्थि ( घेंटु इति भाषायां प्रसिद्धम् )। गल्लति—क्रोधेन दन्तैरधरं दशति। गल्लम्—श्मश्रु। गल्ला—( ? )। तेलति—स्निग्धो भवति। तिलः—एतन्नामा धान्यविशेषः। तैलम्—स्नेहः 'तेल' इत्येवं प्रसिद्धः। तिलकम्—चन्दनाद्यनुलेपनम्। तिलकः—वृक्षविशेषः। तिल्लति—प्रकाशितो भवति। तिल्ला—ज्योतिर्लता।[2] एलति—सहते। इला—पृथिवी। इल्लति—संयोजयति। इल्ला—धान्यकरी भूमिः। वेलति—धावति ( शोधयति )। बिलम्—छिद्रम्। बिल्—धनुः। बिल्लति—इषुं प्रक्षिपति। बिल्लः—धनुर्धारी। बिल्लुः—धनुः। भेलति—छेदयति। भिलम्—छेदनम्। भिल्लति—क्षिपति। भिल्लः—व्याधः। भीलति—भीषयति। भीलः—भयम्। अलति[3]—प्रसृतो भवति। आलः—वटवृक्षः। अलम्—पर्याप्तम्। अलसः—प्रमादी। आलः—घातः। अलिः—भ्रमरः। अलका—केशाः। अळिका—फालः। अळीकम्—विषयः (?, मिथ्या। अलका—अलकापुरी। अल्लति[2]—मुक्तो भवति। अल्लः—शिवः। अल्ला—गौरी। अल्लम्—शृङ्गवेरम् ( अदरकनाम्ना प्रसिद्धम् )। पोलति—निर्मापयति। पुलहः— ब्रह्मणः पुत्रः। पुलस्त्यः—ब्रह्मणः पुत्रः। पुलुः—क्रीडा। पुल—तृणम्। पोलः—अलसः। पोलुः—अलसः। पोली—अलसा स्त्री। पुलिः, पुळिः—अम्लम्। पुलिन्—सिकता। फुल्लति—अङ्कुरितो भवति। फुल्ला—तृणम्। फुल्लः—चित्रवर्णः।[4]

२४८. खल खल्ल पिल पिल्ल पील पिपील जल जल्ल पिपल पिप्पल चलने— भ्रमणे। खलति—भ्रमति। खलः—भ्रमणशीलः। खलम्—'खलिहान' इति प्रसिद्धम्। खलिः—चूर्णम्। खलकः—नीचः। खल्—संचारः। खलु—निश्चयः। खलपूः—कृषकः। शृंखला—प्रसिद्धैव। खल्लति—भ्रमति। खल्लः—प्रकोटः ( 'चारदिवारी' इति प्रसिद्धा )। खल्लनं—श्रेणिः। पेलति—प्रयाति। पिल्, पिलः, पेलः, पेलुः, पिलिः, पैलम्—( गतिशीलः ? )। पैलादिः—व्यासशिष्यः। पिल्लति—विवदते। पिल्लः[5]—वत्सः। पिल्ला—वत्सा। पिल्लिः—नूपुरम् स्त्रीणां

---

१. द्रष्टव्या पूर्वपृष्ठस्य टि० ६।

२. धातुसूत्रे 'तिल भिल भिल्ल इल इल्ल' इत्येवं पूर्वापरीभूतः पाठः।

३. धातुसूत्रे 'रल रल्ल' धातू पठ्येते, न तु 'अल अल्ल'।

४. इतोऽग्रे धातुसूत्रे पठिताः 'पुल पुल्ल बुल' इति त्रयो धातवो न व्याख्याताः।

५ हिन्दी भाषायां 'पिल्ला' इति कुक्कुराणां बाल उच्यते।

पादाङ्गुलिभूषणम् । पीलति–गच्छति । पिलू, पीलः, पीलुः, पीलिः, पीला, पीलालः–प्राणिविशेषनामानि । पिपीलति–उदयं गच्छति । पिपीलिका–'च्यूंटी' नाम्ना प्रसिद्धः क्षुद्रप्राणिः । जलति–वाष्पं उच्चैर्गच्छति । जलम्–औष्ण्यम् । जाळम्–वाष्पः । जाळन्ध्रः–गवाक्षः । जळी–उपरितना ग्रन्थी । जल्लति–प्रवहति । जल्लडिः, जल्लाडिः, जल्लरिः–नदीधारा । जल्लः–यष्टिका । पिपलति–कार्यमारभते । पिपलम्–भाटकम् । पिप्पलति–भृत्यत्वं स्वीकरोति ( मजदूरी करता है )। पिप्पलम्–वेतनम् । पिप्पलादः–भृत्यः, एतन्नामा मुनिर्वा ।

२४९. स्खल स्खल्ल चंचले[1] च–भ्रान्तौ भ्रमणे च । स्खलति–पतति ( फिसलता है )। स्खलनम्–पतनम् ( फिसलना )। स्खलिता–पतिता । स्खलितम्–पतितम् । स्खलितव्यम्–पतितव्यम् । स्खलनीयम्–पतितुं योग्यम् । स्खलिः ( ? ) । स्खल्लति स्खल्लिता स्खल्लनम् स्खाल्लिः स्खल्लितम् स्खल्लितव्यम् स्खल्लनीयम् ।

२५०. गिल गिल्ल गील गुल गुल्ल गूल चिल चिल्ल चील जिल जिल्ल जील छिल छिल्ल छील णल णल्ल णिल णिल्ल णील[2] झिल झल्ल (?, झिल्ल) झील[3] टल टल्ल ठल ठल्ल डल डल्ल ढल ढल्ल अदने–भक्षणे । गेलति–निगरति । गिलः–निगरिता । गिलनम्–निगरणम् । गिलिः–शुकः । गिलति–लिह्यति । गिल्लः–लेहकः । गिल्लनम्–लेहनम् । गिल्लितम्–लीढं द्रव्यम् । गिल्लितव्यम्–लेढव्यम् । गिल्लनीयम्–लेढुं योग्यम् । गीलति–निगरति । गीलः–निगरिता । गीलिः–निगरणम् । गीलुः–मुखस्थं द्रवम् ( जलम् ) । गोलति–निगरति । गुळम्–गुडम् । गुळः–दन्तः । गुळिका–सकृत् मुखे ग्रहीतुं योग्यं द्रव्यम् (कौर इति भाषायाम्) । आगुलिका–जम्भा । गुल्लति–अत्ति । गुल्ला–बुद्बुदः । गुल्लिः–जले भूमौ चोभयत्रवासी मत्स्यविशेषः । गुल्लिका–जलजः सर्पः । गूलति–भक्षति । गूलम्–गुडम् । गूलिः–बलीवर्दः । चेलति–कृन्तति । चिलः–कृन्तकः । चिल्–कृन्तकः । चिलिः–( घुंघराले केश )। चिल्लति–फूत्करोति । चिल्लः–मक्षिका । चिल्लः–वृक्षः । चिल्ला–चिल्लवृक्षजो मदः । चिल्लिः–छिद्रम् । चीलति–भरति । चीलः–वस्त्रनिर्मिता कोथली ( थैली ) । चीलिः–सैव । जेलति–पिबति । जिलालः–मत्कुणः । जिलिः ( ? ) । जिल्लति–श्च्योतति ( पात्ररन्ध्रात् जलादि

---

१. 'संचये च' इति कातन्त्रधातुपाठे ।

२. व्याख्याने 'णिल णिल्ल णील' इति धातुत्रयम् 'ढल्ल' धातोरग्रे व्याख्यायन्ते ।

३. व्याख्याने 'झिल झिल्ल झील' इत्येतेषां स्थाने 'जिल जिल्ल जील' इत्येवं व्याख्यायन्ते, एतेऽस्मिन्नेवसूत्रे पूर्वं पठिता एव, अतोऽपपाठः ।

क्षरति )। जिह्नि जिह्नरिः—छिद्रम्। जीलति—दन्तैरन्नादिकं पिंषयति ( चबाता है )। जीलः—पेषकः। जीलिः—( सेव बनाने का यन्त्र )। छेलति—गृह्णाति। छिलः—संदंशिका (संडासी इति भाषायाम्)। छिलिः—षष्टिकाया अवरं पाषाणम्। छिह्नति—विभजति। छिह्नः—विभागः। छिह्निः—दर्पणम्। छीलति—आकर्षति। छीलः—सर्पः। छीलिका—सर्पाणां राशी।[1] जेलति[2]—जगाति। जिला—कौशेयवस्त्रे रजततारकार्यम् ( 'जरी' इति भाषायाम् )। जिह्नति—कम्पयति। जिह्नः—व्याघ्रकः। जिह्निः—पक्षी। जीलति[2]—शरीरान्तर्गताहारस्य पुनः दन्तैः पेषणं ( 'जुगाली' ) करोति। जीलः—वर्करः। टलति—चरति। टलः—( ? )। टह्नति—चिनोति। टह्नः—यष्टिका। ठलति—खनति। टलः—वन्यो मृगविशेषः। ठह्नति—( ? )। ठह्नः—वन्यमृगः। डलति—विभजते। डलः डालः—विकासनाम्नी। पदा डलति पङ्गुलिः—भ्रमरः। डह्नति—पदा ताडयति। डह्नः—विकासः। ढलति—जलं गड़गड़ध्वनिसहितं पिबति। ढलः—जलजः पक्षी। ढह्नति—कम्पयति। ढह्नः—जलजः काकः। नळति [3]—नाड्या जलमायाति। नळः—एतन्नामा राजा। अनलः—अग्निः। नाळम्—छिद्रम्। नाळः—नलम्। नळिनम्—कमलम्। नलिनी—कमलनाडी। नाळिका—(?)। नळिः—त्रोटनम्। नह्नति—स्पृहयते। नह्नः—सखा। नह्निः—त्रिगुणी। नेळति—जृम्भते गण्डूषं वा करोति। निलः—जृम्भणम्, गण्डूषकरणम्। अनिलः—पवनः। निह्नति—चुम्बते। निह्नः—चुम्बकः। निह्निः—आमलकीवृक्षः।

२५१. स्खल स्खल्ल आशुगतौ—शीघ्रचलने। स्खलति—शीघ्रं गच्छति। स्खलः—झञ्झावातः। स्खालम्—मनः। स्खह्नति—जले निमज्जति। स्खह्नः—निमज्जनीयं जलम्।

२५२. कोल्ल खोल्ल गतिप्रतिघाते—(गमनावरोधे-चलने की रुकावट में)। कोलति—निरुणद्धि। कोलः—पादबन्धनी रज्जुः, राक्षसो वा। कोलिः—पक्षीविशेषः। कोलुः—बन्धनम्। कोलाहलः—संघातरवः। खोलति—रुणद्धि। खोला—शृंखला।

२५३. दोल्ल धोल्ल डोल्ल ढोल्ल गतिचातुर्ये—गतिप्रावीण्ये। आन्दोलति—सर्वत्र लम्बते। आन्दोलम्—शिबिका ( पालकीति भाषायाम् )। धोलति—

---

१. इतोऽग्रे धातुसूत्रे पठ्यमानाः 'णिल णिल्ल णील' इत्येते धातवो 'ढल्ल' धातोरग्रे व्याख्यायन्ते।

२. धातुसूत्रे झिल झिल्ल झील इत्येवं पठ्यन्तेऽतस्तेषां 'झेलति झिल्लति झीलति' इत्येवमादीनि रूपाणि द्रष्टव्यानि।

३. इत आरभ्य व्याख्यायमाना धातवो धातुसूत्रे 'छील' धातोरनन्तरं पठ्यन्ते।

कम्पते। घोलः—तोरणम्। डोलति—लम्बते। डोला—'झूला' इति भाषायाम्। डोलुः—ढोलः (वाद्यविशेषः)। दोलति—क्रीडति। दोला—(?)।

२५४. त्सर छद्मगतौ—कुटिलगतौ। [त्सरति—कुटिलं गच्छति]। त्सरुः—छुरिका।

२५५. कमर हूर्चने (?; हूर्च्छने)—कृत्रिमे। कमरति—कृत्रिमं करोति (?)। कमरः—कृत्रिमकः।

२५६. अभ्र वभ्र मभ्र चव रव धवु गतौ—चलने। अभ्रति—भ्रमति। अभ्रम्—मेघः। वभ्रति—विवदते। वभ्रम्—विवादः। मभ्रति—अङ्गुष्ठं करोति (अङ्गुष्ठेन चिह्नयति)। मभ्रम्—अङ्गुष्ठम्। चवति—पीडां निवर्तयति। चविः—मूलिका, ओषधिः। रवति—प्रकाशते। रविः—सूर्यः। धवति—शास्ति। धवः—राजा।

२५७. ष्ठीवु क्षीवु निरसने—निष्ठीवने। ष्ठीवति—ष्ठीवनं करोति (थूत्करोति)। ष्ठीवः—थूत्कर्ता। निष्ठीवनम्—थूत्करणम्।

२५८. जी (?, जि) जये—विजये। जयति—विजयते। जयः—विजयः। जितम्—विजितम्। जेता—विजेता।

२५९. जीव प्राणधारणे—प्राणनक्रियायाम्। जीवति—प्राणिति। जीवः—प्राणः। जीविः—प्राणिः। जीवितम्—वेतनम्।

२६०. पीव मीव तीव णीव धीव स्थौल्ये—स्थूलीभावे। मीवति—स्थूलो भवति। मीवः—स्थूलः। पीवति—स्थूलो भवति। पीवः, पीवरः—स्थूलार्थे पुँल्लिङ्गौ। तीवति—फूत्करोति। तीवः, तीवनः (?; तीवरः)—स्थूलो मनुष्यः। नीवति—श्वयते। नीवनः (?, नीवः) नीवरः—श्वयथुः। धीवति—छिद्रं करोति। धीवः, धीवरः—देवरः।

२६१. उर्वी तुर्वी घुर्वी[1] दुर्वी धुर्वी हिंसायाम्—उर्वति[2]—सहते। उर्वी—

---

१. अन्यधातुपाठानुसारमत्र 'थुर्वी, थुर्वति, थुर्वकः' इति पाठा युक्ताः स्युः। यद्वा हिन्दी-भाषायां प्रयुज्यमाना 'घूरना' क्रियाऽस्या एव घुर्वतेरपभ्रंशः स्यात्। तथा सति 'घुर्वी, घुर्वति, घुर्वकः' पाठा एव युक्ता स्युः।

२ 'उर्वति, तुर्वति, घुर्वति, दुर्वति,' उत्तरसूत्रयोः (२६२, २६४) च 'मुर्वति, गुर्वति' इत्यत्र, एतेषां कृदन्तविकारेषु च (दूर्वाशब्दं वर्जयित्वा) कथं दीर्घाभाव इति न विज्ञायते। 'र्वोरुपधाया दीर्घ इकः' (८।२।७६) इति पाणिनीयेन लक्षणेन दीर्घत्वं प्राप्नोति। यद्वा 'दूर्वा, धूर्वति, धूर्वः' इत्यादिषु कथं दीर्घत्वमिति न प्रकटीकृतं टीकाकृता।

पृथिवी। तुर्वति–कण्डूयति, क्षतं वा करोति। तुर्वा–तृणविशेषः। घुर्वति[1]–निकृन्तति। घुर्वकः–सिंहः। दुर्वति–पीडां निवारयति। दूर्वा–तृणविशेषः ('दूब' इति भाषायाम्)। धूर्वति–देवः कुप्यति। धूर्वः–दूर्वा, कुशः।

२६२. मुर्वी मू मव बन्धने—मुर्वति–बध्नाति। मूर्वः–बन्धनम्। मवति–बध्नाति। मूतम्–'पुड़िया' इति भाषायां प्रसिद्धम्। मवति–विदधाति। मवनम्–विधानम्, क्रमः।

२६३. कीवृ तीवृ तेवृ तेमृ रुजायाम्—रोगे। कीवति–('मवाद पड़ता है' इति भाषायाम्)। कीवम्, कीवनम्, कीवु–'मवाद' इति भाषायां प्रसिद्धम्, दूषितं रक्तम्। तेवति–रिक्तो भवति। तेवनम्–रेचनम्। तेमति–कटुरसो (तीता) भवति। तेवनम्, तेवम्, तेमु, तेमि, तेमितम्–कटुरसः (तीता–चरपरा इति भाषायाम्।

२६४. गुर्वि (?, गुर्वी) उद्यमे—उद्योगे। गुर्वति–कार्यं करोति। गुर्वः–उद्योग कर्ता। गुर्वणम्–कामः। गुर्वा–कर्मकराः। गुर्वकः–कर्मकरः।

२६५. पूर्व पर्व मर्व पूरणे—भरणक्रियायाम्। पूर्वति–भरति। पूर्वम्–प्रथमम्। पर्वति–प्रथते। पर्व–उत्सवदिनम् (त्योहार इति भाषायाम्), अङ्गुल्यादीनामस्थिसन्धिः। पर्वतः–अचलः। पार्वणः–पर्वदिनम्। मर्वति–भरति। मर्वः–भरणम्, पूरणम्, भक्ष्यविशेषो वा। मर्वः–विस्तारः।

२६६. चर्व अदने—भक्षणे। चर्वति–भक्षति। चर्वः–भक्षकः। चर्वणम्–भक्ष्यम्।

२६७. चिर्व[1]–रुजायाम्—रोगे। चिर्वति–पीडा भवति। चिर्वणम्, चिर्वम्, चिर्वु, चिर्वि, एते चत्वारः पीडायाम्। चिर्वुलम्–आच्छादनम्। चिर्वा–(?)।

२६८. कर्वं[1] खर्वं गर्वं घर्वं दर्पे—अभिमाने। कर्वति–गर्वं करोति। कर्वुरः रागविशेषः, निर्ऋतिः। कर्वम् कर्वणम्, कर्वु, कर्वि–चत्वारो गर्वे। खर्वति–अहंकारं करोति। खर्वुरः–निर्ऋति, रागविशेषः। खर्वम्, खर्वणम्, खर्वु, खर्वि–चत्वारोऽहङ्कारे। गर्वति–शोभते। गर्वुरः–कविः। गर्वम्, गर्वणम्, गर्वु, गर्वि–चत्वारः स्वाभिमाने। घर्वति–मिश्रतो भवति। घर्वुरः–यमः। घर्वम्, घर्वणम्, घर्वु, घर्वि–चत्वाराः स्वाभिमाने।

---

१. दन्त्योष्ठ्य प्रकरणेऽत्र सर्वत्र कथं पवर्गीयः पाठ इति न ज्ञायते। वयं तु पश्यामः लेखकप्रमादकृतोऽयं दोषः स्यात्। अत्र २३ पृष्ठस्था टिप्पणी द्रष्टव्या।

२६९. पिवि मिवि णिवि सेचने—पिन्वति[1]—बीजं वपते। पिन्वः—कृषकः। पिव्वनम्[2], पिव्वु, पिव्वि—प्रकाशः। मिन्वति—सिञ्चति। मिव्वः[2] मिव्वनम् मिव्वु मिव्वि—जलावरोधे। निन्वति—बिन्दुं त्यजति। निव्वः[2]—बिन्दुसेचकः। निव्वनम्, निव्वु, निव्वि—बिन्दुपाते।

२७०. हिवि दिवि जिवि प्रीणने—शीतीभावे। हिन्वति—शीतीकरोति। हिव्वः[3]—शीतीकर्ता। हिव्वनम्, हिव्वु, हिव्वि—त्रयः शीतीभावे। दिन्वति—नृत्यति। दिव्वः[3]—नृत्यकर्ता। दिव्वनम्, दिव्वु, दिव्वि—त्रयो नृत्ये। जिन्वति—रोचते। जिव्वः[3]—रोचकः। जिव्वनम् जिव्वु जिव्वि—त्रयः प्रिये।

२७१. अव रक्ष पालने—अवति—पालयति। अवकः—रक्षकः। अवनिः—पृथिवी। अवन्ती अवन्तिका—द्वे उज्जयिन्या नाम्नी। अविः—'भेड़' इति भाषायाम्। अवुः—प्राणिविशेषः। अवनम्—रक्षणम्। आवुः—गौः। आवुकम्—(?)। आवुः—रक्षकः। आवी—रक्षिका। अविनी—रक्षिका। रक्षति—त्रायते। रक्षकः—त्रायकः। रक्षः—राक्षसः। रक्षा—पालनम्, विभूतिः। राक्षसः—रक्षः। राक्षसी—रक्षःपत्नी।

२७२. इवि व्याप्तौ—इन्वति—व्याप्नोति। इव्वः[4]—व्यापकः। इव्वनम्, इव्वि, इव्वु—त्रीणि व्याप्तौ।

२७३. अक्षु संघाते च—चाद् व्याप्तौ च। अक्षति—व्याप्नोति। अक्षः—इन्द्रियम्। अक्षि—नेत्रम्।

२७४. घुषिर् शब्दे—ध्वनौ। घोषति—शब्दयति। घोषः—पशुपालकानां ग्रामः। घोषणम्—ध्वनिः (उच्चैर्ध्वनिना विज्ञापनम्)।

२७५. तक्षु त्वक्षु तनूकरणे—तक्षति—तक्षणं करोति। तक्षन्—तक्षणकर्ता। तक्षकः—सर्पविशेषः। त्वक्षति—तक्षणं करोति। त्वक्षन्—तक्षणकर्ता।

---

१. अत्र 'पिंवति मिंवति निंवति' इत्यादिषु वृत्तिपाठेऽनुस्वारनिर्देशश्चिन्त्यः। एवमुत्तरत्रापि।

२. अत्र 'पिव्वनम्' आदि कृदन्तेषु नुमाभावो वकारस्य द्वित्वं च कथमिति न ज्ञायते। वयं तु पश्यामः, अत्र सर्वत्र पिन्वति पिन्वः पिन्वनम् पिन्वु पिन्वि, मिन्वति मिन्वः मिन्वनम् मिन्वु मिन्वि, निन्वति निन्वः निन्वनम् निन्वु निन्वि इत्यादयो यथार्थं शुद्धाः पाठाः स्युः, लेखकप्रमादादेव नकारस्यानुस्वारत्वं वत्वं च समपद्यत इति। एवमुत्तरधातुसूत्रोदाहरणेष्वपि ज्ञेयम्।

३. हिव्व आदिविषये एतत् पृष्ठस्था द्वितीया टिप्पणी द्रष्टव्या।

४. अत्रापि 'इव्वा' आदिविषये द्वितीया टिप्पणी द्रष्टव्या।

२७६. णिक्ष चुम्बने—निक्षति–चुम्बयति। निक्षः–चुम्बकः।

२७७. तृक्ष स्तृक्ष णक्ष गतौ—गमने। तृक्षति–चलति। तृक्षकः–गन्ता। स्तृक्षति–गच्छति। स्तृक्षकः–गन्ता। नक्षति–आयाति। नक्षकः–आगन्ता।

२७८. वक्ष रोषे—क्रोधे। वक्षति–कुप्यति। वक्षः–उरः।

२७९. मुक्ष संघाते—मुक्षति–संघीभवति। मुक्षः–संघः।

२८०. तक्ष वचने—तक्षति–वदति। तक्षः–वदिता।

२८१. सूर्क्ष अनादरे—निरादरेऽप्रीतौ वा। सूर्क्षति–अप्रियो भवति। सूर्क्षः–अप्रियः।

२८२. काक्षि वाक्षि माक्षि काङ्क्षायाम्—इच्छायाम्। काङ्क्षति–इच्छति। काङ्क्षा–इच्छा। वाङ्क्षति–इच्छति। वाङ्क्षा–इच्छा। माङ्क्षति–इच्छति। माङ्क्षा–इच्छा।

२८३. द्राक्षि ध्राक्षि जाक्षि ध्वाक्षि घोरवासिते च—रौद्रभाषणे चात् काङ्क्षायां च। द्राङ्क्षति–कठोरभाषणं करोति। द्राङ्क्षः–काकः। ध्राङ्क्षति–कटुशब्दयति। ध्राङ्क्षः–(?)। जङ्क्षति[1]–अस्पष्टं भाषते। जक्षः[2]–पक्षिविशेषः। ध्वाङ्क्षति–घोरं ध्वनति। ध्वाङ्क्षः–जटायुः[3]।

२८४. चुप पाने—पानक्रियायाम्। चुपादेर्दीर्घः[4]–चुप इत्येवमादीनां धातूनां [ उपधाया ] दीर्घो भवति सार्वधातुके परतः। चूपति–पिबति। चोपकः[4]–पानकर्ता। चोप्यम्–पातुं योग्यम्।

२८५. तुप तुष्टौ—तृप्तौ। तूपति–तृप्तो भवति, आनन्दितो वा। तोपः–संतोषः। तुप्तिः[5]–संतोषः। तुप्यम्–संतोषयितुं योग्यम्। तोपा–आनन्दः।

२८६. पुप वृद्धौ—पूपति–वर्धते। पोपः–वृद्धिशीलः। पोपकः–वर्धकः। पोपणम्–रक्षणम्। पुप्यम्–रक्षितम्। पुप्तिः–रक्षा। पूपः[6]–सूर्यः।

---

१ धातुसूत्रानुसारमिह 'जाङ्क्षति' रूपं शुद्धं स्यात्।

२. धातुसूत्रानुसार 'जाङ्क्षः' इति शुद्धं रूपं द्रष्टव्यम्। 'जङ्क्षति' आख्यातानुसारं 'जङ्क्षः' इति। नुमाभावस्तूभयथा न संभवति।

३. जटायुस्तु गृध्र इति उच्यते। ध्वाङ्क्षः काकपर्यायत्वेन प्रसिद्धो लोके।

४. पाणिनीये धातुपाठे 'चूप तूप पूप मूप धूप' इत्येवं दीर्घोकारवन्त एव पठ्यन्ते। तेन कृदन्तप्रत्ययेषु गुणाभावात् 'चूपकः' इत्यादीनि रूपाणि सिद्ध्यन्ति।

५. 'तुप्तिः' इति पाणिनीये दैवादिकस्य ह्रस्वोपधस्य। एवमुत्तरत्रापि द्रष्टव्यम्।

६. अत्रासार्वधातुकेऽपि कथं दीर्घत्वम् इति न व्यक्तीकृतं कथउवृत्तिकृता।

२८७. मुप स्तेये—मूपति–चोरयति। मूपिकः[1]–'चूहा' इति प्रसिद्धः। मोपः–चुरा। मोषणम्–चौर्यगुणम्। मुष्टिः–बद्धाङ्गुलिः, ग्रहणम्। मुष्यम्–ग्रहीतुं योग्यम्।

२८८. पुप प्रसवे—प्रजनने। सूपति–प्रसूते। सुषा–स्नुषा (पुत्रवधूः)। सोषणम्–प्रसवः। सुष्यम्–प्रसूतम्। सुष्टिः–प्रसवः।

२८९. तसि भूप अलङ्कारे—शृङ्गारे। तंसति–अलङ्करोति। तंसः–आभरणम्। तंसनम्–अलङ्करणम्। तंसितम्–अलङ्कृतम्। भूपति–अलङ्करोति। भूष्यम्, भूषणम्, भूषा–शीर्षाभरणे। भूषितम्–अलङ्कृतम्।

२९०. उप ऊष[2] रुजायाम्—रोगे, पीडायां वा। उपति[3]–पीडयति। उपर्–(?)। उपर्बुधः–अग्निः। उपणम्–पीडा। उष्णः–घर्मः। ऊपति[4]–उष्णं करोति। ऊपः–'उबलना' इति भाषायां प्रसिद्धम्। ऊपरः–क्षारमृत्तिको देशः (ऊपर इत्येवं प्रसिद्धः)। ऊपरा–उष्णप्रदेशः। ऊषणम्–बाष्पम्।

२९१. इप ईप उञ्छे—इच्छायां परिचालने। इपति–परिचालयति। इषम्–इष्टार्थम्। इष्टम्[5]–इच्छा। इष्टिः[5]–यज्ञः। इष्टिका[5]–ईंट इति भाषायां प्रसिद्धा। ईपति–चर्वयति। ईपः–चर्वकः। ईपणम्–रुचिः। ईषा–यानचक्रे निहितं लोहकीलकम्।

२९२. कृप विलेखने—भूमिकर्पणे। कर्पति–हलेन भूमिं विलेखयति। कर्पः–विलेखनम्। कर्पणम्–आकर्पम्। कार्ष्यम्–लेखनम्। कृष्णः–कृषकः, कृष्णगुणः, विष्णुर्वा। कार्पा–पणम्, हलेनोत्पादिता भूलेखा।

---

१. अत्राप्यसार्वधातुके कथं दीर्घत्वमिति न व्यक्तीकृतम्। औणादिके 'मुपेर्दीर्घश्च' (३।४२) इति दीर्घत्वविधानं ह्रस्वोपधत्व एव घटते, न तु 'मूप' इति दीर्घोपधत्वे। क्वचादिकत्य ह्रस्वोपधस्यापि दीर्घविधानमकिञ्चित्करं 'मूप' इत्यनेनैव सिद्धत्वात्।

२. 'उप ऊष' इति धातुद्वयस्य पाठात् चुपादयः चूपादयश्च उभयथा विभिन्ना एव धातव इति सुव्यक्तम्। तत्र काशकृत्स्नेन चुपादयः पठिताः, पाणिनिना च चूपादयः।

३. 'उपति' इत्यत्र गुणाभावः कथमिति न ज्ञायते। एवं कृदन्तेष्वपि।

४. 'ऊपति' इत्येवमादीनि रूपाण्यग्रेऽपि प्रदर्श्यन्ते (द्र० १।२९९)। तत्र धातुसूत्रे तु 'ऊप' न पठ्यते, परं वृत्तौ व्याख्यायते।

५. पाणिनीयाः 'इष्टम्, इष्टिः, इष्टिका' इत्येवमादीन् यजधातोः सम्प्रसारणं कृत्वा साधयन्ति। वस्तुतः कृतसम्प्रसारणरूपाः 'इप वप उप' इत्यादयः, अकृतसम्प्रसारणाश्च 'यज वप वस' इत्यादयः स्वतन्त्रा एव धातवः। अत एवोक्तम् भगवता यास्केन—तद्यत्र स्वरादनन्तरान्तस्थान्तर्धातुर्भवति तद् द्विप्रकृतीनां स्थानमिति प्रदिशन्ति" (निरुक्त २।२)।

२९३. कष शिष जष झष वष मष रुष रिष युष यूष [ सजुष ][1] जुष जूष हिंसायाम्—कषति–मारयति । कषम्–मलिनम् । कषायः–रसविशेषः । काषायः–रागविशेषः, ओषधिरसः । कषिः–( ? ) । कष्टम्–दुःखम् । कषणम्–दुःखम् । कषाणम्–अवस्था स्थितिर्वा । काष्ठम्–दारु । काष्ठकम्–दारु । शेषति–अवशिष्यते । शिष्यः–अन्तेवासी । शिष्यकः–अनुकम्पितो निन्दितो वा शिष्यः । शेषः–सर्पः, अवशिष्टो भागः । शिष्टम्–अवशेषः । जषति–भक्षयति । जषः–मत्स्यः । जषिः–ग्रासः । जष्यम्–ग्रासः । जषणम्–दशनम् । झषति–भक्षयति, निगिरति । झषः–मत्स्यः । वषति–भक्षयति । वषिता–उदरम्भरिः ( पेटू इति भाषायाम् ) । वष्यम्–भक्षितम् । वषिः–खाद्यम् । मषति–दशति । मषकः–दंशः ( डांस मच्छर इति प्रसिद्धः ) । मषिः–कार्ष्ण्यम् । मष्यम्–अतिपक्वं फलम् । मषीतिः–युद्धालयः । मष्टिः–( ? ) । रोषति–विवदते । रोष्या–रोष्टा, विवदिता । रुट्–क्रोधः । रोषः–क्रोधः । रुषिः–क्रोधः । रुष्यम्–कलहितम् । रुषणम्[2]–( ? ) । रुषमः–अग्निः, वृषभः । रुष्टिः–रोटिका । रेषति–हिनस्ति । रेष्टा, रिषिः, रिषः । रेषः–श्लेष्मा । रेषणम्–हिंसनम् । योषति–हिनस्ति । योषा–स्त्री । योषित्–नारी । युष्टम्, युष्टिः, युषिः, योषणम्–विवादः । युष्मत्–( सर्वनाम ) । यूषति–मारयति । यूषिता–घातकः । यूषिः–घातककृत्यम् । यूष्टम्–मारितम् । यूषणम्–ताडनम् । यूषम्–( ? ) । सजोषति—मिश्रयति । सजोषस्–( ? ) सजोष्टा–मिश्रकः । सजुष्टम्–मिश्रितम् । सजोषः–सम्मेलनम् । सजुष्टिः–मिश्रणम् । सजुषिः–मिश्रणम् । सजुट्–मिश्रितो मानवः ( ? ) । जोषति–भक्षयति । जोष्टा–भक्षयिता । जुष्टम्–भक्षितम् । जुष्टिः–खाद्यम् । जोषः–खाद्यम् । जूषति–ददाति । जूषिता–समर्पकः । जूष्टम्–समर्पितम् । जूट्–लोहदण्डः । जूषिः–समर्पितम् । जूषः–भोजनम् । जूषणम्–आहारः ।

२९४. भष भर्त्सने—निन्दायाम् । भषति–गालिं ददाति, निन्दति[3] । भषिता–निन्दिका । भषकः–निन्दकः । भषणम्–निन्दा । भषितम्–निन्दितम् ।

२९५. जिषु विषु मिषु पृषु वृषु उक्ष सेचने—धर्षणे । जेषति–घर्षयति । जेष्टा–घर्षकः । जिष्ट्वा[4]–घर्षयित्वा । जेषित्वा[4]–घर्षयित्वा । नेषति–

---

१. अयं धातुरपठितोऽपि वृत्तौ 'यूष' धातोरनन्तरं व्याख्यातः, तदनन्तरं च 'जुष' इति ।

२. दीर्घत्वमत्रकथम् ? । 'रूसना' इत्यस्यैवापभ्रंशः ।

३. भषतिः श्वरवे प्रयुज्यते—श्वा भषति ।

४. उदित्त्वादिह क्त्वायामिड्विकल्पः । द्रष्टव्यम् 'उदनुबन्धादिट् वा' सूत्रम् ( पूर्वत्र १।२२३ वृत्तौ, पृष्ठ ३० )

सिंचति। नेषिता, नेष्टा[1], निषः[2], निषकः[2] निषुः[2]–एते पञ्च संघर्षयितृषु। निष्टम्–घर्षितम्। निषाणः–घर्षकः। वेषति–वपति (भूमौ)। वेष्टा, वेषिता, वेषकः, वेषः, वेषुः–पञ्चैते वप्तृषु। विषाणम्–शृङ्गम्। विषम्, विषः, विषिः–भूम्यन्तर्गतः कीटविशेषः। विष्टिः–बलम्। विष्टा–मलम्। मेषति–चालयति। मेषः–बर्करः (?, मेंढा इति प्रसिद्धः)। निमेषः, निमेषणम्, निमिषम्–त्रीणि चक्षुरुद्घाटने। मिष्टा, मिषिता, मिषाणः, मिषकः, मिषुकः,–एते पञ्च वप्तृषु (?)। पृषति[3]–वपति। पृषिता, पृष्टा, पृषन्, पृषाणः, पृषकः–एते पञ्च घर्षयितृषु। पृषत्–वर्णविशेषः (चितकबरा इति प्रसिद्धः)। पृष्टम्–उप्तम्। पृष्टिः–वपनम्। पृषिः, पृषुः, पार्षुः, पर्षणम्, पुपृषाणम्–एते पञ्च वपने। वर्षति–मेहति। वर्षा, वृष्टिः, वर्षम्–एते वर्षायाम्। वृषणम्–अण्डकोशः। वृषाणः–घर्षकः। वृष्टम्–सिंचितम्। वृट्, वृषिः, वृषा, वृषभः, वार्षुः, वर्षकः–एते पञ्च वप्तृषु (?)। उक्षति–वपति। उक्षा–वसा। उक्षितम्–उप्तम्। उक्षणम्–बीजम्। उक्षिता, उक्षाणः, उक्षकः, उक्षुः, ऊक्षु[4]–एते पञ्च वप्तृषु।

२९६. मृषु हसने[5] च—हर्षं, घर्षणे। मर्षति–हसति, घर्षयति। मर्षः–घर्षकः। अघमर्षणम्–पापनाशकम्। परामर्शः–विचारः, मन्त्रणा।

२९७. पषु पाषु दृषु धृषु धारणे—पषति–घर्षयति। पाषाणः[6]–अश्मा। पष्टम्–घृष्टम्। पषिः, पष्टिः, पषः, पषुः, पषणं, पषकम्–एते षट्[7] घर्षणे। पाषति–सहते। पाषाणः–अश्मा। पाषिः, पाषः, पाषुः, पाष्टिः, पाषणम्, पाषकम्–एते षट् सहने। दर्षति–वहति। दृषत्, दर्षाणः–एते द्वे पाषाणनाम्नी। दृषिः, दृषः, दृषु, दृष्टिः, दर्षणम्, दर्षकम्, दृट्–एते सप्त सहने। धर्षति–कर्षति। धर्षः, धर्षकः, धृष्णुः–त्रीणि आकर्षक[8]नामानि। धृषिः, धृष्टिः, धर्षणम्, धृषः, धृषुः, धृट्–एते कर्षणे।

---

१. अत्र उत्तरोदाहरणेषु च तृचि उदित्त्वादिट् विकल्पः (द्र० पृष्ठ ४३, टि० ४)।

२. 'निषः निषकः निषुः' इत्यत्र गुणाभाव उदाह्रियते, उत्तरत्र च 'वेषकः, वेषः, वेषुः' इत्यत्र गुणः। किमत्र नियामकमिति न विद्मः।

३. तिपि कृदन्तेषु च गुणाभावः कथमिति न ज्ञायते।

४. दीर्घत्वमत्र कथमिति न ज्ञायते।

५. पाणिनीयाः सहने इति पठन्ति।

६. पाषाणपदम् उत्तरधातोः पाषतेरपि साध्यते।

७. कन्नडटीकायाम् 'एते पञ्च' इत्येवं पठ्यते, षट् न तत्रोदाह्रियन्ते। उत्तरधातुकृदन्तोदाहरणेषु 'षट्' संख्या स्पष्टमुच्यते। ८. निकषः (कसौटी) इत्यर्थः।

२९८. पुषु पुष्टौ—धारणे। पोषति–पालयति। पोषकः–पालकः। पोषणम्, पोषाणम्, पुष्टिः, पुषिः, पुषः, पुषु–एते षट् धारणे पालने च।

२९९. श्रिषु श्लिषु प्रुषु प्लुषु [ ऊष ][1] दाहे—श्रेषति–दाहेन पीड्यते। श्रेषिता, श्रेष्टा, श्रेषकः, श्रेषः–एते चत्वारः दाहकर्तृषु। श्रेष्टम्–दाहेन तप्तम्। श्रिषिः, श्रिष्टिः, श्रिषः, श्रिषु, श्रयणम्, श्रयाणम्, श्रिट्–एते सप्त दहने। श्लेषति–सहते। श्लेषिता, श्लिष्टा[2] श्लेषकः–एते त्रय सोढृषु। श्लिट्, श्लिषिः, श्लिषुः, श्लिषः, श्लयनम्, श्लयानम्, श्लयत्–एते सप्त सहने। प्रोषति–द्रवीकरोति। प्रुषत्–द्रवम्। प्रुष्टम्–द्रवीकृतम्। प्रुष्टिः–द्रवम्। प्रुषिः, प्रुषकम्, प्रुषणम्, प्रुषाणम्–एते चत्वारो द्रवीभावे। प्लोषति–द्रवति। प्लोषिता, प्लुष्टा, प्लोषकः–त्रीणि द्रवीभूते। प्लुट्, प्लुष्टिः, प्लुषिः–एते त्रयो द्रवीभावे। ऊषति–वाष्पयति। ऊष्मा–वाष्पम्। ऊषरा–मरुप्रदेशः। उट्, उषिः, उष्यः, उष्टिः, ऊषत्, ऊषणम्, ऊषाणम्–एते सप्त वाष्पे।

३०० घृषु संघर्षे—घर्षति–संघर्षं करोति। घर्षकः, घर्षिका, घृष्टा[3] एते त्रयः संघर्षके। घृषिः घृष्टिः, घृषत्, घर्षणम्, घृषाणम्–एते पञ्च[4] आतपे सूकरे च। घृष्टम्–संघृष्टम्।

३०१. हृष अलीके—आनन्दे। हर्षति–आनन्दितो भवति। हर्षिता, हृष्टः, हृषकः–त्रयः संतोष्टरि। हृष्टम्–सन्तुष्टम्। हृष्टिः, हृषिः, हर्षः, हर्षणम्, हृषाणम्, हृषत्, हृट्–सप्त आनन्दे।

३०२. तुस ह्रस ह्लस रस शब्दे—ध्वनौ। तोसति–ध्वनयति। तोसकः–ध्वनयिता। तुसारः, तुसः, तुस्यः, तुस्ति, तुस्, तुसितम्–एते षट् अल्पे। ह्रसति–तनूभवति। ह्रस्वः–तनु लघु। ह्रसितम्, ह्रसिः, ह्रसः, ह्रस्, ह्रसु–पञ्चैते तनूभावे। ह्लसति–कठिनो भवति। ह्लसितम्, ह्लसः, ह्लसिः, ह्लसुः, ह्लस्–एते पञ्च काठिन्ये। रसति–रसयुक्तो भवति। रसः। रसना–जिह्वा। रासभः–

---

१. अयं धातुसूत्रे तु नोपलभ्यते, परं कशकृत्स्नवृत्तौ व्याख्यायते। धातुरयं १।२९० सूत्रेऽपि पठ्यते व्याख्यायते च।

२. बहुत्र तृचि गुणाभाव उदाह्रियते–यथा श्रिष्टा, प्लुष्टा, घृष्टा (१।३०० सूत्रे), बहुत्र च गुणः—यथाऽत्रैव श्रेष्टा इति। किमत्र तत्त्वमिति न जानीमः, काशकृत्स्नव्याकरणस्यानुपलम्भात्।

३. एतत् पृष्ठस्था द्वितीया टिप्पणी द्रष्टव्या।

४. 'त्रयः' इति कशकृत्स्नटीकायाम्।

गर्दभः। रासिमा–रसता। रसिकः–सहृदयः। रसालः–मधुरमाम्रम्। रसितम्, रसिः, रसुः, रसकम्, रसत्, रसानम्, रसायनम्, रस्–एतेऽष्टौ रसीभावे।

३०३. लस श्लेषणक्रीडनयोः—सहने (?) क्रीडने च। केल्यां लसति कउभ्याम् (?) शिवः शक्तिभिः क्रीडति कैलासः–रजतपर्वतः। लासतम्, लसिः, लसुः, लस्तिः, लसः, लसालम्, लसनम्–एते सप्त क्रीडने।

३०४. जर्च चर्च झर्झ छर्छ–परिभाषणतर्जनयोः—जर्चति–गप्पयति[1] (गप्पं वदति)। जर्चनम्–गप्पवदनम्। चर्चति–विमर्शयति। चर्चा, चर्चिका–विमर्शः, गौरी। झर्झति–झर्झरशब्दं करोति। झर्झरः–जलप्रवाहध्वनिः, 'ताली या सीटी बजाना' इति। छर्छति–बिभेति। छर्छा–भयम्। छर्छरः–अग्निः।

३०५. हस हसने—हसति। हासकः–हास्यकारः। हसः, हसनम्, हसिः, हसुः, हसितम्, हास्यम्–एते षट् हास्ये। अट्टहासः–उच्चैर्हासः। हसन्ती–हास्यकारी। हासङ्गी–नग्नः, मार्गः, चदरंग (?)। हासिका–विष्टरः, कान्तिश्च। चन्द्रहासः–चन्द्रिका, रावणस्य खड्गः। हसिः–अपद्मम्। हासुः–कटम्, तन्तु-निर्मिता स्थूला रज्जुः।

३०६. णिश समाधौ—तृषाशान्त्याम्। नेशति–तृपा न भवति (?)। निशा, निशीथिनी, निशुः–एतानि त्रीणि रात्रिनामानि। निशितम्, निशातम्, निशातनम्–इमानि त्रीणि तमोनामानि। निशाकरः, निशापतिः–एते द्वे चन्द्र-नाम्नि। नेशनम्–सूर्यः।

३०७. मिश मश शब्दे रोषे च—मेशति–ध्वनिं करोति। मेशः–भ्रमरः। मिक्, मिशिः, मिशः, मिशुकम्, मेशनम्, मेशानम्, मिशितम्–(?)। मशति–ध्वनति। मशकम्, मश्, मशितम्, मशिः, मशः, माशः, माशुः, मशु–एते-ऽष्टौ ध्वनौ।

३०८. शव शव पिसृ पेसृ गतौ। शवति–विकृतो भवति ('सड़ता है' इति भाषायाम्)। शवः–प्राणरहितं शरीरम्। शवृ (?), शविः, शवुः, शवितम्, शावम्, शावनम्, शवत्, शवानम्–एतेऽष्टौ विकारे। शवति–अग्रे गच्छति। शवरः–व्याधः। शवम्–शवः। शवरी–व्याधा। शावः–(?)। पेशति–त्वगति। पिशितम्–अङ्गारकम्। पिशङ्गम्–रक्तवर्णम्। पिशमश्नति (अङ्गारं भक्षयति)

१. धातुपाठेषु साक्षादपठितोऽपि 'बहुलमेतन्निदर्शनम्' इति सूत्रेण संगृह्यते। तथा-चोक्तं स्वामिदयानन्देन—'गप्‍ मिथ्यापरिभाषणे, तस्मात् पः प्रत्ययः गपयते (?, गप्पते) यच्चत् गप्पम्।' द्र. स्वामी दयानन्द सरस्वती के पत्र और विज्ञापन, पृष्ठ २।

पिशाचः, रेतः । पिशुनः—अपकारप्रयुक्तसूचनाप्रदायकः ( 'चुगली खानेवाला' इति भाषायाम् )। पैशुन्यम्—अपकारप्रयुक्तं सूचनम् । पिक्, पिशिः, पिशुः, पैश्यम्—एतानि पञ्चाङ्गारनामानि । पेशति—भरति । पेशलम्—भरणम् । पेशी—मासम् । पिक्, पेशनम्, पेशुः, पैश्यम्—एतानि चत्वारि अङ्कुरधारणे ।

३०९. शश प्लुतगतौ—कूर्दने । शशति—कूर्दति । शशः, शशकः—'खरगोश' भाषायां प्रसिद्धः । शशी—चन्द्रः । शक्, शांशः, शशितम्, शाश्यम्—एते पञ्च कूर्दने ।

३१०. शसु हिंसायाम्—विकर्तने । शसति—कृन्तति । शस्त्रम्—विकर्तनसाधनम् । शसिः, शसुः, शसितम्, शसनम्—एते चत्वारो विकर्तने । शसकः—विकर्तकः, घातकः ।

३११. शंसु स्तुतौ—शंसति—स्तौति । शंसकः—स्तावकः । शंसा, शंसनम्, शंसिः, शंसुः, शंसितम्—एते पञ्च स्तुतौ ।

३१२. मिह सेचने—वर्षणे । मेहति—वर्षति । हो ढः—धातोर्हकारस्य ढकारो भवति—'मिढ् तृ' । सतवर्गयोः शचवर्गयोगे शचवर्गौ—सकारस्य तवर्गस्य शकारचवर्गयोर्योगे शकारः चवर्गश्च भवति । [ षटवर्गयोगे षटवर्गौ—सकारस्य तवर्गस्य षकारटवर्गयोगे षकारः टवर्गश्च भवति ][1] 'मिढ् ढृ' । ढो ढे लोपः पूर्वस्य समानस्य दीर्घः—ढकारस्य ढकारपरे लोपो भवति, पूर्वस्य समानसंज्ञकस्य[2] च वर्णस्य दीर्घो भवति—'मीढृ' । नामिनो ( ?, नामिनो ) गुणः सार्वधातुकासार्वधातुकयोः—नामिसंज्ञकानां[3] गुणो भवति सार्वधातुके असार्वधातुके च परतः—'मेढृ' । 'मेढृ सि'—सेर्डा—सेः प्रथमैकवचनस्थाने डा आदेशो भवति 'मेढृ डा' अनुबन्धे स्वनादेर्लोपः[4] ( ? ) अनुबन्धे परतः अन्तस्तो ( ? ) लोपो भवति मेढ् आ =

---

१. कोष्ठान्तर्गतः पाठो कण्ठटीकायां नोपलभ्यते । विनाऽनेन सूत्रेणेह कार्यसिद्धिर्न भवति इत्यत ऊहितोऽयं पाठोऽस्माभिः ।

२. 'दश समानाः' इति कातन्त्रसूत्रेण ( १।१।३ ) अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ स्वराणां समानसंज्ञा भवति । प्रातिशाख्येषु क्वचित् दीर्घॡकारवर्जं नवानां समानसंज्ञा विधीयते, क्वचित् ऋकारस्य दीर्घप्रभेदमपि परित्यज्याष्टानामेव ।

३. अकारवर्जमन्ये स्वरा नामिसंज्ञका भवन्ति । द्र० स्वरोऽवर्णवर्जो नामी ( कातन्त्र १।१।७ ) ।

४. अस्य सूत्रस्य पाठो वृत्तिपाठश्चोभावपि अष्टौ । प्रक्रियानुसारं तु 'डा' आदेशस्य अनुबन्धलोपेऽनेन सूत्रेण अन्त्यस्य ऋकारस्य लोप इष्यत इति प्रतीयते । तुलना कार्या—डित्यभस्याप्यनुबन्धकरणसामर्थ्यात् इति पाणिनीयवचनेन सह । कातन्त्रे तु सि परतः ऋकारस्याकारादेशः सेश्च लोपो विधीयते ( द्र० २।१।७०,७१ ) ।

मेढा—परिभावकः ( दबाने वाला )। मेढः, मेहः, मेहनम्। मीढुस्—सेचकः। मीढुष्टमः—सेचकेषु श्रेष्ठः। मीढम्—घर्षकः। मीढ्वा—परिभूय। मिहिका—अवश्यायः।

२१३. मजि णजि भजि कजि जिजि कुजि पजि हुजि षजि कळजि हिंसागत्योः—हिंसायां गत्यां च। मञ्जति—हिनस्ति। मञ्जरः—बिडालः। मञ्जु—हिमम्। मञ्जुळम्—स्वादिष्टम्। मञ्जाडिः—मन्त्रविशेषः। मञ्जी—तृणम्। मञ्जीरम्—(?)। नञ्जति—विस्मरति, नाशयति। नञ्जम्, नञ्जु, नञ्जि, नञ्जनम्—चत्वारि विषे। नञ्जुळः—भूनागः। नञ्जडम्—मांसम्। भञ्जति—क्रीडति। प्रभञ्जनः—वायुः। सालभञ्जा, सालभञ्जिका—क्रीडनकम् (? क्रीडाविशेषः)। कञ्जति—कृन्तति। कञ्जरम्—यमस्यास्त्रम्। कञ्जम्—कमलम्। कञ्जी—दुग्धविशेषा (?)। जिञ्जति—कष्टायते। जिञ्जिरी—(?)। जिञ्जा, जिञ्जिका, जिञ्जि—त्रीणि लताविशेषे। कुञ्जति—प्रसरति। कुञ्जः, निकुञ्जः—कन्दरा। कुञ्जिः कुञ्जुः कुञ्जनम्—त्रीणी कुञ्जविशेषे। कुञ्जरः—हस्ती। पञ्जति—प्रकाशते। पञ्जुः—महादीपः ( बड़ा दीवा )। पञ्जरम्—गृहम्। हुञ्जति—पतति। हुञ्जा—कुक्कुटी। हुञ्जः—कुक्कुटः, सूक्ष्मं सूत्रम्। सञ्जति—सन्ध्या भवति। सञ्जा—तमः। सञ्जी—यवनिका (‘पड़दा’ इति भाषायाम्)। कळञ्जति—विस्मरति। कळञ्जः—भक्ष्यपशुविशेषः। कळञ्जा, कळञ्जिकारी—द्वे मद्ये। कळञ्जः—फलविशेषः।

२१४. दह भस्मीकरणे—दहति—दग्धं करोति। दहनम्—अग्निः। घक्, दग्धम्, दग्धि, दाहः—चत्वारि घर्मे ( तापे )। दहनम्—श्मशानम्।

२१५. चह चुह डह डिह डुह परिकल्कने—धौर्त्ये। चहति—धौर्त्यम् आचरति। चाहकः—धूर्तः। चहनम्, चग्लम्, चग्लिः (?), चाहः, चक्—एतानि पञ्च धौर्त्ये। चोहति—वञ्चयति। चोहः—बहुरूपः (‘बहुरूपिया’ इति भाषायाम्)। छक् (?, चुक्) चोहकः—द्वे सूचके। डोहति[1]—चर्म सीव्यति। डेहारः—चर्मसीवकः। ढक् (? डक्) डेहनम्—द्वे सीवने। डहुः—पुष्पविशेषः।

२१६. कुह गह गहि गुह गृह ष्णिह वह पिहि अह ष्णुह तुह कह जह हिंसागत्योः। कोहति—नाशयति। कोहळम्—शिरोवस्त्रम् ( टोपी इति प्रसिद्धम् ) कुहकः—वञ्चकः ( ऐन्द्रजालिकः )। कुहरम्—अवश्यायः। गहति—भीषयति। गहनम्—वनम्। गेहति—कम्पयति। गेहनम्—गम्भीरम्। गोहति—

१. धातुवृत्त्ये ‘डह डिह डुह’ त्रयो धातवः पठ्यन्ते। इह तु कस्यचित् किञ्चित् रूपम्, कस्यचिद् अपरं रूपम् इत्येवं मिश्रीकृतः पाठ उपलभ्यते।

गोपयति। गुहः—षण्मुखः। गुहा—कन्दरा। गुह्यम्—रहस्यम्। गुह्यकः—यक्षः। गूहति—सहते। गूहनम्—सहनम्। स्नेहति—लगति। स्नेहः—तैलम्। वहति—चलति (पवनचलनक्रिया)। बाहुः, बाहा—द्वे भुजायाम्। बहुः, बहुलम्—द्वे आधिक्ये। बहुलम्—कृष्णपक्षः। बहिर—बहिर्भावे। सिंहति—विदारयति। सिंहः[1]—वनराजः। सिंहळः—लङ्का। अहति—नाशयति। अहस्—दिनम्। अहिः—सर्पः। तोहति—शीतं करोति। तुहिनम्—हिमम्। तोहुः—व्याघ्रदृष्टिः। स्रोहति—पतति। स्नुहिः—(?)। कहति—शब्दयति। कहला—(?) जहति—प्रसरति। जाहरः—नगरम्।

३१७. रह त्यागे—रहति—त्यजति। रहस्—एकान्तः। राहुः—सुरासुरस्य शिरः। रहितः, राढा, राहकः—त्रयस्त्यक्तरि। रहणम्, रहिः, रहुः, राढम्, राढिः—एते पञ्च त्यागे।

३१८. रहि गतौ—रंहति—चलति। रंहस्, रंहणम्, रंहिः, रंहुः, रंहितम्, रण्ढम्, रण्ढिः—सप्तैते शीघ्रस्य वाचकाः। रण्ढा, रंहकः—द्वौ शीघ्रगमके।

---

१. हिंसेराद्यन्तवर्णव्यत्ययेन सिंह इति यास्कः (निरुक्ते ३।१८) पतञ्जलिश्च (महा० ३।१।१२३, अन्यत्रापि च)। नित्याः शब्दा इति चोभौ संगिराते। नित्येषु च शब्देषु वर्णव्यत्ययो न सम्भवति। तस्मादनयोः को वास्तविकोऽभिप्राय इति गवेषणीयम्। वयं तु पश्यामः—हिंसधातोराद्यन्तवर्णविपर्यये कृते यो लोकेऽप्रयुक्तः 'सिंह'धातुः सम्पद्यते तस्मात् सिंह इति पदं सिद्ध्यति। निरुक्तव्याकरणशास्त्रयोर्यत्र कुत्रापि वर्णलोपो वर्णागमो वर्णविपर्यय आदेशो वा विधीयते तत्र सर्वत्रापि धातुप्रातिपदिकयोस्तत्कार्यं कृत्वा यद् रूपं सम्पद्यते तस्माद् मूलभूतप्रकृतेः प्रत्ययो भवतीत्येवाभिप्रायः। प्रक्रिया चेयं नैरुक्तैर्वैयाकरणैश्च तत्रैवाश्रीयते यत्र कस्याश्चिन्मूलभूतायाः प्रकृतेः प्रयोगस्तस्मिन् काले लोकप्रयोगे नोपलभ्यते, तन्निष्पन्नाश्च शब्दाः कृदन्तास्तद्धितान्ता वा प्रयुज्यन्ते। तत्राचार्या अप्रयुज्यमानायाः प्रकृतेः शब्दतोऽर्थतश्च सदृशीं कांचिदपरां लोकप्रयुक्तां प्रकृतिमुपादाय तस्यां लोपागमविकारादीन् कृत्वा अप्रयुज्यमानाया मूलप्रकृतेः स्वरूपं निष्पाद्य तन्निष्पन्नानां शब्दानामन्वाख्यानं कुर्वते। इत्थं चैते आचार्या एकेनैव प्रयत्नेन लोकेऽप्रयुक्ताया लुप्ताया वा मूलभूतायाः प्रकृतेः स्वरूपम्, अप्रयोगाददृश्यमानं चार्थमन्वाचक्ष्य तन्निष्पन्नानां शब्दानां साधुत्वमपि ब्रुवते। सुरभारतीयमादिकाले शब्दतोऽर्थतश्चातिविशालाऽऽसीत्। उत्तरकालमस्या उत्तरोत्तरं ह्रासः समजनि। तेन केषांचिच्छब्दानां प्रकृतयो नष्टाः, कासांचिच्च प्रकृतीनां तन्निष्पन्नाः शब्दाः। तदेवमाकुलीभूतायां सुरभारत्यां तत्कालिकैर्वैयाकरणैर्लोपागमवर्णविकारादिप्रक्रियामाश्रित्य विद्यमानाभ्य एव प्रकृतिभ्यो लुप्तप्रकृतिकानां शब्दानां साधुत्वविज्ञापनायेयं व्यवस्था प्रवर्तिता। एतद्विषयेऽस्माभिः स्वीये 'संस्कृत व्याकरण शास्त्र का इतिहास' नाम्नो ग्रन्थस्य 'संस्कृत भाषा की प्रवृत्ति विकास और ह्रास' नाम्नि प्रथमाध्याये विस्तरेण प्रतिपादितम्, तत्रत एव द्रष्टव्यम्।

३१९. अहि कलुषे—मथने । अंहति–मथति । अंहस्, अंहिः, अंहनम्, अंहितम्–चत्वारि मन्थने ।

३२०. दृहि, बृहि, बृह, ब्रह्म[1] वृद्धौ—दृंहति–वर्धते । दृंहस्, दृंहिः, दृंहुः, दृंहणम्, दृंहितम्—एतानि पञ्च वृद्धौ । बृंहति–वर्धते स्थूलो वा भवति । बृंहस्, बृंहिः, बृंहुः, बृंहणम्, बृंहितम्–पञ्चैतानि शब्दे (?, वृद्धौ)। बर्हति–वर्धते । बर्हे रु रो मनि–बृहधातोर्ऋकारस्य रो भवति मनि परतः। ब्रह्मन्, बृहत्, बृहणम्, बृहि, बृहुः, बृंहितम्–एतानि षट् वृद्धस्य । बृहती–महती, वीणा, बुद्बुदः, छन्दोविशेषश्च ।

३२१. बृहिर् शब्दे—ध्वनौ वृद्धौ वा (?) । बर्हति–शब्दयति । बर्हिणः, बर्हीं–एते द्वे मयूरे । बर्हम्–पुच्छम् । बर्हिस्–होमद्रव्यम् ( कुशारूपम् ) ।

३२२. तुहिर् दुहिर् अर्दने—याच्ञायाम् । तोहति–भिक्षयति । तुहिता–पुत्री । दोहति–गच्छति । दुहिता–पुत्रिका ।

३२३. अर्ह मह पूजायाम्—अर्हति–पूजायोग्यो भवति । अर्हन्–पूज्यः, जिनः । अर्हः, अर्हिः, अर्हुः, अर्हणम्–चत्वारि पूज्ये । महति–वर्धते । महः–जनसंघः ( 'जुलूस' इति प्रसिद्धः ) । मही, महः–द्वे भूमौ । मह्, महनम्, महनीयम्, माहतम्यम्, माह्मम्, माहितम्, महत्, महितम्, महिमन्–एतानि नव पूज्ये । महन्ती, महती–पूज्यायाम् । महकः, महान्, महन्तः, महिष्ठः–चत्वारि महति ।

३२४. ग्लै हर्षक्षये—कष्टे । सन्ध्यक्षराणामाकारः—धातूनाम् ए ऐ ओ औ एतेषां स्थाने आकारो भवति । आतो यु–आकारान्तानां धातूनां 'यु' आगमो भवति अनर्विकरणे परे[2] । ग्लायति–कष्टं भजते । ग्लैः[3], ग्लानिः, ग्लानम्–त्रीणि कष्टे ।

---

१. अयं धातुर्वृत्तौ न व्याख्यायते । तत्र तु बृंहरेव ऋकारस्य रभावमुक्त्वा ब्रह्मन् पदं साध्यते ।

२. पाणिनीयास्तु शिद्विकरणेषु आत्वं न विदधते—आदेच उपदेशेऽशिति ( अष्टा० ६।१।४५ ) तथा सति आयादेशेन ग्लायति रूपं निष्पद्यते । ग्लैरूपं पठित्वा आकारं विधाय सार्वधातुकलकारेषु पुनः यकारागमविधानरूपं प्रयत्नगौरवं कस्मादादृतं भगवता काशकृत्स्नेनेति न ज्ञायते ।

३. अत्रात्वं कस्मान्न इति न व्यक्तीकृतं कन्नडटीकाकर्त्रा, एवमुत्तरत्र ग्लौः नौः इत्यादिष्वपि ।

३२५. ग्लै हर्षे—ग्लायति[1]—हर्षितो भवति। ग्लौः—हर्षः।

३२६. म्लै गात्रविनामे—देहालस्ये। म्लायति—शरीरमलसायते। म्लैः, म्लानिः, म्लानम्—त्रयो म्लाने ( मुरझाने में )।

३२७. णौ प्लवने—नायति[1]—तरति। नौः नावम्, नावा—त्रीणि नौकायाम्। नः—प्लावकः। न, ना—निषेधे।

३२८. धै न्यक्करणे—धिक्कारे। धायति—धिक्करोति। धैः धानं धानिः—त्रीण्येतानि धिक्कारे।

३२९. द्रै स्वप्ने—निद्रायाम्।[2] निद्रायति—स्वपिति। द्रैः—निद्रा। द्राणम्, द्राणः—द्वौ निद्रायाम्। विनिद्रितम्—जाग्रतम्।

३३०. ध्रै तृप्तौ—शीतीभावे। ध्रायति शीतो भवति। ध्रैः, ध्राणम्, ध्राणिः—एते त्रयः शैत्ये।

३३१. कै गै रै शब्दे—ध्वनौ। कायति—प्रशंसयति। कैः—वेदः। काया—तनूः। कै लसति आलिङ्गति कैलासः—रजताद्रिः। कैलासः—रोटिका। कायः—शरीरम्। काननम्, कायनम्, कानिः, कीतम्—एते चत्वारः प्रशंसायाम्। कायकः, कायिता—द्वौ गायके। कः—ब्रह्म। गायति—गानं करोति। गायकः, गायिता—द्वौ गायके। गायित्री ( ?, गायत्री )—शक्तिः, छन्दः, तुरीयः। गयः, गायकः, गैः, गायनम्, गीतम्, गानम्, गीतिः, गीता—अष्टौ गाने। रायति—गायति। रायकः, रायिता—द्वौ गायके। रात्रिः—निशा। ईदातः क्रानुबन्धे—आकारस्य ईकारो भवति क्रानुबन्धे प्रत्यये परतः। रीतिः—क्रमः, श्रृङ्गारः। रीतम्, रीता—द्वावलङ्कारे। रायिः, रैः—द्वौ सुवर्णे। रायणम्—ध्वनिः। रायः—राजा। रः—( ? )।

३३२. ष्टयै ष्ट्यै[2] स्त्यै शब्दसंघातयोः—ध्वनौ संघाते च। ष्ट्यायति[3]—ध्वनिं करोति सह वा गच्छति। ष्ट्यायकः ष्ट्यायिता—द्वौ ध्वनिकर्तरि, सहगन्तरि च। ष्ट्यैः, ष्ट्यायनम्, ष्ट्यानम्, ष्ट्यानिः—चत्वारः कोलाहले। स्त्यायति—

---

१. अत्र पाणिनीयमते कातन्त्रमते चात्त्वाभावे 'ग्लायति' रूपमिष्यते। एवं नौ धातोस्स 'नायति' रूपम्।

२. सूत्रे पठितोऽप्ययं धातुर्न व्याख्यायते कातन्त्रटीकाकृता।

३. पाणिनीयसम्प्रदाये क्षीरस्वामी दन्त्यादेशं नादिशति*। पुरुषकारस्तु स्वामिमतं निराकृत्य दन्त्यादेशं स्वीचकार। सायणोऽपि तमेवानुससार। शाकटायनस्तु 'ष्ट्यायति' इत्येव प्रतिपेदे।

सह गच्छति। स्त्यायी—सहगन्त्री। स्त्यायकः, स्त्यायता (?, स्त्यायिता)—द्वौ सहगन्तरि। स्त्री—योषित्। स्त्यायकः स्त्यायिता—गायिका (?)। स्त्यैः, स्त्यानम्, स्त्यायनम्, स्त्यानिः—चत्वारः शब्दे।

३३३. खै खादने—अदने। खायति—अत्ति। खायकः, खायिता—द्वौ अत्तरि। खैः, खानम्, खातम्, खानि, खातिः, खीतम्—इमे षट् अदने। परिखा, खेयम्—परिखायाम् ('खाई' इति भाषायाम्) खः—अचा। खम्—इन्द्रियम्, सुखम्, आकाशः।

३३४. क्षै जै पै क्षये—नाशे। क्षायति—नश्यति (क्षीणो भवति)। क्षायकः—क्षययुक्तः। क्षैः, क्षायः, क्षीणकः, क्षायणम्, क्षः—पञ्चैते क्षये। जायति—अल्पीभवति। जायमानः—अल्पीकृतः। जैः, जः, जानिः, जानम्, जीनम्—पञ्च क्षये। जाया, जायी—पत्नी। जानुः—जङ्घाया अधःपर्व ('घुटना' इति भाषायाम्)। जातु—एकवारम्। सायति—क्षीणो भवति। सायम्—सूर्यास्तानन्तरः कालः। सायकः—इषुः। पैः, पः, सायनम्, सायमानम्, सानम्, सातम्, सीतम्, सीनम्—एतेऽष्टौ क्षये।

३३५. श्रै स्रै पाके—पचनक्रियायाम्। श्रायति—पचति। श्रायकः—पाचकः। श्रायणम्, श्रायम्, श्रातम्, श्राणम्, श्रीणम्, श्रीतम्, श्रैः, श्रैः (?, श्रः)—अष्टौ पाके। स्रायति—पचति। स्रायकः—पाचकः। स्रैः, स्रः, स्रायणम्, स्राणम्, स्रातः, स्रीणम् (?, स्रीणम्), स्रीतम् (?, स्रीतम्)—सप्तैते पाके।

३३६. पै ऊ[1] वै शोषणे—पायति—शुष्यति। पायकः—शुष्यमाणः। पायनम्, पानम्, पातम्, पीतम्, पीनम्, पैः, पः—एते सप्त शुष्कीभावे। अवति[1]—शुष्यति। अवकः—शुष्यमाणः। उः—लघु। उत—समुच्चये। वायति—श्राम्यति (श्रान्तो भवति)। वायकः—श्राम्यमाणः। वानम्, वातम्, वीनम्, वीतम्, वायनम्, वैः, वः—एते सप्त श्रमे खेदे। वै—निश्चये।

३३७. ष्टै वेष्टने—बन्धने ('लपेटना' इति भाषायाम्)। स्तायति—बन्धयति। स्तायकः—वेष्टकः। स्तैः, स्तः, स्तायनम्, स्तायम्, स्तानम्, स्तातम्, स्तीतम्, स्तीनम्—सप्तैते परिवृत्तौ = वेष्टने।

३३८. देप् (?, दैप्) शोधने—दायति—परिशोधयति। दायकः—परिशोधकः। देः (?, दैः), दः, दायनम्, दायम्, दानम्, दातम्, दीनम्, दीतम्—अष्टावेते शोधने।

---

१. पाणिनीये 'पै ओवै' इति पठ्यते तत्र ओकारोऽनुबन्ध इति वृत्तिकृतः प्रतिजानते।

३३९. धेट पा पाने—धेटो यः (१., धयः)—धेटो धातोर्धय आदेशो भवति। धयति–पिबति। धायकः–पायकः। धैः (१, धेः), धः, धायनम्, धातम्, धीनम्, धीतम्, धयनम्, धम्, धयत्–एते दश पाने। पः पिबः–पाधातो पिबादेशो भवति। पिबति–धयति। पायकः, पाता–पानकर्तरि। पाः, पः, पानम्, पेयम्, पिबत्–पञ्चैते पेये (१, पाने)। द्विपः–हस्ती। पादपः–वृक्षः। पीतम्–पानक्रियया गृहीतम्। पीतिः, पानकम्–द्वौ पानीये।

३४०. घ्रा गन्धोपादाने—घ्राणे। घ्रो जिघ्रः–घ्रा धातोर्जिघ्रादेशो भवति। जिघ्रति–गन्धं गृह्णाति। घ्रायकः, जिघ्रन्, जिघ्रागः–त्रयो गन्धग्रहीतरि। घ्रातम्, घ्राणम्, घ्रीतम्, घ्रीतिः, घ्रेयम्, घ्रातव्यम्, घ्राणीयम्, घ्राः, घ्रः–नवैते घ्राणे।

३४१. ध्मा शब्दाग्निसंयोगयोः—ध्वनौ अग्निसंयोगे च ('धौंकना' इति भाषायाम्)। ध्मो धमः–ध्मा धातोर्धमादेशो भवति। धमति–शब्दयति मुखेनाग्निं ज्वलयति। शङ्खध्माः–शङ्खस्य धमकः[1]। अग्निध्माः–अग्नेर्मुखेन प्रज्वालकः। ध्मः, ध्माः, ध्मानम् ध्मानीयम्, ध्मेयम्, ध्मातव्यम्, ध्मीतम्, ध्मीनम्–ओष्ठौ संयुज्य शब्दने।

३४२. ष्ठा गतिनिवृत्तौ—गत्यवरोधे आसादने। स्थस्तिष्ठः–स्थाधातोस्तिष्ठादेशो भवति। तिष्ठति–आसीदति। तिष्ठन्, तिष्ठानः, स्थायिता, स्थानकः, स्थानिकः, स्थापकः–एते षट् आसीदितरि। स्थानम्, स्थापनम्, स्थेयम्, स्थानीयम्, स्थितम्, स्थितिः, स्थः, स्थाः–एतेऽष्टा उपवेशने।

४४३. म्ना अभ्यासे—पुनःपुनरावृत्तौ। म्नो मनः–म्नाधातोर्मनादेशो भवति। मनति–पटति अभ्यसते। म्नाः, म्नः, म्नाता मायकः–चत्वार एते पाठके, विदुषि। म्नानम्, म्नेयम्, म्नानीयम्, म्नातव्यम्, म्नितम्, म्नितिः, आम्नायः, समाम्नायः—अष्टावेते विद्यासु।

३४४. दाण् दाने–दाणो यच्छुः[2]—दाण् धातोर्यच्छु–आदेशो भवति। यच्छति–ददाति। दः, दाः, दाता, दायकः, दानी–पञ्चैते दातरि। दानम्, देयम् दापनम्, दातव्यम्, दानीयम्, दायम्, दितम्, दितिः–एते अष्टौ दाने।

---

१. औणादिकः वुनन्तः। अत्र क्षीरतरङ्गिण्यां १३६ तमस्य पृष्ठस्यास्मदीया द्वितीया टिप्पणी द्रष्टव्या।

२. उकार इत्संज्ञक उच्चारणार्थो वा। यद्वा 'यच्छः' इत्येव शुद्धः पाठः स्यात्। कातन्त्रेऽपि 'दाणो यच्छः' (३।८।७५) इत्येव सूत्रं दृश्यते।

३४५. हृ कौटिल्ये—अनार्जवे। ह्वरति—कुटिलमाचरति। ह्वर्ता, ह्वरकः, ह्वरः,—त्रय एते कुटिलव्यवहारकर्त्तरि। ह्वः, ह्वरणम्, ह्वृतम्, ह्वृतिः, ह्वरणीयम्, ह्वर्तव्यम्, ह्वर्यम्, ह्वार्यम्—एतेऽष्टौ कौटिल्ये।

३४६. स्वृ शब्दोपतापयोः—ध्वनौ उपतापे (खेदे) च। स्वरति—सप्त स्वरान् प्रकाशते वीणा। कोष्ठपालश्चोरं स्वरति—निस्त्रिंशधारी[1] चोरं हन्तीत्यर्थः। स्वर्—स्वर्गः। स्वरकः, स्वर्ता—द्वावेतौ शब्दयितरि। स्वरः, स्वरितः, स्वरणम्, स्वृतिः, स्वृतम्, स्वृ—षडेते शब्दविशेषे। स्वर्ता, स्वारकः, स्वारः—त्रयो ध्वनौ।

३४७. स्मृ ध्यै चिन्तायाम्—विचारे। स्मरति—चिन्तयति। स्मरः—मन्मथः। स्मृ, स्मरणम् स्मृतिः, स्मृतम्, स्मरणीयम्, स्मर्तव्यम्, स्मार्यम्—सप्तैते स्मृतौ। स्मर्ता, स्मरकः, स्मारः—चिन्तयितरि। स्मृत्वा—चिन्तित्वा। ध्यायति—ध्यानं करोति (विचारयति)। ध्याता, ध्याः, ध्यायकः—त्रयश्चिन्तके। ध्यानम्, ध्येयम्, ध्यातव्यम्, ध्यानीयम्—चत्वारो ध्याने।

३४८. ह्वृ ह्वृ[2] वरणे—आच्छादने, स्वस्थाने। ह्वरति—छिद्रं करोति। ह्वारम्—गमनमार्गः। ह्वर्ता, ह्वरकिः (?, ह्वरकः)—आच्छादनकर्तरि। ह्वरणम्, ह्वृतिः, ह्वृतम्, ह्वृ, ह्वर्तव्यम्, ह्वरणीयम्, ह्वार्यम्—सप्तैतानि स्वस्थाने। ह्वरति—निवसति। ह्वर्ता, ह्वरकः—द्वौ निवसितरि। ह्वरणम्, ह्वृ, ह्वरणीयम्, ह्वर्तव्यम्, ह्वार्यम्—पञ्च स्वस्थाने।

३४९. सृ गतौ—चलने। सरति—चलति। सर्ता, सरकः—द्वौ गन्तरि। सरस्, सर्—द्वौ सरोवरे। ह्रस्वस्य तोऽन्तः (?, न्ते) पानुबन्धे[3]—ह्रस्वस्य धातोरन्ते 'त्' आगमो भवति पकारानुबन्धे प्रत्यये परतः। सृत्, सृ, सरणम्, सरस्वत्, सारम्, सारः, सरिः, सरः, सारुः, सारणम्, सार्यम्, सर्तव्यम्, सरणीयम्, सृतिः, सृतम्, सरत्, सर्यमाणम्—सप्तदशैते चलने। सरणिः—मार्गः। सरस्वती—एतन्नाम्नी नदी देवता च। सारस्वतः—एतन्नाम ऋषिः, कविः।

---

१. एतदर्थानुसारं 'कोष्ठपाल' स्थाने 'कोशयपाल' इति साधु स्यात् (कोशे भवः कोश्यो निस्त्रिंशः)।

२. ह्वृ कौटिल्ये पूर्वं (१।३४५) गतः।

३. यद्यप्यत्र सूत्रे तकारागमस्य विकल्पो नोक्तः, तथापि इहोदाहरणे 'सृत् सृ' उभयोः निर्देशात् पूर्वत्र च 'स्वृ' (३४६), 'स्मृ' (३४७), 'ह्वृ' (३४८) आदिषु तकारागमरहितोदाहरणाच्च विकल्पोऽत्र द्रष्टव्यः। पाणिनीयास्तु नित्यं तुकमाहुः (अष्टा. ६।१।७१)। यदि तत्रापि पूर्वसूत्राद् बहुलग्रहणानुवृत्तिः स्यात्तर्हि उभयथा सिद्धिः संभवति।

३५०. ऋ प्रापणे च—गतौ। ऋ ऋच्छः—ऋ धातोर्ऋच्छादेशो भवति। ऋच्छति—चलति। अर्तः (?, अर्ता), आरकः, आरः—त्रयो गन्तरि। अरम्—अलम्। अरकम्—लाक्षा। अरा—अर्थः (?)। अरिः—वैरी, चक्रम्, अक्षिपीडा। अरुस्—मूलव्याधिः। अरण्यम्—वनम्। आरण्यम्—वनवासः। अरणम्, ऋ, ऋतम्, ऋतिः—एते चत्वारश्चलने। अरणिः—काष्ठविशेषः, येन यज्ञेऽग्निरुत्पाद्यते, शुकपत्नी। अरुणः—सूर्यसारथिः। आरुणिः—अरुणपुत्रः, वेदपुरुषः (एतन्नामा ऋषिविशेषः)। अर्यः—वैश्यः। आर्यः—श्रेष्ठपुरुषः। आर्या—पार्वती, महाराष्ट्रः (?)। आरुः—बलीवर्दयुग्मम्।

३५१. ऋ गतौ[1]—चलने। अरति—गच्छति। ऋ, ऋतम्, ऋतिः—त्रयः सत्ये। ऋणम्—उत्तमर्णाद् गृहीतं धनम्।

३५२. गृ घृ सेचने—घर्षणे। गरति—घर्षयति। गरकः—सर्पः। गृ, गरम्, गारम्, गरळम्—चत्वारो विषे। गारः—(?)। गरुत्, गरि—द्वौ पक्षिणि। गरु, गारु—कठिनम्। गरुडः—विष्णुवाहनः। गरुडम्—इन्द्रपालः। गरुडी—धनुर्विद्यागृहम्। गरणम्—मुखे निक्षिप्तं भक्ष्यम् ('कौर' इति भाषायाम्)। गारणम्—(?)। गर्ता—विवादः। गृतं, गृतिः, गर्तव्यम्, गरणीयम्, गार्यम्, गृ—एते षट् घर्षणे। गरत्, गरन्—सपत्नीकः। गरती—मुनिस्त्री। गरासः—(?)। गारकम्—(चूना लगाना)। गरिका—दूर्वा। गर्मः—स्वेदः। घरति—सिंचति। घर्मः—औष्ण्यम्। घृ, घृतम्, घृतिः[2]—त्रय आज्ये। घर्ता, घरकः, घारकः—त्रयः पर्जन्ये। घर्घरः—एतादृशी ध्वनिः। घर्ता—गर्तः। घर्तव्यम्, घरणीयम्, घार्यम्—त्रयः सिञ्चनयोग्ये द्रव्ये। घारकम्—शोधकम्। घरिका—दूर्वा। घर्घरी—दुर्गस्य अवयवविशेषः ('बुर्ज' इति भाषायां प्रसिद्धः)।

३५३. धृ हूर्छने[3]—कौटिल्ये। धरति—धारयति। धरः—पर्वतः। धरा, धरित्री, धरणी, धारणी, धरिः, धृत्—षडेते पृथिव्याम्। धारा—अजस्रप्रवाहः।

---

१. अयं धातुः पुनः किमर्थं पठ्यत इति न शक्यते। पूर्वसूत्र एव चाद् गत्यनुवृत्तिः संभवति, वृत्तिकृता च प्रापणस्य गतिरेवार्थो निर्दिष्टः।

२. एतद्धातुविषय आह पतञ्जलिः—घरतिरयमविशेषेणोपदिष्टः। स च घृतं घृणा घर्म इत्येवंविषयः (महा० ७।१।९६)। अत्रान्यप्रत्ययेष्वप्युदाहरणात् प्रतीयते यत्काशकृत्स्नीयानां मते सर्वविषयोऽयं घरतिरिति।

३. अत्र पाठो भ्रष्ट इति प्रतीयते। कदाचिदिह=ध्वृ हूर्छने, धृ धारणे इति पाठः स्यात्। धृ हूर्छने इत्यर्थस्य न क्वापि संगतिर्दृश्यते कृदन्तोदाहरणेषु। काशकृत्स्नस्य संक्षेपे कातन्त्रधातुपाठे त्वत्र 'ध्वृ हूर्छने' इति पठ्यते।

धारिः—मार्गः। धारम्—सूत्रम्। धरः—तरुविशेषः। धरुत्रा, धारकः—द्वौ शृङ्गे। धरणम्—(?)। धारणम्—सहनम्। धृतम्, धर्तव्यम्, धरणीयम्, धार्यम्—चत्वार एते सहने।

३५४. श्रु श्रवणे—श्रवति[1]—शृणोति। श्रो, श्रावकः, श्रुत्—त्रयः श्रवणकर्तरि। श्रवणम्—तारकम्, कर्णम्, किंवदन्ती। श्रावणः—एतन्नामा मासविशेषः, शब्दश्च। श्रुतिः—वेदः। श्रुतम्, श्रोतव्यम्, श्राव्यम्, श्रवणीयम्—चत्वारः श्रवणयोग्ये।

३५५. पू स्रु सू द्रु दू (?, दु द्रु)[2] ऋच्छ रच्छ अच्छ कच्छ मच्छ गम्ल सृप्लृ गतौ—स्रवति—सर्वदेहेषु चलति। सूः, सविता, सावकः—एते त्रयः शिवे सूर्ये च। सवनम्, सावनम्—द्वे चलने। सव्यम्—दक्षिणभागे। अपसव्यम्—वामभागे। सविः—स्वादः। सोतव्यम्, सवनीयम्—द्वौ श्रवणीये (?, गमनीये)। स्रवति—पतति। स्रूः, स्रवणम्, स्रावणम्, स्राव्यम्, स्रुतिः, स्रुतम्, स्रोः स्रवणीयम्—एतेऽष्टौ जलध्वनौ। स्रोतस्—जलप्रस्रवणम्। स्रोता, स्रावकः—द्वौ मेघे। दयति—सुगन्धमागच्छति। दवनम्—पत्रम् (दलम्)। दोता, दूः, दावकः, दवः, दावः—पञ्चैतेऽग्नौ। दावम्—वनाग्नौ। दोतव्यम्, दवनीयम्, दाव्यम्—त्रयो वाष्पे। द्रवति—विलीनो[3]भवति (पिघलता है)। द्रः (?, द्रुः), द्रोता, द्रावकः—त्रयो मेघे। द्रवणम्, द्रावणम्, द्रुवम्, द्रोतव्यम्, द्राव्यम्, द्रवणीयम्, द्रव्यम्—जलप्रवाहे। ऋच्छति—गच्छति। ऋच्छा—सेना। रच्छति—एकत्रितो भवति। रच्छा—संमर्दः (भीड़ इति भाषायाम्)। अच्छति—सत्यं भवति। अच्छम्—सत्यम्। मच्छति—परिचिनोति (पहचानता है)। मच्छम्[4]—लक्षणम्, मत्स्यः[4]।

---

१. पाणिनीयास्तु 'श्रुवः शृ च' (३।१।) इति सूत्रेण शपः स्थाने श्नुविकरणं 'श्रु'स्थाने च 'शृ' आदेशं कृत्वा 'शृणोति' इत्याद्युदाहरन्ति सार्वधातुकेषु। काशकृत्स्नास्तु 'श्रवति' इत्येव। तेन ज्ञायते श्रु-शृ च स्वतन्त्रौ धातू। पाणिनीयमतेऽपि श्रु धातोर्भ्वादिषु पाठात् शब्विकरणोऽप्येषितव्य एव। अन्यथा श्रुधातोर्भ्वादिषु पाठो व्यर्थः स्यात्, स्वादिषु पठित्वा 'शृ' आदेशविधानेनापि सर्वमुपपद्यत एव। एवं च कृत्वा भ्वादिपाठो व्यर्थः सन् ज्ञापयति शबपि पक्षे भवति। तेन श्रवति इत्यादयो वैदिकाः प्रयोगा अपि सिद्ध्यन्ति।

२. वृत्तौ 'दवति द्रवति' आद्युदाहरणात् दु द्रु इत्येव युक्तः पाठः। कातन्त्रेऽपि दु द्रु इत्येव पाठः।

३. विलीनशब्दो द्रवीभावे प्रयुज्यते। तथा च श्रुतिः—स्वयं विलीनमाज्यम् भवति।

४. नायं मत्स्यशब्दस्यापभ्रंश इति मच्छधातोः पाठात् स्पष्टं भवति। हेमचन्द्रोऽपि मत्स्यार्थकं मच्छशब्दमुणादौ व्युत्पादयति (द्र० उणादिवृत्तिः १२४)।

गमो गच्छः[1]—गम धातोर्गच्छादेशो भवति । गच्छति—याति । गन्ता—गमकः । गम्, गमनम्, गमकम्, गन्तव्यम्, गमनीयम्, गाम्यम्, गम्यम्; लोपोऽनुनासिकानां क्ङानुबन्धे—मकारस्य लोपो भवति क्ङानुबन्धे प्रत्यये परतः—गतिः, गतम्—नवैते[2] गमने । सर्पति—दशति । सर्पः—अहिः । सर्पिस्—घृतम् । सर्प्यम्—अल्पलवणम् ? । सर्पणम्—वक्रगतिः ।

३५६. ञिक्ष्विदा[3] अव्यक्ते शब्दे—अव्यक्तध्वनौ । क्ष्वेदति—शनैः ( अव्यक्तं ) वदति । क्ष्वेडणः—शनैर्भाषकः ।

३५७. स्कन्दिर् गतिशोषणयोः—चलने शुष्कीभावे च । स्कन्दति—चलति । स्कन्दः—सुब्रह्मण्यः ।

३५८. यभ जभ मैथुने—मैथुनकर्मणि । यभति—मैथुनं करोति । यम्भा[4] ( ? यब्धा ), यभकः—द्वौ मैथुनकर्तरि । यभ्, यभनम्, यम्भिः ( ? यब्धिः ), यम्भम् ( ?, यब्धम् ), यम्भव्यम् ( ?, यब्धव्यम् ), यभनीयम्, यभ्यम्, याभ्यम्—एते मैथुने । जभति—विनोदयुक्तं वाक्यं वदति । जम्भा ( ?, जब्धा ), जाभकः—विनोदवाक्यवक्तरि । जभ्, जभनम्, जभ्यम्, जाभ्यम्, जम्भव्यम् ( ?, जब्धव्यम् ), जभनीयम्—एते षट् विनोदे ।

३५९. ष्कभि ष्कम्भि, ष्टभि स्तम्भने—स्थापने । कम्भति—तिष्ठति । कम्भः—स्तम्भः । विष्कम्भति—उच्छ्रयति । विष्कम्भम्—वृक्षविशेषः । स्तम्भति—गर्ते रोदयति । स्तम्भः—गर्ते रोपितो वृक्षः । उत्तम्भः—कीलम्, वृक्षः ।

३६०. अभि द्रवणे—द्रवीभावे । अम्भति—द्रवीभवति । अम्भः—जलम् ।

३६१. जृभि जभि कुभि दभि गर्वे—( अभिमाने ) जृम्भति—अवलम्बयति । जृम्भकः—अवलम्बकः । जृम्भणम्—अवलम्बनम् । जम्भति—अभिमत्तो भवति । जम्भः—राक्षसः । कुम्भति—सहते । कुम्भः—घटः । दम्भति—मिश्रयति । दम्भकः—मिश्रकः ।

---

१. गमो गच्छादेशविधानात् गच्छः स्वतन्त्रो धातुर्ज्ञेयः पिबादिवत् । तेन वेदेषु प्रयुक्ताः 'गमति' आदिप्रयोगा अप्युपपद्यन्ते ।

२ 'गम्' इत्यारभ्य 'गतम्' इत्यन्ताः ।

३. 'ञिक्ष्विदा' इति पाणिनीयाः, कातन्त्रधातुपाठेऽप्येवमेव ।

४. यम्भादिषु जम्भादिषु च कथं प्रत्ययतकारस्य भभाव इति न व्यक्तीकृतं धृत्तिकृता । पाणिनीयास्तु धभावं कुर्वन्तो 'यब्धा' 'जब्धा' इत्यादीन् रूपान् प्रदर्शयन्ति । अत्र एभि इत्यस्य टिप्पणमप्यग्रे ( १।२७२ पृष्ठ ६० ) द्रष्टव्यम् ।

३६२. रभि लभि डुभि डिभि रिभि कुभ[1] धारणे—घर्षणे। रम्भति—घर्षति। रम्भः—प्राणवायुः। लम्भति—धारयति। लम्भनम्—धारणम्। डुम्भति—क्रीडते। डुम्भः—क्रीडकः। डिम्भति—याति। डिम्भः—शयः। रिम्भति—धारयति। रिम्भः—तिलः। लिम्भति[2]—वहति (ढोता है)। लिम्भः—प्रर्करः।

३६३. तृ प्लवनतरणयोः—पारगमने तरणे च। तरति—पारं गच्छति। तरिः—नौका। तरः—परिधिः। तारम्—यशदधातुः, रजतम्, ओंकारः। तारकः—एतन्नामाऽसुरः, प्रणामः। तरणिः—सूर्यः। तारुणः—वर्षः, सालवृक्षः। तरुः—वृक्षः। तरुणः—युवा। तरुणी—युवती। तार्यम्—पारगन्तुं योग्यम्। उत्तरणम्—जलादिमग्नस्य उपर्य्यागमनम् ('उबराना' इति भाषायाम्)। तारणम्—पारगमनम्। उत्तरणा—पत्रम् (दलम्)। तीरम्—तटम्। तीर्णम्—पारं गतम्। तारा—बृहस्पतेः पत्नी, बालेः पत्नी, तारा (तारकम्), वृक्षः। तारकितम्—(ताराभिर्मण्डितं) नभः।

३६४. पु प्रसवे—जनने। सवति—जनयति। सविता—शिवः, पिता, सूर्यः। सावित्री—सन्ध्या, सरस्वती, आदिशक्तिः, जननी।

३६५. ध्रुव गतिस्थैर्ये—निश्चलचलने (?)। ध्रुवति—कम्परहितो भवति। ध्रुवम्—निश्चलम्। ध्रुवः—उत्तानपादपुत्रः।

३६६. जि अभिभवे—विजये। [जयति—शत्रुमभिभवति = विजयते।] जयः—विजयः। जयन्तः—देवेन्द्रपुत्रः। जेता, जित्, जीयः—त्रय एते विजयिनि। जेयम्, जयनम्, जय्यम्, जेतव्यम्, जयनीयम्—पञ्चैते विजययोग्ये। जिष्णुः—देवेन्द्रः, विजयी। जितम्, जितिः—विजयः। जयविजयौ—जयः विजयश्च, एतन्नामकौ संवत्सरौ, जयविजयनामानौ द्वारपालौ।

३६७. त्यज हानौ—त्यागे। त्यजति—जहाति। त्यक्, त्यक्ता, त्यक्तवान्, त्याजकः, त्याजी (?, त्यागी)—पञ्चैते त्यागकर्तरि। त्यजनम्, त्यजनीयम्, त्याज्यम्, त्यक्तम्, त्यक्तिः—पञ्चैते त्यागे।

३६८. षञ्ज ष्वञ्ज सङ्गे—सद्भावे। सञ्जति—मिलति। सङ्गः—मेलकः। सञ्जनम्, सञ्जनीयम्, सङ्क्तव्यम्, सङ्क्तम्, सङ्क्तिः, साञ्ज्यम्—एते षट् दाने (?)। चजोः कगौ—चकारजकारयोः स्थाने ककारगकारौ भवतः। स्वञ्जति—मिलति। स्वङ्गः, स्वञ्जकः—द्वौ मेलके।

---

१. अयं धातुर्नैव व्याख्यातः कन्नडटीकाकृता। २. नायं धातुर्धातुसूत्रे पाठ्यते।

३६९. दृशिर् प्रेक्षणे—अवलोकने । दृशेः पश्यः—दृशिस्थाने पश्यादेशो भवति । पश्यति—अवलोकयति । पश्यन्—द्रष्टा । पश्यन्ती—द्रष्ट्री । दृशादीनां य्वृणां यवरा अ[का]नुबन्धे—दृशादिधातूनां इ उ ऋ स्थाने य व र[1] आदेशा भवन्ति कानुबन्धभिन्ने प्रत्यये परतः । छशषराजादीनां षोऽघोषे—छकारशकारषकारान्तानां राजृप्रभृतीनां च धातूनाम् अन्त्यस्य षकारादेशो भवति अघोषसंज्ञके वर्णे परतः । द्रष्टा, दृष्टवान्—द्वौ प्रेक्षके । दिशादीनां कः—दिशादीनां धातूनां शकारस्य ककारादेशो भवति अघोषे घोषे च वर्णे परतः[2] । दृक्, दृश्यम्, दृष्टिः, दृश्यमानम्, द्रष्टव्यम्, दर्शनम्, दर्शनीयम्, दार्श्यम्—एते नव द्रष्टुं योग्ये । दर्शः—सूर्यचन्द्रदर्शनम् ।

३७०.—कशिर् दीप्तौ—प्रकाशते । कशेर्यप इपुश्च कशधातोर्यप प्रत्ययो भवति इपुश्च । कश्यपः—ब्राह्मणः पुत्रः । हिरण्यकशिपुः—एतन्नामा राक्षसः ।

३७१. दंश दशने—क्षते कर्तने ('काटने में' इति भाषायाम् ) । अनुपङ्गलोपोऽनुनासिकानाम्—अनुनासिकानामनुपङ्गस्य लोपो भवति । दशति—कृन्तति ( काटता है ) । दक्, दष्टवान्, दष्टा—एते त्रयो दशके । दशनः—दन्तः । दशन्—दश संख्या । दन्दशूकः—क्षतकर्ता सर्पादिः । दंशम्, दंशनीयम्, दंश्यम्, दांश्यम्,[3] दष्टम्, दष्टिः—एते षट् दशने ।

३७२. कित विनाशे ( ?, निवासे ) रोगापनये च—गृहे, पीडानिवारणे च । निकेतति—निवसति । निकेतनम्—गृहम् । कलकेतः—ब्रह्मचरणम् । केतुः—सुरासुरस्य शिरोरहितः कायः, पक्षिणः पर्णम् । कित्, केतकः, केतिका, केतितवान्—चत्वार एते वासके । कैतवम्—कपटम् । केतिः, केतकी—सुगन्धिक्षुपविशेषः ('केवड़ा' इति प्रसिद्धः ) । चिकित्सा—रोगपरीक्षा (?, रोगनिवारणम् ) । चिकित्सुः—वैद्यः । चकारात् दशनेऽपि—कितवः—दंशक, प्रमत्तः, धुस्तुरवृक्षः (धतूरा इति प्रसिद्धः) ।

---

१. इमे य व र आदेशा अकारसहिता ज्ञेयाः ।

२. 'दिशादीनां कः' सूत्रव्याख्याने कथटकृता 'अघोषे (=वर्गीयप्रथमद्वितीययोः) घोषे (=वर्गीय तृतीयचतुर्थयोः ) च परतः' इत्यंशः कुतः संगृहीत इति न ज्ञायते । वस्तुतो लक्ष्यविरोधाभिन्त्योऽयं पाठः । एतेन पदान्त एव ककारादेशः इष्यते । तुलनीयम्—क्विन्-प्रत्ययस्य कुः' (अष्टा० ८।२।६२) पाणिनीयं सूत्रम् ।

३. अनुपधस्याप्याकारस्य कथं वृद्धिरिति न ज्ञायते ।

भूते भव्ये वर्तमाने भावे कर्तरि कर्मणि।
प्रयोजके गुणे योग्ये धातुभ्यः स्युः क्विपादयः ॥

भूते–अतीते काले, भव्ये–भविष्यत्काले, वर्तमाने–विद्यमाने काले, भावे–क्रियार्थमात्रे, कर्तरि–स्वतन्त्रे कारके, कर्मणि–कर्मकारके, प्रयोजके–प्रयोजककर्तरि, गुणे–अप्रधानकर्मणि, योग्ये–अर्हाद्यर्थे, धातुभ्यः–भूप्रभृतिभ्यः क्विपादयः–क्विप् प्रभृतयः प्रत्ययाः स्युः–भवन्ति।

[ इति काशकृत्स्नधातुपाठे भ्वादिगणे परस्मैपदिनः समाप्ताः ]

## ( २ )[1]

## अथ आत्मनेपदिनः

३७३. एध वृद्धौ—वर्धने। एधते–वर्धते। एधमानः–वर्धमानः। एत्, एध्, एधनम्, एधस्, एद्धिः, एद्धम्, एधिः[2]–सप्तैते वृद्धौ।

३७४. स्पर्ध संघर्षे—परेषां विजयस्येच्छा। स्पर्धते–स्पर्धां करोति। स्पर्धमानः–स्पर्धां क्रियमाणः। स्पर्धनम्, स्पर्धा, स्पर्धिः, स्पर्धनीयम्–चत्वारः स्पर्धायाम्।

३७५. गाधृ गाथृ प्रतिष्ठालिप्सयो[3]र्ग्रन्थे च—आस्पदे, कथाश्रावणे च। प्रतिष्ठेच्छायामकर्मकः, ग्रन्थने च सकर्मकः। गाधते–प्रतिष्ठितो भवति। गात्, गाध्, गाधनम्, गाधा, गाधिः–पञ्चैते कथानके। गाधमानः–कथायाः श्रावकः। गाथते–कथां श्रावयति। गाथमानः–कथायाः श्रावकः। गाथिः–विश्वामित्रस्य पिता। गात्, गाथनम्, गाथा, गाथनीयम्, गाथ्यम्–पञ्चैते कथायाम्।

३७६. बाधृ लोटने—पीडायाम्। बाधते–पीडयति। बात्, बाधकः, बाधमानः–त्रयः पीडके। बाधनम्; बाधा, बाधिः, बाधनीयम्–चत्वारः पीडायाम्।

---

१. कर्नाटकलिपिमुद्रितानुसारं संख्यानिर्देशः।

२. अत्र जश्त्वं कथं न भवति। जश्त्वे सति एद्धिरूपं एवावशिष्यन्ते। तस्मात्, जश्त्वाभाव इष्ट इति प्रतीयते। यभिः जभिः इत्यनयोः टिप्पणं द्रष्टव्यम् (१।३५८ पृ० ५७)।

३. द्वित्वनिर्देशाद् द्वौ पृथगर्थौ। वृत्तिकारस्तु 'प्रतिष्ठेच्छायामकर्मकः, इति वचनादेकत्वं स्वीकरोतीति प्रायते।

३७७. दध धारणे—धर्षणे। दधदे–धर्षयति। धत्, दधकः, दधानः–त्रय संघर्षके। दधि–पयोविकारविशेषः। दधनम्, दधनीयम्, दध्यम्, दधा, दद्धम्, दद्धिः–षडेते घर्षणे।

३७८. स्कुदि आप्रवणे—कूर्दने। स्कुन्दते–कूर्दते। स्कुन्दः, स्कुन्दकः, स्कुन्दमानः–त्रयः कूर्दके। स्कुन्दनम्, स्कुन्दिः, स्कुन्दनीयम्, स्कुन्दा–चत्वारः कूर्दने।

३७९. श्विदि श्वैत्ये—शीतीभावे। श्विन्दते–शीतीभवति। श्विन्दः, श्विन्दकः, श्विन्दमानः–त्रयः शीतीकर्तरि। श्विन्दिः, श्विन्दनम्, श्विन्दनीयम्, श्विन्दा–चत्वारः शीतीभावे।

३८०. वदि अभिवादनस्तुत्योः—नमस्कारे प्रशंसायां च। वन्दते–नमस्करोति, स्तौति वा। वन्दकः, वन्दी, वन्दमानः, वन्दारुः–चत्वारः स्तावके। वन्दिः, वन्दनम्, वन्दनीयम्, वन्दा–चत्वारो नमस्कारे स्तुतौ च।

३८१. भदि कल्याणे सौख्ये च—आनन्दे शुभे च। भन्दते–शुभं भवति। भन्दः, भन्दमानः, भन्दकः–त्रयः शुभंभावुके, सुखिनि च। भन्दिः, भन्दनम्, भन्दनीयम्–त्रयः सुखे।

३८२. मिदि स्तुतिमोदमदस्वप्नकान्तिगतिषु—स्तुतौ, आनन्दे, मदे, स्वप्ने, कान्तौ, गतौ च। मिन्दते–स्तौति। मिन्द्रः, मिन्दः, मिन्दकः मिन्दमानः–चत्वारः प्रशंसके। मिन्दनम्, मिन्दिः, मिन्दनीयम्, मिन्दा–चत्वारः स्तुतौ।

३८३. स्पदि किञ्चिच्चलने—अल्पगतौ। स्पन्दते–अल्पं गच्छति। स्पन्दः, स्पन्द्रः, स्पन्दकः, स्पन्दमानः–चत्वारः किञ्चिद्गन्तरि। स्पन्दिः, स्पन्दनम्, स्पन्दनीयम्–किञ्चिद्गतौ।

३८४. क्लिदि परिदेवने—दुःखे। क्लिन्दते–दुःखयति। क्लिन्दः, क्लिन्दकः, क्लिन्दमानः–त्रयो दुःखके (दुःखिते)। क्लिन्दिः, क्लिन्दनम्, क्लिन्दनीयम्–त्रयो दुःखे।

३८५. मुद हर्षे—प्रसन्नतायाम्। मोदते–हर्षितो भवति। मोदकः–हर्षिता, भक्ष्यविशेषश्च। मुत्, मुदम्, मोदम्, मोदनम्, मोदितव्यम्, मोदनीयम्, मुदितम्, मुदिः, मुत्तम्, मुत्तिः, मुदा, मोद्यम्,–द्वादशैते हर्षे।

३८६. दद दाने—ददते–ददाति। ददः, ददकः, ददानः–त्रयो दातरि। ददिः, ददनम्, ददनीयम्–त्रयो दाने।

३८७. हद पुरीषोत्सर्गे—मलत्यागे। हदते–पुरीषमुत्सृजति। हदकः, हदः, हदानः–त्रयो मलोत्सर्जके। हदिः–(?)। हादिः–मार्गः। हादलिः–वृक्ष-विशेषः। हादरः–(?)। हदनम्, हदनीयम्–द्वौ शौचे। हदम्–वर्धनम्, मिश्रणम्।

३८८. ष्वद स्वाद स्वर्द—आस्वादने–रोचने। स्वदते–रोचते। स्वदः, स्वदकः, स्वदमानः–त्रयो रोचितरि। स्वदिः, स्वत्, स्वदनम्, स्वदनीयम्–त्रयो रुचौ। स्वादते–रसं गृह्णाति। स्वादः, स्वादकः, स्वादमानः–त्रयो रसग्रहीतरि। स्वात्, स्वादनम्, स्वादिः, स्वादुः, स्वादनीयम्–पञ्च आस्वादने। स्वर्दते–लेढि। स्वर्दकः, स्वर्दमानः–द्वौ लेहके (चाटने वाले में)। स्वर्दिः, स्वर्दनम्, स्वर्द-नीयम्–त्रयो लेहनकर्मणि (चाटने में)।

३८९. उर्द माने क्रीडायां च—परिमाणे, क्रीडायाम्, चाद्यास्वादने। उर्दते[1]–माति (मापता है) क्रीडति, आस्वदते। उर्दः, उर्दकः, उर्दमानः–त्रयो–मापके (मापने वाले में)। उर्दनं, उर्दनीयम्, उर्दः–त्रयो माने, क्रीडने, आस्वादने च। उर्दुः[2]–माषाणां दालः[3]।

३९०. कुर्द खुर्द गुर्द घुर्द क्रीडायामेव—कुर्दते–क्रीडति। कुर्दः, कुर्दकः कुर्दमानः–त्रयः क्रीडके। कुर्दः, कुर्दुः, कुर्दनीयम्–चत्वारोः क्रीडने। खुर्दते–क्रीडते। खुर्दः, खुर्दकः, खुर्दमानः—त्रयो नटे। गुर्दते–नृत्यति। गुर्दः, गुर्दकः, गुर्दमानः–त्रयो नर्तके। गुर्दम्–गुदम्। गुर्दा–वृद्धा गौः, काकः। गुर्दनम्, गुर्दनीयम्, गुर्दिः–त्रयो नर्तने। घुर्दते–ध्वनिं करोति। घुर्दः, घुर्दकः, घुर्दमानः–त्रयः शब्दकर्तरि। घुर्दः (?) घुर्दा, घुर्दनम्–त्रयो मेघशब्दे।

३९१. षूद क्षरणे—अस्वीकारे। सूदते–न स्वीकरोति। मधुसूदनः–विष्णुः। सूदकः, सूदमानः, सूत्—त्रयोऽस्वीकर्तरि। सूदनीयम्, सूदयम्, सूदि—त्रयो-ऽस्वीकारे।

३९२. ह्लाद अव्यक्ते शब्दे—अस्पष्टध्वनौ, मेघध्वनौ। ह्लादते–मेघः

१. उर्दते, उर्दः आदिषु दीर्घत्वं कथं न भवतीति न व्यक्तं भवति। एवं कुर्दादिधातु-रूपेष्वपि। पाणिनीयास्तु 'र्वोरुपधाया दीर्घ इकः, हलि च' (८।२।७६, ७७) इति दीर्घत्व-मामनन्ति।

२. माषाणां वाचकस्य 'उर्द' अथवा 'उड़द' शब्दस्येदमेव मूलम्।

३. दल विदारणे इत्यस्मात् घञि साधु।

शब्दयति । ह्लादः–मेघः । ह्लदिनी–मेघध्वनिः । ह्लादकः–मेघः शब्दकर्ता । ह्लादिः, ह्लात्, ह्लादनम्, ह्लादनीयम्, ह्लादमानम्, ह्लाद्यम्–षडेते मेघध्वनौ ।

३९३. ह्लादी सौख्ये च—मेघध्वनौ, सुखे च । ह्लादते–मेघो ध्वनति । ह्लादकः, ह्लादमानः– द्वौ सुखभोक्तरि । प्रह्लादः, विह्लादः, सुह्लादः, निह्लादः–चत्वारो हिरण्यकशिपुपुत्राः । ह्लात् , ह्लादिः, ह्लादनम् , ह्लादनीयम्–चत्वारो मेघध्वनौ सुखे च ।

३९४. पर्द कर्द गर्द शर्द कुत्सिते शब्दे—निन्दिते शब्दे । पर्दते–निन्दितं शब्दयति । पर्दकः, पर्दमानः–द्वौ निन्द्यशब्दके । पर्दुः–पक्षिविशेषः । पर्दिः, पर्दनम्, पर्दनीयम्,–निन्दिते शब्दे । पर्दमानः–निन्द्यशब्दकर्ता । कर्दते–फेनः संहतो भवति (फेन ऊपर जमता है) । कर्दम्–पङ्कः । यक्षकर्दमम्–सुगन्धि-द्रव्यम् । कर्दमः–ब्रह्मणः पुत्रः । कर्दलिः–वृक्षः । कर्दकः, कर्दमानः–द्वौ भीरुके । कर्दः, कर्दिः, कर्दनम्, कर्दनीयम्–चत्वारोऽपानवायुशब्दे । शर्दते–अपानं त्यजति । शर्दकः, शर्दमानः– द्वौ अपानस्य मोक्तरि । शर्दिः, शर्दुः, शर्दनम्, शर्दनीयम्–चत्वारोऽपानत्यागे ।

३९५. यती प्रयत्ने—उद्योगे । यतते–कार्यं करोति । यत्नः, यत्नवान्, यतमानः–त्रय उद्योगकर्तरि । यतिः–ऋषिः । यातना–पीडा । यतनीयम् , यत्, यत्यम्, यात्यम्–चत्वार उद्योगे ।

३९६. युतृ जुतृ[1] भाषणे—शब्दने । योतते–वदति । योतः, योतकः योतमानः—त्रयो वदितरि । योतनम्, युतिः, योतनीयम् , योत्यम् , यौत्यम् , युत् षडेते–भाषणे । जोतते–वदति । जोतकः, जोतः, जोतमानः–त्रयो वदितरि । जोतनम् , जौत्यम् , जुतिः, जोतनीयम्, जुत् , जोत्यम्, जौत्यम्–षडेते भाषणे ।

३९७. वीथृ वेथृ याचने—भिक्षणे । वीथते–भिक्षते । वीथः, वेथकः,[2] वेथमानः–त्रयो भिक्षुके । वीथ् , वीथिः, वेथनम्, वेथनीयम्, वेथ्यम् वैथ्यम्–षडेते भिक्षणे । वीथी, वीथिका–द्वौ मार्गे । वेथते–भिक्षयति ( ? ) । वेथः, वेथकः, वेथमानः–त्रयो याचके । वेथ् , वेथिः, वेथनम्, वेथनीयम् , वेथ्यम्, वैथ्यम्–षड्याचने ।

---

१. युतृ जुतृ द्वयोः पृथक् निर्देशोऽन्यत्र यकारस्य जत्वानापत्तौ लिङ्गम् ।

२. 'वेथकः' इत्यादिषु दीर्घोपधस्य कथं गुण इति न ज्ञायते । इह १।११२ धातुसूत्र-टिप्पण्यपि द्रष्टव्या ( पृष्ठ १५, टि० १ )

३९८. णाधृ णाथृ उपतापाश्चर्यशीःपु च—शासने आश्चर्ये [ आशिषि ] चाद् याचने च । नाधते–शास्ति । नाधः, नाधकः, नाधमानः–त्रयः शासके । नाधा–शासिका । नाध्, नाधिः, नाधनम्, नाधनीयम्, नाध्यम्–पञ्चैते शासने । नाथते[1]–रक्षति । नाथः, नाथकः, नाथमानः–त्रयो राजनि । नाथ्, नाथिः, नाथनम्, नाथनीयम्, नाथ्यम्–पञ्च प्रभुतायाम् ।

३९९. श्रृथि ( ?; श्रथि ) शैथिल्ये—शिथिलतायाम् । श्रन्थते–शिथिलो भवति । श्रन्थः, श्रन्थकः, श्रन्थमानः–त्रयः शिथिले । श्रन्थिः, श्रन्थनम्, श्रन्थनीयम्, श्रन्थ्यम्–चत्वारो शैथिल्ये ।

४००. ग्रथि वकि कौटिल्ये—कुटिलतायाम् । ग्रन्थते–सन्दभ्नाति ( ग्रन्थं लिखति ) । ग्रन्थः, ग्रन्थकः, ग्रन्थमानः–चत्वारः सन्दर्भलेखके । ग्रन्थिः, ग्रन्थनम्, ग्रन्थनीयम्, ग्रन्थम्, ग्रन्था–पञ्चैते सन्दर्भे । वङ्कते–वक्री भवति । वङ्कः, वङ्ककः, वङ्कमानः–त्रयः कुटिलगन्तरि । वङ्किः–वक्रम् । वङ्कनम्, वङ्क्यम्–त्रयः कौटिल्ये । वङ्का, वङ्किः–द्वौ नगरे ।

४४१. कत्था श्लाघायाम्—प्रशंसायाम् । कत्थते–प्रशस्यो ( योग्यो ) भवति । कत्थः, कत्थकः कत्थमानः–त्रयः प्रशंसके ( योग्ये ) । कत्थिः, कत्थनम्, कत्थनीयम्, कत्थ्यम्, कत्था–त्रयः प्रशंसने ।

४०२. सीक सेचने—घर्षणे । सीकते–घर्षयति । सीकः, सीककः, सीकमानः–त्रयो घर्षके । सीक्, सीकिः, सीकनम्, सीकनीयम्, सीक्यम्–पञ्च घर्षणे । सीका–शीका । सीकुः–शर्करा ( गिट्टी ) ।

४०३. लोकृ लोचृ[2] दर्शने—लोकते–पश्यति । लोकः, लोककः, लोकमानः–त्रयो द्रष्टरि । लोकः, लोकिः लोकनम्, लोकनीयम्, लोक्यम्–पञ्च दर्शने । लोचते–पश्यति । लोचः, लोचकः, लोचमानः–त्रयो द्रष्टरि । लोचः, लोचिः, लोचनम्, लोचनीयम्, लोच्यम्–पञ्चैते दर्शने । लोचुः–नग्नं शिरः ( कोशरहितः ) ।

४०४. श्लोकृ संघाते—सहभावे । श्लोकते–सहगच्छति । श्लोकः, श्लोककः, श्लोकमानः—त्रयः सार्थे । श्लोक्, श्लोकिः, श्लोकनम्, श्लोक्यम्–चत्वारः सहभावे ।

---

१. इह 'आशिषि नाथः' ( वा० १।३।२१ ) इव न कश्चिदात्मनेपदनियम इति प्रतीयते।

२. लोकृ लोचृ द्वयोर्धात्वोः पाठात् कवर्गवन्तश्चवर्गवन्तश्च स्वतन्त्राः समानार्थका शब्दाः इति विज्ञायते ।

४०५. ट्रेकृ ध्रेकृ शब्दोत्साहयोः—ध्वनौ उत्साहे च। शब्दोत्साहे इति पाठान्तरम्। तस्यार्थः—अस्पष्टार्थके वाक्ये )। ट्रेकते—ध्वनयति। ट्रेकः, ट्रेककः, ट्रेकमानः—त्रयोऽस्पष्टार्थवाक्यस्य वक्तरि। ट्रेक्, ट्रेकः, ट्रेकनम्, ट्रेकनीयम्, ट्रेक्यम्—पञ्चास्पष्टार्थके वाक्ये। ध्रेकते—स्पष्टं वदति। ध्रेकः, ध्रेककः, ध्रेकमानः—त्रयः स्पष्टवक्तरि। ध्रेक्, ध्रेकिः, ध्रेकनम्, ध्रेकनीयम्, ध्रेक्यम्—पञ्च स्पष्टे वाक्ये।

४०६. एकृ शकि शङ्कायाम्—विचारे। एकते—विमृशति। एकः, एककः, एकमानः—त्रयो विमर्शके। एक्, एकिः, एकनम्, एक्यम्—चत्वारो विचारे। शङ्कते—विचारयति। शङ्कः, शङ्ककः, शङ्कमानः—त्रयो विचारके। शङ्किः, शङ्कनम्, शङ्कनीयम्, शङ्क्यम्—चत्वारो विचारे शङ्कायां च। शङ्कः—शङ्कमानः। शङ्का—विचारः, मारः।

४०७. अकि लक्षणे—परिचये। अङ्कते—परिचिनोति। अङ्कः—परिचयः, उत्सङ्ग ( क्रोडः—गोद इति भाषायाम् )। अङ्कालयाम्बा—गुरुनाथस्य पत्नी। अङ्ककः, अङ्कमानः—द्वौ परिचायके। अङ्किः, अङ्कुः, अङ्कनम्, अङ्कनीयम्, अङ्कितम्, अङ्क्यम्—षड् लक्षणे।

४०८. मकि मण्डने—भूषणे। मङ्कते—भूषयति। मङ्कः, मङ्ककः, मङ्कमानः—त्रयो भूषयितरि। मङ्किः—उष्ट्रः। मङ्कुः—प्रमत्तवेशधारी संन्यासी। मङ्करी, मङ्कणी—द्वौ ( ? )। मङ्क्यम्, मङ्कनम्, मङ्कनीनम्—त्रयो भूषणे।

४०९. कक वक्क कर्क लौल्ये—संचारे ( ? )। ककते—संचरति। काकः—ध्वाङ्क्षः, राक्षसः। काकुः—दुःखम्, भयम्। कक्, ककिः, ककुः, ककनम्, ककनीयम्, कक्यम्, काक्यम्—सप्तैते संचारे। ककः, काककः, ककमानः—त्रयः संचारके। वक्कते—भ्रमति। वक्कः—संन्यासी, भ्रमणशीलः ( घुमक्कड़ ), वक्कमल्लेश्वरश्च। वक्का—रज्जुः। वक्कुः—( ? )। वक्किः, वक्कनम्, वक्कनीयम्, वक्यम्, वाक्यम्—पञ्च संचारे। वक्ककः, वाक्ककः[1] वक्कमानः—संचारी। कर्कते—कठोरतामाचरति। कर्कः—कण्टकः। कर्कं धुनोति ( = कण्टकं सहते) कर्कन्धुः—वृक्षविशेषः। कर्का—( ? )।

४१०. कुक कुक्क कुर्क वृक वृक्क अर्क अलर्क मर्क अग जग मग वग आदाने—ग्रहणे। कोकते—नयति। कोकः—एतन्नामा पक्षी। कोकिलः—पिकः। कोककः, कोकमानः—द्वौ ग्रहीतरि। कुक्, कुकिः, कोकनम्, कोक्यम्,

१. अनुपधस्याप्यकारस्य कथं वृद्धिरिति न ज्ञायते।

फोकनीयम्–ग्रध्येते ग्रहणे। कुक्कते–भक्षति। कुक्कः–श्वा, पक्षिविशेषः, दत्तस्य प्रतिग्राहकः। कुक्क-(?)। कुक्कवः, कुक्कमानः–द्वौ बलाद् ग्रहीतरि। कुर्कते–ददाति। कुर्कुरः–कुक्कुरः। वर्कते–निकृन्तति। वृकः–वृकासुरः, वृकः (भेड़िया)। वर्कते–कूर्दते। वर्करः–अजः, राक्षसः। वर्करी–अजा। अर्कते–प्रकाशते। अर्कः–सूर्यः, वृक्षविशेषः ('आक' इति प्रसिद्धः)। अलर्कते–भषते। अलर्कः श्वा, राजा। मकते–कूर्दते। मर्कः, मर्कटः–वानरः। अगते–पिबति। पुल्यगिभ्यामस्त्योऽस्तिश्च[1]–पुल अग आभ्यां धातुभ्यां अरत्योऽस्तिश्च प्रत्ययो भवति।[2] अगस्त्यः, अगस्तिः–द्वौ मित्रावरुणयोरपत्ये। आगा, आगर्–पानम्। जगते–चर्वते। जगलिः–उपमम्, विधुरो वा। जागुः–प्लुतगमनम्। जागम्–स्थानम्। जगिः–चर्वणम्। जाग्यम्–जागरितम्। मगते–क्रीडते। मगः–पुत्रः। मगा–हस्तभाजनम्। मागी–शीतः। वगते[3]–वहति। वागुः–नदी। वागता (?)–जीवनम्।

४११. चक चक्क चर्क तृप्तौ प्रतिघाते च—शीते, प्रतिमारणे, ताडने, चलने। चकते–चलति। चकोरः–गतनामा पक्षी। चक्रम्–रथाचक्रम्। चकितम्–भीतम् (भयम्)। चकः, चकमानः–द्वौ भीरौ। चाकः, चाकिः, चाकलः–त्रयो रजके। चकः, चांदः, चकनम्, चकनीयम्, चक्यम्, चाक्यम्–पद शीतीभावे। चक्कते–उन्मृदयति (घुलाता है)। चक्कः चेक्कुः (?, चक्कुः)–कर्पाससंघाते। चेक्क–(?)। चक्कवः, चक्कमानः–द्वौ धावके (?)। चर्कते–प्रतिघातयति, ताडयति। चर्कः, चर्कमाणः, चर्ककः–प्रतिघातके। चर्किः, चर्कणम्, चर्कणीयम्, चर्क्यम्, चार्क्यम्–पञ्च प्रतिघाते।

४१२. धकि विकि विधि ध्वकि त्रकि कुकि वेकि ढौकृ श्रौकृ ष्वष्क पुष्क णिष्क वष्क वष्क मष्क मुष्क तिकृ टिकृ[4] टीकृ सीकृ लेकृ श्रेकृ चिक्कृ[5] श्रेखृ सृ शक्वृ स्त्रकि श्रकि श्लिकि[4] विकि[4] श्लकि ढलकि ल्घि रघि लघ[6] रघ[6] लिघि रिघि गतौ—वङ्कते–

---

1. अरामस्तनिर्देशो यथासंख्याभावाय। तेनोभाभ्यां धातुभ्यामुभौ प्रत्ययौ भवतः।
2. इतोऽग्रे 'पोलति चूषयति पुलस्त्यः, पुलस्तिः,–द्वौ ब्राह्मणः पुत्रे' इत्यधिकः पाठः। अयं चेद् सूत्रानुरोधात् पठितः, नेहास्य प्रसंगः, पुलधातोरत्रादर्शनात्। पुलस्त्यः, पृ० ३५ द्र०।
3. पञ्जाबीभाषायां 'वगना' क्रियाऽस्यैवापभ्रंशः।
4. अयं धातुरन्यथा व्याख्यायते वृत्तौ।
5. चिक्क शेलृ सृ शवकृ–एषां चतुर्णामृकारो नानुबन्धः।
6. एतौ दण्डकान्ते व्याख्यायेते।

उत्पाटयति । कङ्कः–जटायुः । कङ्काळः–पृष्ठम् ( अस्थिपञ्जरम् )। कङ्करिः–वृद्धः । कङ्कणम्–कटकम् । विङ्कते–नश्यति । विङ्किः–मत्तः ( मदयुक्तः ) । विङ्कः–मदम् । कलं विङ्कते–अल्पं ध्वनयति कलविङ्कः–'गुटगुटी' इति भाषायाम् ( कोशेषु चटकादिपक्षिविशेषाः, सम्पा० ) । स्वङ्कते–गच्छति । स्वङ्कः–हंसः । वङ्कते–वक्रो भवति । वङ्कः–उग्रः । कुङ्कते–दुर्गन्धम् ( ?, सुगन्धम् ) आगच्छति । कुङ्कुमः–केशरः । कुङ्किः–( ? ) । कुङ्कुणः–एतन्नाम नगरम् । कुङ्कुलम्–पार्श्वम् । वेङ्कते–मन्थनस्य रज्जुर्भवति । वेङ्कटः–मन्थनरज्जुः, शेषाद्रिः । ढौकते–शब्दयति । ढौका–नदी । त्रौकते–( क्षेत्रादिषु पतति ) । त्रौकः–सस्यविनाशकः 'टिड्डी' नामा क्षुद्रप्राणी । पुष्कते–पिबति । पुष्कलम्–समूहः ( भीड़ ) । निष्कते–वहति । निष्कम्–एतन्नाम्नी मुद्रा । चष्कते–भषति । चाष्कलः–भषकः । वष्कते–शपथं गृह्णाति । वष्कलः–शपथग्रहीता । मष्कते–त्यजति । मष्करिः–विरक्तः । मुष्कते–घर्षयति । मुष्कः–वृषणम् ( अण्डम् ) । तेकते–( डकार आता है ) । तेकः–( डकार लेने वाला ) । तेकुः, तेकी–( डकार ) । तिकुरः–भ्रमणशीलं वस्तु । टीकते[1]–क्रीडति । टीकः[1]–शाकादीनां मुष्टिः ( गड्डी–भाषायाम् ) पक्षी । टीकते–वर्णयति[2] । टीकुरः–वर्णयिता । टीका, टीकुः–वर्णनम् । सीकते–कूर्दते । सीकरः–जलबिन्दुः । सेकते–वर्षति । सेकरः–[ बीजादीनां ] वापकः । श्रेकते–( ? ) । श्रेकरः–( ? ) । चिकरते[3]–पल्लवितो भवति । चिकरः–पल्लवम्, केशाः । शेखरते–संगृह्णाति ( जमा करता है ) । शेखरः–संग्राहकः–(जमा करनेवाला ) । खरते–प्रकाशयति । खरः–एतन्नामासुरः, सूर्यरश्मिः । शक्करते–वृषभ इव शब्दयति । शक्करः–वृषभः । शक्करी–गौः, छन्दोविशेषः । सङ्कते–प्रवहति । सङ्कः–जलम् । श्रङ्कते–वपति । श्रङ्कः–वप्ता । [ खिङ्कते–... । विङ्कते–... ] । स्लङ्कते–अन्तर्गच्छति । स्लङ्कः–कीलकम् । श्लङ्कते–सीव्यति । श्लङ्कः–सूचिका ( सूई ) । लङ्घते–कूर्दते । लङ्घकः, लङ्घमानः–द्वौ कूर्दितरि । लङ्घिः, लङ्घः, लङ्घनम्, लङ्घनीयम्, लङ्घ्यम्, पञ्च–अल्पभार । रङ्घते–कूर्दते । रङ्घकः, रङ्घमानः–द्वौ कूर्दितरि । रङ्घिः, रङ्घः, रङ्घणम्, रङ्घणीयम्, रङ्घ्यम्–पञ्च कूर्दने । लिङ्घते–नृत्यति । लिङ्घकः, लिङ्घमानः–द्वौ नर्तके । लिङ्घिः, लिङ्घः, लिङ्घनम्, लिङ्घनीयम्, लिङ्घ्यम्–पञ्च नर्तने । रिङ्घते–अवनतो भवति ( झुकता है ) । रिङ्घकः,

---

१. टिकृ-धातोष्टेकते, टेकः इति पाठेन भाव्यम् । टीकतेरत्वग्रे व्याख्योपलभ्यते ।

२. वर्णनमिह व्याख्यानमभिप्रेतम् ।

३ चिकृ, शेखृ, खृ, शक्कृ धातूनामृकारो नानुबन्धः, अन्येषां लृकारोऽनुबन्धरूपः । कथमत्र वैषम्यमिति नोक्तं वृत्तिकृता ।

रिङ्घमाणः—द्वा अवनन्तरि । रिङ्घः, रिङ्घिः, रिङ्घणम्, रिङ्घणीयम्, रिङ्घ्यम्—पञ्च अवनमने । लघते[१]—अल्पभारवान् भवति ( हलका होता है ) । लघकः, लघमानः—द्वौ अल्पभारयुते । लघः, लघुः, लघनम्, लघनीयम्, लघ्यम्—पञ्च लघुनि । रघते—शास्ति । रघुः—सूर्यवंशी राजा । रघिः, रघः, रघणम्, रघणीयम्, रघ्यम्—पञ्च शासने ।

४१३. अघि अघ वघि वघ गत्याक्षेपे—गतिव्यवरोधे । अङ्घते—वैकल्येन गच्छति ( लंगड़ाता है ) । अङ्घकः, अङ्घमानः—द्वौ पादविकले । अङ्घिः, अङ्घः, अङ्घुः अङ्घनम्, अङ्घनीयम्, अङ्घ्यम्—षट् गतिवैकल्ये । अघते—पतति । अघकः, अघमानः—द्वौ स्खलितरि । अघम्, अघी, अघू, अघनम्, अघनीयम्, अघ्यम्—षट् स्खलने ( गिरने में ) । वङ्घते—स्खलति । वङ्घकः, वङ्घमानः—द्वौ स्खलितरि । वङ्घः, वङ्घी, वङ्घू, वङ्घनम्, वङ्घनीयम्, वङ्घ्यम्—षट् स्खलने । वघते—उत्तिष्ठति । वघकः, वघमानः—द्वौ उत्थातरि । वघम्, वघी, वघू, वघनम्, वघनीयम् वघ्यम्—षट् उत्थाने ।

४१४. मघि मघ कैतवे च—खनने, गतिविघ्ने च । मङ्घते—खनति । वङ्घकः, वङ्घमानः—द्वौ खनितरि । मङ्घम्, मङ्घी, मङ्घू, मङ्घनम्, मङ्घनीयम्, मङ्घ्यम्—षट् खनने । मघते—ऐश्वर्यवान् भवति । मघवन्—देवेन्द्रः । मघकः, मघमानः—द्वौ धनिनि । मघम्[२], मघी, मघू, मघनम्, मघनीयम्, मघ्यम्—षट् ऐश्वर्ये । मघा—एतन्नाम नक्षत्रम् । माघः—मासविशेषः ।

४१५. राघृ लाघृ सामर्थ्ये—शक्तौ । राघते—समर्थो भवति । राघः, राघकः, राघमानः—त्रयः, समर्थे, ज्ञानिनि । राघिः, राघुः, राघणम्, राघणीयम्, राघ्यम्, राघरम्—षट् सामर्थ्ये ज्ञाने च । लाघते—प्राप्नोति । लाघरते[३]—प्राप्नोति । लाघः, लाघकः, लाघरः, लाघमानः—चत्वारः प्रापितरि । लाघिः, लाघुः, लाघनम्, लाघनीम्, लाघ्यम्, लाघनम्[४]—षट् प्राप्तौ ।

---

१. लघ, रघ धातू सन्नपाठे लघिरघिभ्यामुत्तरं पठ्येते ।

२. 'मघमिति धननामधेयम्, मंहतेर्दानकर्मणः' इति निरुक्तम् ( १।७ ) अर्थप्रदर्शनपरम्, न व्युत्पत्तिनिदर्शनपरम् ।

३. किं लाघधातोर्ऋकारो नानुबन्ध इति पक्षान्तरमुपन्यस्यतं वृत्तिकृता ? एवं राघधातोः कृदन्तेषु 'राघरः' पदमपि द्रष्टव्यम्, लाघधातौ च लाघरम् । अपि च 'राघरम्' भावे प्रयुक्तम्, लाघरस्तु कर्तरि । भेदोऽयं कथमिति न ज्ञायते ।

४. लाघनम् इहैव पूर्वं निर्दिष्टम्, पुनर्निर्देशः पाठाशुद्धिं द्योतयति । अन्यथा 'पञ्च' इत्येव ब्रूयात् ।

४१६. द्राघृ आयासे—पीडायाम् ऋजुभावे च। द्राघते—पीडितो भवति, ऋजु भवति। द्राघकः, द्राघगः, द्राघमाणः—त्रयः सूचके। द्राघूया—ऋजुः। द्राघम्, द्राघि, द्राघु, द्राघनम्, द्राघनीयम्, द्राघ्यम्—षट् सूचने, ऋजुभावे च।

४१७. श्लाघृ कत्थने—उत्कर्षे। श्लाघते—प्रशंसायोग्यो भवति। लाघ्यः, श्लाघकः, लाघमानः—त्रयः पूज्ये। श्लाघम्, श्लाघि, श्लाघु, श्लाघनम्, श्लाघनीयम्—पञ्च पूजायाम्।

४१८. षच सेचने—घर्षणे। सचते—घर्षयति। सचकः, सचमानः, सक्तुः—घर्षयितरि। सचि, सचु, सचम्, सचनम्, सचनीयम्, सच्यम्—षडेते घर्षणे।

४१९. शच व्यक्तायां वाचि—स्पष्टवाक्ये। शचते—स्पष्टं वदति। शचिः (शची)—इन्द्राणी। शचम्, शचि, शचु, शचनम्, शचनीयम्, शच्यम्—षट् स्पष्टवचने।

४२०. कच बन्धने—कचते—बध्नाति। कचः—केशः। काचम्—दर्पणम्। काचुः[1]—ताम्बूलस्यैकं साधनम्। कचि, कचु, कचनम्, कचनीयम्, कच्यम्—पञ्च बन्धने। काचिः—तृणम्। काचकः, काचमानः (१, कचमानः)—बन्धनकर्तरि।

४२१. मच मचि कल्कने—ऋणप्रदाने। मचते—ऋण ददाति। मचम्, मचि, मचु, मचनम्, मचनीयम्, मच्यम्—षट् ऋणप्रदाने। माचकः,—रजकः, कायः, संन्यासी, ऋणदाता। माची—पर्णम्, देवकन्या, शरीरम्। मञ्चते—बध्नाति, धारयति। मञ्चुः—हिमम्। मञ्चिः—रत्नम्। मञ्चः—खट्वा। मञ्चिका—मञ्चः (मचान)। मञ्चकः, मञ्चमानः—द्वौ धारके, परिधारयितरि। मञ्चनम्, मञ्चनीयम्—द्वौ धारणे।

४२२. मुच मुचि धारणोच्छ्रायपूजनेषु—घर्षणे, ऐश्वर्ये, पूजायाम्। मोचते—घर्षयति। मोचकः—मेघः, वृक्षविशेषः, संन्यासी। मोचिः—विधवा। मुचुः—मुचुकुन्दो राजा। जलमुक्—मेघः। मोचनम्, मोचनीयम्, मोच्यम्, मुक्तम्, मुक्तिः—पञ्च पूजायाम्। मुक्ता—जलजः ('मोती' इति भाषायाम्)।

---

१. किं पञ्जाबी भाषायां लवितरि ( चाकू अर्थ में ) प्रयुज्यमानः 'काचु' शब्दोऽस्मादेव धातो निष्पन्नः ? तथा सति हिन्दीभाषायां प्रयुज्यमानः 'चाकु' इति तस्यैव वर्णव्यत्ययेन निष्पन्नो विकारः स्यात्।

मुञ्चते–पूजनीयो भवति । मुञ्चः, मुञ्चकः, मुञ्चमानः–त्रयः पूज्ये । मुञ्चुः–पूर्वजः । मुञ्चिः, मुञ्चनम् , मुञ्चा, मुञ्चनीयम्–चत्वारो महति ।

४२३. पच पचि व्यक्तीकरणे—प्रकाशने । पचते–जीर्णो भवति । पचः, पक्, पचकः, पाचकः, पचमानः–पञ्च जीर्णभवितरि । पचिः, पचुः, पच्यम् , पचनम् , पाचनम् , पाचुः, पाचनीयम्—सप्तैते व्यक्तीकरणे । पञ्चते–व्यवहरति । पञ्चकः–व्यापारी । पञ्चा–गृहस्य चतसृषु दिक्षु भवः स्थानविशेषः (बरांडा, बरण्डा इति वा भाषायां प्रयुज्यमानः) । पञ्चम्–अपूर्वम् । पञ्ची–'थैला' इति प्रसिद्धम् । पञ्चालः–देशविशेषः । पञ्चकः, पञ्चमानः–द्वौ व्यावहारिके । पञ्चनम् , पञ्चनीयम्–द्वौ व्यवहारे ।

४२४. ष्टुच प्रसादे—प्रसन्नतायाम् । स्तोचते–प्रसन्नो भवति । स्तुक् , स्तोचः, स्तोचकः, स्तोचमानः–चत्वारः प्रसन्ने । स्तोचनम् , स्तोचनीयम्, स्तोच्यम्–त्रयः प्रसादे ।

४२५. श्वच श्वचि इज ईजी ऋज पर्ज ऊर्ज गतौ—श्वचते–चलति । श्वक् , श्वचकः, श्वचमानः–त्रयश्चलितरि । श्वचिः, श्वचुः, श्वचनम्, श्वचनीयम्, श्वच्यम्–पञ्च चलने । श्वञ्चते–धावति । श्वञ्चकः, श्वञ्चमानः–द्वौ धावके । इजते[1]–समयं जानाति । ऋत्विक्–ऋतुकालज्ञः । इजकः, इक् , इजमानः–त्रयो निपुणे । इजिः, इजनम् , इजनीयम्, इज्यम्, इज्या–पञ्च प्रस्तुतपूजायाम् । ईजते–चलति । ईक् , ईजकः, ईजमानः–त्रयो गन्तरि । ईजिः, ईजुः, ईजनम्, ईजनीयम् , ईज्यम्–पञ्च चलने । ऊर्जते–समर्थयति । ऊर्क् , उर्जकः, ऊर्जमानः–त्रयः समर्थे । ऊर्जिः, ऊर्जुः, ऊर्जम् , ऊर्जनम्, ऊर्जितम्, ऊर्जनीयम् , ऊर्ज्यम्–सप्तैते सामर्थ्ये । अर्जते–समाहरति । ऋक्–वेदः, रोगः । ऋजकः, ऋजमानः–द्वौ सत्यवति । ऋजः, ऋजि, अर्जनम् , अर्जनीयम् , आर्जनम्, आर्ज्यम् , अर्ज्यम्–षट् (?, सप्त) ऋजुत्वे । सर्जते–त्यजति । सर्जः, सर्जकः, सर्जमानः–त्रयस्त्यक्तरि । सर्ज्यः–सिंहः (?) । सर्जनम् , सर्जनीयम् , सर्जिः, सर्जुः, सर्गः–पञ्च त्यागे । सर्जरसः–धूपवृक्षः ।

४२६. ऋजि भृज भर्जने—[ भ्राष्ट्र ]पाके । ऋञ्जते–पचति (सेकता है) । ऋञ्जकः, ऋञ्जमानः–पाचकः ( भर्जकः ) । ऋञ्जनम् , ऋञ्जम् , ऋञ्जनीयम् , ऋञ्जिः, ऋञ्जुः–पञ्च भर्जने । भर्जते–ज्वलयति (पाचयति) । भृक् , भर्जकः, भर्गः, भर्जमानः–चत्वारः पक्तरि । भर्जिः–शुक्तम् । भृजिः, भृजुः, भुक्तिः (?), भुक्तम् (?)

---

[1] तिङि कृदन्तेषु च गुणः कथं नेति न ज्ञायते ।

भर्जनम्, भर्जनीयम्, भर्ज्यम्, भार्ज्यम्, भृष्टम्, भृष्टिः—दश पचने (सेकने में)।

४२७. चर्च, कचि, भ्रेजृ, एजृ, भ्राजृ दीप्तौ—प्रकाशे। चर्चते—शक्नोते। चर्चकः, चर्चमानः—शक्तिः। चर्चा—गौरी, शक्तिः। मं चर्चते मचर्चा, मचर्चिका—द्वौ प्रशस्तवाचकौ। चर्चम्, चर्चिः, चर्चुः, चर्चनम्, चर्चनीयम्, चर्च्यम्—षट् विचारणे। कञ्चते—प्रकाशति। कञ्चि—एकाम्रनाथस्य नगरम्। कञ्चिः कञ्चवालम्—द्वौ लोध्रवृक्षे। कञ्चीदाम—आभरणम्। काञ्चनम्—सुवर्णम्। कञ्चकः, कञ्चमानः—द्वौ प्रकाशितरि। एजते—प्रकाशते। एक, एजकः, एजमानः—त्रयो महति दीपके। एजिः, एजुः, एजनम्, एजनीयम्, एज्यम्, ऐज्यम्—षट् प्रकाशे। भ्रेजते—अल्पं प्रकाशते (टिमटिमाता है)। भ्राजकः, भ्राजमानः—द्वौ प्रकाशितरि। भ्राट्, भ्राजिः, भ्राजुः, भ्राजनम्, भ्राजनीयम्, भ्राज्यम्—षट् प्रकाशे।

४२८. तितिक्ष[1] शातने क्षमायां च—तीक्ष्णीकरणे, सहने, प्रकाशने च। तितिक्षते—तीक्ष्णीकरोति, सहते, प्रकाशते। तितिक्षकः, तितिक्षमाणः—द्वौ तीक्ष्णीकर्तरि, सोढरि, दीपयोढरि। तितिक्षिः, तितिक्षुः, तितिक्षणम्, तितिक्षा—चत्वारः सहने।

४२९. ष्वञ्ज परिष्वङ्गे—सहने (?)। स्वजते—धन्यवादं करोति (?)। स्वजकः[2] स्वजमानः—[द्वौ] धन्यवादस्य दातरि (?)। स्वजिः, स्वजुः, स्वजनम्—त्रयः सहने।

४३०. अदि अति क्रमहिंसयोः—क्रमे हिंसायां च। अन्दते—क्रमेण चलति, हिनस्ति वा। अन्दकः, अन्दमानः—क्रमेण चलितरि। अन्दुः—पूर्वकालः। अन्दुका—पादभूषणम्। अन्दः—सौन्दर्यम्। अन्दलम्, अन्दोलिका—शिविका। अन्दिः, अन्दनम्, अन्दनीयम्—त्रयः क्रमे। अन्तते—हिनस्ति। अन्तकः—

---

१. पाणिनीयास्तु 'गुप्तिज्किद्भ्यः सन्' (अ० ३।१।५) इत्यनेन सनि व्युत्पादयन्ति। 'तिजेः क्षमायाम् च' (वा० ३।१।५) इत्येवं चार्थं निर्दिशन्ति। काशकृत्स्नीयपाठेनास्य धातोरन्येषां च स्वार्थसन्नन्तानां प्रकृत्यन्तरत्वं द्योत्यते।

२. स्वजक आदिषु कृदन्तेषु अनुपङ्गलोपः कथमिति न व्यक्तीकृतं वृत्तिकृता। 'दंश दशने' (१।३७१) इत्यत्र 'अनुषङ्गलोपोऽनुनासिकानाम्' इत्यनेन 'दशति' इत्यत्रानुषङ्गलोपो दर्शितः। तथैवात्रापि 'स्वजते' इत्यत्र भाव्यम्, न तु कृदन्तेषु। पाणिनीयास्तु 'दंशसञ्जस्वञ्जां शपि' (६।४।२५) इति स्पष्टं शप्येवानुनासिकलोपमाचक्षते।

अन्तमानः—द्वौ हिंसके । अन्तुः—प्रकारवाक्ये (?) । अन्तम्—समाप्तिः । अन्तिः, अन्तरम्, अन्तनीयम्—त्रयो हिंसने ।

४३१. घुट्ट चलने—गतौ । घुट्टते—चलति । घुट्टः, घुट्टकः, घुट्टमानः—[त्रयो गन्तरि । घुट्टिः, घुट्टुः, घुट्टनम्, ] घुट्टनीयम्—चत्वारश्चलने ।

४३२. स्फुट विकसने—वृद्धौ विकासे वा । स्फोटते—श्वयति (फूलता है) । स्फोटकः, स्फोटमानः—द्वौ श्वयितरि (फूलने वाले में) । स्फोटकम्—'फोड़ा इति भाषायाम्', मत्स्यविशेषश्च । स्फुटम्, स्फुटितम्, स्फुटनम्, स्फुटनीयम्—चत्वारः श्वयथौ ।

४३३. चेष्ट चेष्टायाम्—व्यवहारे । चेष्टते—व्यवहरति (क्रियां करोति) । चेष्टकः, चेष्टमानः—द्वौ व्यवहर्तरि । चेष्टिः, चेष्टुः, चेष्टनम्, चेष्टा, चेष्टनीयम्—पञ्च चलनादिक्रियासु ।

४३४. योष्ट, लोष्ट,[1] हुडि, पिडि संघाते—सहभावे । योष्टते—सहभावं गच्छति । योष्टकः, योष्टमानः—द्वौ सार्थे । योष्टिः योष्टुः, योष्टम्, योष्टनम्, योष्टनीयम्—पञ्च सहभावे । [लोष्टते—...।] हुण्डते—पराजयते । हुण्डकः, हुण्डमानः—द्वौ पराजेतरि । हुण्डा, हुण्डिः—पराजयः । पिण्डते—पिबति । पिण्डकः पिण्डमानः—द्वौ पातरि । पिण्डम्—गर्भः, संघातः । पिण्डिः—'गठरी' इति भाषायाम् प्रसिद्धा, पिण्याकम् (तिलादीनां निष्पिष्टं तैलरहितं चूर्णम्) ।

४३५. अडि गतौ[2]—गमने । अण्डते—चलति । अण्डम्—कुक्कुटादीनां गर्भः ।

४३६. हिडि अनादरे च—तिरस्कारे चाद् गतौ च । हिण्डते—पीडयति । हिण्डकः, हिण्डमानः—द्वौ पीडयितरि । हिण्डा—गोमयः, कुक्कुटश्च । हिण्डम्—मदिरा, मदः । हिण्डिः—पिण्याकम् । हिण्डुः—समूहः ।

४३७. वठि एकचर्यायाम्—एकान्ते । वण्ठते—एकान्ते वसति । वण्ठः, वण्ठकः, वण्ठमानः—त्रय एकान्ते निवसितरि । वण्ठिः, वण्ठुः, वण्ठनम्, वण्ठनीयम्—चत्वार एकान्तक्रियायाम् ।

---

१. नायं धातुर्वृत्तौ व्याख्यायते ।

२. सर्गादौ प्रकृतेः परिणामभूतं यद्धिरण्यं महदण्डं समुदपद्यत, तद् आपरिपाकमाभेदनमप्सु पर्यप्लवत् प्रासर्पद्वा । तदुक्तम्—तासु (अप्सु) तप्यमानासु हिरण्यमाण्डं सम्बभूव । तदिदं..................यावत्संवत्सरस्य वेला तावत् पर्यप्लवत् । शत० ११।१।६।१–२॥ सोऽस्मिन्नन्धे तमसि प्रासर्पत । तां० १६।११॥ अस्य महदण्डस्योत्पत्तिसमकालमेव या गतिः समुदपद्यत सैव 'अण्डते' इत्याख्यातेनोच्यते ।

४३८. मठ (?, मठि) कठि शोके—दुःखे। मण्टते—दुःखितो भवति। मण्टः, मण्ठकः, मण्टमानः—त्रयो दुःखिनि। मण्ठिः, मण्ठुः, मण्ठा, मण्टनम्, मण्टनीयम्—पञ्च दुःखक्रियायाम्। कण्टते—शब्दं करोति। कण्टः—गलम्, लेखनी। कण्ठीरवः—सिंहः। कण्ठीमणिः—कण्टाहारः, कण्ठमणिः। कण्ठकः, कण्ठमानः—द्वौ शब्दकर्तरि। कण्ठिः, कण्ठुः, कण्ठनम्, कण्टनीयम्—चत्वारः शब्दने। विसकण्ठिका—बलाका।

४३९. मुठि पलायने—मुण्ठते—पलायते। मुण्ठः, मुण्ठकः, मुण्ठानः[१]—त्रयः पलायनकर्तरि। मुण्ठिः, मुण्ठुः, मुण्ठा, मुण्ठनम्, मुण्ठनीयम्—पञ्चैते तोडने (पलायने)।

४४०. हेठ एठ विबाधायाम्—स्थविरे (?, गत्यवरोधे)। हेठते—स्थिरो भवति (गत्यवरुणद्धि)। हेठः, हेठकः, हेठानः त्रयः—स्थिरे (गत्यवरोधकर्तरि)। हेठा—कुक्कुटीः। हेठिः, हेठुः, हेठनम्, हेठनीयम्—चत्वारः स्थविरे (स्थैर्ये)। एठते[२]—आत्वरति (आतुर होता है)। एठः, एठकः, एठानः—चत्वार आतुरे। एठुः—ताडनम्। एठनम्, एठनीयम्—द्वा आतुरतायाम्।

४४१. कुडि दाहे—वृपायाम् (?)। कुण्डते—दहते। कुण्डः, कुण्डकः, कुण्डानः—त्रयो दहनकर्तरि। कुण्डा—गुदा। कुण्डिः, कुण्डुः, कुण्डनम्, कुण्डनीयम्—चत्वारो दाहे।

४४२. वडि मडि वेष्टने—परिवेष्टने (लपेटने में)। वण्डते—परिवेष्टयति वण्डः, वण्डकः, वण्डानः—त्रयः परिवेष्टरि। वण्डा—लता, पाकः। वण्डिः, वण्डुः, वण्डनम्, वण्डनीयम्—चत्वारः परिवेष्टने। हलं मण्डते—तिलान् वपति हलमण्डिका—तिलभक्ष्यः। मण्डा—मण्डूकी, शिरः। मण्डोदरी—रावणपत्नी। मण्डा—शीकायः (?, शीकाकाई नाम्ना प्रसिद्धा, आमलकी वा)। मण्डिः—जानोरधोभागः। मण्डुः, मण्डूकः—प्राणिविशेषः (मेंढक)। मण्डनम्, मण्डनीयम्—द्वावाभरणे।

४४३. भडि परिभाषणे—गप्पकर्मणि[३], हास्ये। भण्डते—(ताना मारता

---

१. इत आरभ्य ज्ञानचो मुण्टनान-आदि शब्दानां स्थाने मुरहिता 'मुण्डान' आदिशब्दाः समुपलभ्यन्ते। तत्र केन नियमेन मुगाभाव इति न ज्ञायते।

२. भाषायां प्रयुज्यमाना 'ऐंठना' क्रिया 'एठ' धातोरेव विकारभूता। 'ऐंठना' क्रिययाऽपि कस्मिंश्चित् कर्मणि बाधा उत्पद्यत एव।

३. 'गप्प' शब्द विषये पूर्वत्र ४६ तमे पृष्ठे प्रथमा टिप्पणी द्रष्टव्या।

है )। भण्डः,[1] भण्डकः, भण्डानः–विकृतहास्यकर्तरि। भण्डिः–यानम् ( 'गाड़ी' इति प्रसिद्धा )। भण्डुः–पुष्पचूर्णम्, विकृतहास्यम्। भण्डनम्, भण्डनीयम्, भण्ड्यम्–त्रयो भषणे। भाग्यम् ( ?, भाण्ड्यम् )–उपहारः।

४४४. मुडि मज्जने—स्नाने। मुण्डते–निमज्जति ( डुबकी लगाता है )। मुण्डः–जलकुक्कुटः। मुण्डवासः–लघुवस्त्रम् ( 'रूमाल' इति प्रसिद्धम् )। मुण्डकः, मुण्डानः–द्वौ निमज्जितरि। मुण्डनम्, मुण्डनीयम्, मुण्डिः, मुण्डुः, मुण्ड्यम्–पञ्च जले निमज्जने।

४४५. त्रुडि त्रुड[2] त्रोडने—मारणे। त्रुण्डते–मारयति। त्रुण्डः, त्रुण्डकः, त्रुण्डाणः–त्रयो हन्तरि। त्रुण्डुः–तुण्डम् ( पक्षियों की चोंच )। त्रुण्डिः, त्रुण्डनम्, त्रुण्डनीयम्–त्रयो हिंसायाम्। [ त्रोडते–........ ]।

४४६. भुडि भरणे—परिधाने। भुण्डते–परिदधाति (पहनता है), स्वीकरोति। भुण्डः, भुण्डकः, भुण्डानः–त्रयः परिधातरि। भुण्डिः, भुण्डुः, भुण्डनम्, भुण्डनीयम्–चत्वार आभरणे, स्वीकारे।

४४७. चडि कोपे—क्रोधे। क्रुध्यति। चण्डः–राक्षसः। चण्डी, चण्डा, चण्डिका–त्रयो गौर्याम्, कोपाविष्टायाम्। चण्डमारुतः–झञ्झावातः। चण्डालः–कपिञ्जलमुनिगोत्रजश्चाण्डालः।

४४८. शडि रुजायाम्—पीडायाम्। शण्डते–पीडामनुभवति। शण्डः–नपुंसकः। शण्डिलः–मुनिः, ऋग्वेदशाखी। शण्डकः, शण्डमानः–पीडानुभवितरि। शण्डा, शण्डी, शण्डुः, शण्डनम्, शण्डनीयम्–पञ्च पीडने।

४४९. तडि तोडने—खण्डने। तण्डते–त्रोटते, खण्डयति। तण्डकः, तण्डानः–द्वौ खण्डयितरि। वितण्डः–हस्ती, कुतर्कः। तण्डुलः–ओदनप्रकृतिः (चावल)। तण्डकः–(चिमटा इति प्रसिद्धम्)। तण्डम्–संख्यायोगः। तण्डः–राजा, जिनमुनिः। तण्डा–लता। तण्डी–तृणम्, क्षेत्रैकदेशः ('क्यारी' इति प्रसिद्धः)। तण्डनम्, तण्डनीयम्, ताण्डवम्–त्रयो नृत्ये।

४५०. पडि गतौ—पण्डते–प्रसरति। पण्डकम्–प्रसरणशीलः। पण्डुः–फलम्। पण्डा–बुद्धिः। पण्डितः–विद्वान्। पण्डिः, पण्डनम्, पण्डनीयम्–त्रयचलने। पाण्ड्यः–एतन्नमा देशः, राजा। पण्ड्यम्–धान्योत्पत्तिः (?)। पण्डारः पण्डारि–द्वौ संचालके। पाण्डुः, पाण्डुरः–द्वौ श्वेतवर्णे, रोगे, राज्ञि।

---

१. अस्यैव अंशो हिन्दी भाषायां 'भांड' इति प्रयुज्यते।

२. अयं धातुर्नैव व्याख्यायते वृत्तौ।

४५१. कडि मदे—उन्मादे । कण्डते–मत्तो भवति । कण्डलः, कण्डकः, कण्डानः–त्रयो मत्ते । कण्डुः–चर्मरोगविशेषः ( खुजली ) । कण्डिः–छिद्रम् । कण्डिका–खण्डिका ( मन्त्रसूत्रादिसमूहविशेषः ) । काण्डम्–तीरम् , परिच्छेदः, विभागविशेषः ।

४५२. खडि मन्थे—अवहनने (कूटने में) । आखण्डते–सर्वत्र खण्डनं करोति । आखण्डलः–इन्द्रः । खण्डितः, खण्डकः, खण्डानः–त्रयः खण्डनकर्तरि । खण्डम्–अर्धम् । खण्डनम् , खण्डनीयम्, खण्डिः, खण्डुः–चत्वारः समभागे । खण्डेयम्–असिः ।

४५३. हेडृ होडृ अनादरे—तिरस्कारे । हेडते–बिभेति । हेडकः, हेडानः–कायरः[१] । हेडः–सोपानम् ( सीढ़ी इति भाषायाम् ) । हेडुः–'छत' इति भाषायाम् । हेडिः–कायरा । हेडनम् , हेडनीयम्–भये । होडते–हिंसयति ( असिना गात्रं विच्छेदयति ) । होडः, होडकः, होडानः–त्रयो गात्रविच्छेदके । होडिः–(?) । होडिका–भक्ष्यविशेषः । होडुः–(?) । होडा–ताडनम् । होडनम् , होडनीयम्–द्वौ कष्टप्रदाने ।

४५४. वाडृ आप्लावे ( ?, आप्लवे )—तरणे । वाडते–तरति । वाडम्–महानौका ( जहाज इति भाषायाम् ) । वाडकः, वाडानः–तरिता । वाडा–( ? ) । वाड् , वाडिः, वाडुः, वाडनम् , वाडनीयम्, वाड्यम्–षट् तरणे ।

४५५. द्राडृ ध्राडृ विशरणे—तक्षणे ( छीलने में ) । द्राडते–तक्षति । द्राड् , द्राडः, द्राडकः, द्राडानः–चत्वारस्तक्षके । ध्राडते–विभजति । ध्राड् , ध्राडः, ध्राडकः, ध्राडानः–चत्वारो विभाजके । ध्राडनम्, ध्राडनीयम्, ध्राड्यम्–त्रयो विभजने ।

४५६. शाडृ श्लाघायाम्—पूजायाम् । शाडते–पूज्यो भवति । शाड् , शाडः, शाडकः, शाडानः–चत्वारः पूज्ये । शाड्वलम्–( नवतृणबहुलो देशः ) । शाडिः, शाडुः, शाडनम् , शाडनीयम्–चत्वारो मान्ये ।

४५७. तिपृ ष्टेपृ ष्टिपृ शेपृ क्षरणे—तेपते–[सिञ्चति] । तेपकः, तेपानः–[ सिञ्चकः ] । तिप् , तिपिः, तेपुः, तेपनम्, तेपनीयम्–[ सेचने ] । तेपा–( ? ) । स्तेपते–[ क्षरति ] । स्तेपकः, स्तेपानः, स्तिप्ः, स्तिपितः, स्तेपः–पञ्च [ क्षरितरि ] । स्तेपनम्, स्तिपिः, स्तेपुः, स्तेपनीयम्–चत्वारः [ क्षरणे ] । शेपते–विदर्शितुं योग्यो भवति । शिपिः–शिविः, चर्म, शिविराज्ञो नगरम्, यागशिष्ट-

१. काये एव रमते कायरः, ( रोमत्वर्थीयः ), भीरुवाचकं संस्कृतभाषापदमिदम् ।

प्रान्तस्य कोकिलाकुण्डम् । शेफते–वपति । शेफस्–मेढ्रम् । शेफकः, शेफालः–द्वौ वप्तरि । शेफः–वृक्षः । शेफी, शेफू, शेफू, शेफनम्, शेफनीयम्–पञ्च वपने ।

४५८. वेपृ कम्पने च—कम्पने चात् क्षरणे । वेपते–कम्पते । वेपथुः, वेपमानः, वेपनः, वेपकः, वेप्–पञ्च कम्पनशीले । वेपः–वृक्षविशेषः, निम्बवृक्षः । वेपिः, वेपुः, वेपनीयम्–त्रयः कम्पने ।

४५९. ग्लेपृ दैन्ये—दाने (?) । ग्लेपते–याचते । गेप् (?, ग्लेप्), गेपकः (? ग्लेपकः), ग्लेपमानः–चत्वारो याचके । ग्लेपिः, ग्लेपुः, ग्लेपनम्, ग्लेपनीयम्–चत्वारो याचने ।

४६०. वुख ष्टृख मृख कखि चलने—वोखते–कम्पते । वोखः, वोखकः, वोखमानः, वुख्–चत्वारः कम्पितरि । वुखिः, वुखुः, वोखनम्, वोखनीयम्–चत्वारः कम्पने । स्तर्खते–विस्मरति । स्तर्खः, स्तर्खकः, स्तर्खमाणः–त्रयो विस्मर्तरि । स्तृखिः, स्तृखुः, स्तर्खणम्, स्तर्खणीयम्–चत्वारो विस्मरणे । मर्खते–विवदते । मूर्खः (?, मर्खः), मर्खकः, मर्खमाणः–चत्वारो विवदितरि मूर्खे । म्राख (?, मर्खः), मर्खणम्, मर्खणीयम्, मृखिः–चत्वारो विवादे । कङ्खते–कूर्दते । कङ्खः, कङ्खकः, कङ्खानः–त्रयः कूर्दितरि । कङ्खिः–धान्यस्य पतितं स्तवकम् । कङ्खुः, कङ्खनम्, कङ्खनीयम्–त्रयः कूर्दने ।

४६१. केपृ गेपृ ग्लेपृ गतौ च[1]—गतौ चलने च । केपते–गच्छति, चलति । केपः, केपकः, केपानः–त्रयो गन्तरि । केपिः, केपुः, केपनम्, केपनीयम्–चत्वारो गमने । गेपते–लघु भवति । गेपः, गेपकः, गेपानः–त्रयो लघौ (वामने) । गेपिः, गेपुः, गेपनम्, गेपनीयम्–चत्वरो लघुकरणे । ग्लेपते–(पराधीनो भवति) । ग्लेपः, ग्लेपकः, ग्लेपानः–(पराधीनभवितरि) । ग्लेपिः, ग्लेपुः, ग्लेपनम्, ग्लेपनीयम्–चत्वारः–(पराधीनभवने) ।

४६२. त्रपूष् लज्जायाम्—त्रपते–लज्जितो भवति । त्रप्ता, त्रपिता, त्रपकः, त्रपमाणः–चत्वारो लज्जितरि । त्रपिः, त्रपुः–यशदधातौ । त्रपणम्, त्रपणीयम् त्रपा–त्रयो लज्जने ।

४६३. अबि शब्दे—अम्बते–शब्दयति । अम्बनम्, अम्बनीयम्–शब्दने ।

४६४. लबि अवस्रंसने—अधोलम्बने (लटकने में) । लम्बते–अधोनमति (लटकता है) । लम्बा–शुष्कमलाबूफलम् । लम्बिः, लम्बनम्, लम्बनीयम्–त्रयोऽधोलम्बने ।

१. चादयं चलनमुपरिनिर्दिष्टं गत्या सह समुच्चीयते । एतेन गतिचलनयोर्भेदो द्रष्टव्यः ।

४६५. कव्रृ[१] वर्णे—सौन्दर्ये। कव्रते—शृङ्गारं करोति। कव्री—( केश-वेशयुता )। कव्रः, कव्रकः, कव्रमाणः—त्रयो वर्णकर्तरि ( रंगने वाले में )। कव्रणम्, कव्रणीयम्—द्वौ रञ्जने।

४६६. क्लीबृ अधाष्टर्ये—कोमले ( मुलायम में )। क्लीबते—कोमलो भवति। क्लीबः, क्लीबकः, क्लीबानः—त्रयो नपुंसके। क्लीबनम्, क्लीबनीयम्—द्वौ कोमल-भवने।

४६७. क्षीबृ मदे—स्थौल्ये। क्षीबते—स्थूलो भवति। क्षीबः, क्षीबकः, क्षीबाणः—त्रयः स्थूले पुरुषे। क्षीबिः, क्षीबुः, क्षीबणम्, क्षीबणीयम्—चत्वारः स्थौल्ये मेदोवर्धने।

४६८. शीभृ, चीभृ कत्थने—पूजने। शीभते—पूज्यो भवति। शीभः, शीभकः, शीभानः—त्रयो पूज्ये। शीभिः—वृक्षः, मार्जारः। शीभुः—( ? ) शीभनम्, शीभनीयम्—पूजने। चीभते—मान्यो भवति। चीभः, चीभकः, चीभानः—त्रयो मान्ये। चीभिः, चीभनम्, चीभनीयम्—त्रयो मानने।

४६९. रेभृ भर्त्सने—गर्जने। रेभते—गर्जति। रेभः—हस्ती। रेभकः, रेभाणः—द्वौ गर्जितरि। रेभिः, रेभुः, रेभणम्, रेभणीयम्, रेभ्—पञ्च गर्जने।

४७०. अभि, रभि शब्दे—ध्वनौ। अम्भते—आह्वयति, शब्दयति। अम्भः—[ जलम् ]। अम्भकः, अम्भानः—शब्दयितरि। रम्भते—गायति। रम्भा—देवस्त्री-कन्या ( अप्सरा )। रम्भिः, रम्भुः, रम्भणम्, रम्भणीयम्—चत्वारो गान-कर्मणि। रम्भः—मनोवायुः। आरम्भः—बुद्धिवायुः। विरम्भः—चित्तवायुः। सुरम्भः—अहंकारवायुः। संरम्भः—आत्मवायुः।

४७१. ष्टभि स्कभि प्रतिबन्धे—अवरोधे। स्तम्भते—तिष्ठति। स्तम्भः—खम्भः ( खम्बा इति भाषायाम् )। स्तम्भकः, स्तम्भानः—स्थातरि। स्तम्भिः, स्तम्भः, स्तम्भनम्, स्तम्भनीयम्—स्थितौ। स्कम्भते—चतसृषु दिक्षु बध्नाति। स्कम्भः—परिमातृ काष्ठम् (नापने वाली लकड़ी)। स्कम्भकः, स्कम्भानः—मापके। स्कम्भिः, स्कम्भुः, स्कम्भनम्, स्कम्भनीयम्—चत्वारो माने।

४७२. जभि जृभि गात्रविनामे—शरीरालस्ये। जम्भते—अलसो भवति। जम्भः—राक्षसः। जम्भाः—वृक्षः। जम्भकः, जम्भानः—द्वौ अलसे। जम्भिः, जम्भनम्, जम्भनीयम्—त्रय आलस्ये। जृम्भते—अलसो भवति ( ऊँघता है )।

---

१. ककारोऽनुबन्ध इति पाणिनीयाः। तेषां मते कबते रूपम्। द्र० पृ० ६७, टि० ३।

जृम्भा—पञ्चमदुः (?) पत्न्या जृम्भणम्। जृम्भकः, जृम्भाणः—द्वौ अलसे ( ऊँघने वाले में )। जृम्भिः, जृम्भुः, जृम्भणम्, जृम्भणीयम्—चत्वार आलस्ये ( ऊँघने में )।

४७३. शल्ल[1] कत्थने—वचने। शल्लते—वदति। शल्ला—वदित्री। शल्लकः, शल्लानः—द्वौ कथयितरि। शल्लनम्, शल्लनीयम्, शल्लिः, शल्लुः—चत्वारः कथने।

४७४. वल्ल[2] भोजने—अदने। वल्लते—अत्ति। वल्लः, वल्लकः, वल्लानः, वल्लाल:—चत्वारो भक्षयितरि। वल्लिः—लता, दीपश्च। वल्लनम्, वल्लनीयम्—द्वौ भक्षणे। वल्लभः—पतिः। वल्लभा—पत्नी।

४७५. गल्भ अधाष्टर्ये—दार्ढ्ये। गल्भते—जानाति। गल्भः, गल्भकः, गल्भानः—त्रयश्चतुरे विदुषि। गल्भनम्, गल्भनीयम्, गल्भिः, गल्भुः—चत्वारश्चातुर्ये।

४७६. ष्टुभ ष्टुभि स्तम्भने—स्थिरत्याम्। स्तोभते—तिष्ठति। स्तोभकः, स्तोभानः—द्वौ स्थातरि। स्तुभिः, स्तुभुः, स्तोभनम्, स्तोभनीयम्—चत्वारः स्थि[ते]। अनुष्टुप्—छन्दोविशेषः। स्तुम्भते—तिष्ठति। स्तुम्भकः, स्तुम्भानः—द्वौ स्थातरि। स्तुम्भः, स्तुम्भुः, स्तुम्भनीयम्—चत्वारः स्थापने। कुस्तुम्भरम्—धान्यकम् ( धनिया )।

४७७. खुण घुण घिणि घुणि घृणि ग्रहणे—खोणते—गृह्णाति। खोणः, खोणकः, खोणानः—त्रयो ग्रहीतरि। खुणिः—( ? )। खोणनम्, खोणनीयम्—ग्रहणे। घोणते—गृह्णाति। घोणकः, घोणानः—द्वौ ग्रहीतरि। घुणिः, घुणिः—द्वौ सर्पे, पूज्यपादमुनौ। घोणा—नासिका। घोणी—वराहः। घोणनम्, घोणनीयम्—द्वौ ग्रहणे। घिण्णते—विभजति ( ? )। घेण्णुः,—( ? )। घिण्णकः, घिण्णानः—द्वौ विभजितरि। घिण्णनम्, घिण्णनीयम्—द्वौ विभागे। घुण्णते—पीडयति। घुण्णा—( ? )। घुण्णकः, घुण्णानः—द्वौ पीडयितरि। घुण्णनम्, घुण्णनीयम्—नासिकामलम्। घृण्णते—( धक्का देता है )। घृण्णः, घृण्णकः, घृण्णानः—त्रयः ( धक्का देनेवाले में )। घृण्णनम्, घृण्णनीयम्—द्वौ ( धक्का देने में )। घृणः[3]—कीटः। घृणः[3]—रश्मिः।

---

१. इह भान्तप्रकरणे शल-वल धात्वोः पाठोऽप्रासङ्गिकः। काशकृत्स्नीयस्य संक्षेपे कातन्त्र-धातुपाठे इह 'शल्भ कत्थने, वल्भ भोजने' इत्येवं पठ्यते। अतः काशकृत्स्नीयः पाठ इह भ्रष्टः स्यात्। कन्नडटीकाकृता तु यथोद्धृतानि पदानि तथा तत्समये 'शल वल' इत्येव पाठ आसीदिति निश्चीयते।

२. द्रष्टव्या इतः पूर्वा टिप्पणी।

३. 'घृणः, घृणिः' अत्र नुमाभावः कथमिति न ज्ञायते।

४७८ घूर्ण भ्रमणे—घूर्णते–भ्रमति। घूर्णकः, घूर्णानः–द्वौ भ्रमणकर्तरि। घूर्णम्, घूर्णितम्, घूर्णनम्, घूर्णनीयम्–चत्वारो भ्रमणे।

४७९ श्रंसु प्रमादे—विश्वासघाते। श्रंसते–वञ्चति। श्रंसकः, श्रंसानः–द्वौ वञ्चके। श्रंसिः, श्रंसनम्, श्रंसनीयम्–त्रयो वञ्चने।

४८०. पण पन व्यवहारे स्तुतौ च—पणते, पणायते[1]–व्यवहरति। पणिनः–मुनिः, वैश्यः। विपणः, पण्यवीथि( ?, थि )का–द्वौ आपणश्रेण्याम्। पणम्–निष्कदशांशं सुवर्णम्। पाणिः–हस्तः। पणकः, पणानः–द्वौ व्यवहर्तरि। पणिः, पणुः, पणनम्, पणनीयम्, पण्यम्–पञ्च मूल्ये। पनते पनायते[2]–स्तौति। पनकः, पनानः–द्वौ स्तोतरि। पनसः–चतुर्वर्गः, एतन्नामा वृक्षावशेषः ( 'कटहल' इति भाषायां प्रसिद्धः )। पनिः–कामः, जलबिन्दुः। पननम्, पन्यम्, पननीयम्–त्रयः स्तुतौ। पानम्, पानकम्–द्वौ पानक्रियायाम्। पानीयम्–जलम्।

४८१. भाम क्रोध—भामते–क्रुद्धा भवति। भामा, भामिनी–स्त्री। भामकः, भामानः–द्वौ क्रुध्यमाने। भामिः, भामुः, भामनम्, भामनीयम्, भाम्यम्–पञ्च–क्रोधे।

४८२. क्षमूष् सहने—क्षमते–सहते ( क्षमां करोति )। क्षमा, क्षामिः, क्षमणम्, क्षमणीयम्, क्षान्तिः–पञ्च सहने। क्षमकः, क्षमाणः, क्षान्तः–त्रयः सोढरि ( क्षममाणे )। क्षामम्, क्षामकम्–द्वौ ( ? )।

४८३. क्ष्मै धारणे—क्ष्मायते–सहते। क्ष्मा–भूमिः। क्ष्मायकः, क्ष्मायमाणः–द्वौ सहमाने। क्ष्मायिः, क्ष्माणम्, क्ष्माणीयम्–त्रयः सहने।

४८४. कमु कान्तौ—कमते, कामयते[3]– इच्छति। कान्तः–पतिः। कान्ता–पत्नी। कान्तिः–प्रकाशः। कामिनी–स्त्री। कामः, कामकः–विट् पुरुषः। कामनम्–इच्छा, आसक्तिः। कमिः, कमुः, कमनम्, कमनीयम्, कम्यम्, काम्यम्–षड् इच्छायाम्। कामी–व्यसनी।

४८५. अय वय पय मय चय तय रय गतौ—अयते–चलति। अयः–श्रेष्ठं कार्यम्। आयः–मर्म। अयस्–लोहः। आयुस्–जीवनम्। अयि, अये–स्त्रीसंबोधने। आयी–माता। अयनम्–मार्गः। उत्तरायणम्, दक्षिणायनम्–

१. पणते, पणायते; पनते, पनायते; कमते, कामयते—अत्र 'आयणिङौ' कथं विकल्पेन इति न ज्ञायते। पाणिनीयास्त्वार्धधातुक एव आयणिङोर्विकल्पं संगिरन्ते।

२. द्रष्टव्या पृ० ७९, टि० १।

३. द्रष्टव्या पृ० ७९, टि० १।

सूर्यरथस्य उत्तरदक्षिणयोर्गतिः । अय्यः, आय्यः, अयकः, आयकः, अयमानः–पञ्च गन्तरि । वयते–उड्डीयते । वयस्–पक्षी, वृद्धः । वायुः–अनिलः । वयी–स्त्री । वायिः–सगोत्रः । वायः–व्यर्थः । वयनम्, वयिः, वयुः, वय्यम्, वाय्यम्, वयनीयम्–षट् चलने । वायम्–मुखम् । वयनम्, वयणम्, वयकः, वायकः, गयमानः (?, वयमानः)–[ पञ्च ] गन्तरि । पयते–रक्षति । पयकः, पायकः, पय्यः, पाय्यः, पयमानः–[ पञ्च ] रक्षितरि । पयिः, पायिः–दरिद्रः । पायुः–गुदम् । पयुः, पयनम्, पयनीयम्–[ त्रयो ] रक्षणे । पयस्–जलम्, दुग्धम् । पायः–(?) । मयते–क्लिष्टं कार्यं करोति । मयः–विश्वकर्मणो ज्येष्ठभ्राता । मायः–राक्षसः माय (?) । मयुः–गन्धर्वः । मयूरः–कलापी । माया–मयस्य पुत्री, नाभिराज्ञः पत्नी, अन्तस्य (?) माता । मायिः–मयस्य पुत्री, कश्यपस्य पत्नी, सूरपद्मम्, सिंहः, वक्रतारकः, अश्वमुखिनो माता । मयकः, मायकः, मयमानः, मायावी,[१] मायिकः,[१] मायी,[१] मय्यः, माय्यः–एतेऽष्टौ मायाविनि । मयनम्–वृक्षजं श्लेष्मद्रव्यम् ('गोंद' इति भाषायाम्, मोम वा) । मै–शरीरम् । मायुः–नाशः । गोमायुः–शृगालः । गोमयम्[२]–गवां पुरीषम् । चयते–परिहासं करोति । चयकः, चायकः, चयमानः, चय्यः[३], चाय्यः[३]–पञ्च परिहासकर्तरि । चयिः, चयुः, चयनम्, चायम्–चत्वारः परिहासे । तयते–चुम्बति । तयः, तयकः, तयमानः, तय्यः–चत्वारश्चुम्बितरि । तयिः, तयुः, तयनम्, तयनीयम्–चत्वारश्चुम्बने । रयते–आम्ररसं निष्पादयति (अमरस बनाता है) । रयकः, रयमानः–द्वौ आम्ररसनिष्पादयितरि । रयिः, रायिः–द्वौ सुवर्णे । रयः–शीघ्रम् । रायः–भाग्यवान् । रयुः, रयणम्, रय्यम्, रयणीयम्–चत्वारश्शोभने ।

---

१. पाणिनीयाः 'मायावी मायिकः मायी' इत्येतान् तद्धितप्रत्ययान्तान् आचक्षते । इह तु कृदन्तेषु पाठसामर्थ्यात् कृदन्ता एते इति स्पष्टं ज्ञायते । इयं च प्रवृत्तिः काशकृत्स्नधातुवृत्तावन्यत्राप्युपलभ्यते । यथा—पाणिनीयैस्तद्धितान्तत्वेन स्वीक्रियमाणाः 'वाग्मी, वाचालः वाचाटः' अत्र कृदन्तत्वेनाभ्युपगताः (द्र० २।३० धातुव्याख्याने) । पूर्वकाले कृदन्तत्वेन परिभाष्यमाणा बहवः शब्दा औत्तरकालिकैर्वैयाकरणैस्तद्धितान्तत्वेन प्रतिज्ञाताः । तथा चाह क्षीरस्वामी—'कात्यनिके हि प्रकृतिप्रत्ययविभागे द्राघिमादयः कस्मिंश्चिद् व्याकरणे धातोरेव साधिताः, एवं नेदिष्ठादयो नेदत्यादेः' (क्षीरतरङ्गिणी १।८०, पृष्ठ ३३) । इह अस्मत्संस्करणेऽस्माकीना टिप्पण्यपि द्रष्टव्या ।

२. द्रष्टव्येह टिप्पणी १ । चुरादौ तु धात्वन्तरम् ।

३. 'चय्यम्' यत्प्रत्ययान्तम्, 'चाय्यम्' ण्यत्प्रत्ययान्तम् । उभावपि प्रत्ययौ पाणिनीयानां मते कृत्यसंज्ञकौ, तौ च भावे कर्मणि च प्रयुज्येते । इह वृत्तौ तु बहुत्र यत्ण्यत्प्रत्ययान्तानां कर्तरि प्रयोग उपलभ्यते । यथैहैव कर्तरि प्रयुज्यमानानां 'चयकः, चायकः, चयमानः' आदीनां प्रकरणे चय्यः चाय्यः पदे पठ्येते, कर्तरि चार्थः प्रदश्यते ।

४८६. णय रक्षणे च—त्राणे चात् चलने च। नयते—रक्षति। नयकः नायकः, नय्यः, नाय्यः, नयमानः—पञ्च रक्षितरि। नयः, नयिः, नयुः, नायः, नयनम्, नयनीयम्—षट् रक्षणे। नाय्—श्वा। नायी—शुनी।

४८७. दय दानगतिहिंसाऽऽदानेषु—दयते—ददाति। दयालुः, दयकः, दयमानः, दय्यः, दाय्यः, दायकः, दायी—षष्ठ दातरि। दयुः, दयिः, दय्यम्, दायम्, दयनम्, दयनीयम्—षड् दाने। दायमत्तीति ( —फलं भुङ्क्ते ) दायादः—पुत्रादिः, दायहर्त्ता। दया—करुणा। दयिता—स्त्री।

४८८. ऊयी तन्तुसन्ताने—तन्तुसंयोगे। ऊयते—सीव्यति, संयोजयति। ऊयकः, ऊयमानः—द्वौ ऊर्णनाभौ, वस्त्रवायके। ऊयिः, ऊयुः, ऊय्यम्, ऊयनम्, ऊयनीयम्—पञ्च संयोजने।

४८९. पूयी विशरणे दुर्गन्धे च—स्वयथौ, दुर्गन्धे च। पूयते—स्वयति। पूयकः, पूयमानः—द्वौ श्वयितरि। पूयम्, पूयिः, पूयुः, पूयनम्, पूयनीयम्—पञ्च स्वयथौ। पूयशोणितम्—दुष्टं दुर्गन्धं वा रक्तम्।

४९०. क्नूयी[1] शब्दे—क्नूयते—शब्दं करोति। क्नूयकः, क्नूयमानः—द्वौ शब्दयितरि। क्नूयिः, क्नूयुः, क्नूयः, क्नूयनम्, क्नूयनीयम्—पञ्च शब्दे।

४९१. क्ष्मायी विधूनने—दाने। क्ष्मायते—ददाति। क्ष्मायकः, क्ष्मायमाणः—द्वौ दातरि। क्ष्मायिः, क्ष्मायुः, क्ष्मायणम्, क्ष्मायणीयम्—चत्वारो दाने।

४९२. स्फायी ओप्यायी वृद्धौ—स्फायते—वर्धते। स्फायकः, स्फायमानः—द्वौ वर्धितरि। स्फायिः, स्फायः, स्फायुः, स्फायनम्, स्फायनीयम्, स्फायत्—षट् वर्धने। स्फायः स्फी—स्फायधातोः स्फी आदेशो भवति। स्फीतम्—वृद्धम्। आप्यायते—क्षुधितो भवति। आप्यायकः, [ आ ]प्यायमानः—द्वौ क्षुधिते। प्यायिः, प्यायुः, प्यायनम्, प्यायनीयम्—चत्वारो क्षुधायाम्। प्यायः पीः—प्यायधातोः पी आदेशो भवति। पीतम् पीतिः—द्वौ क्षुधि। पीत्या सह वर्तते ( क्षुधितो भवति ) सपीतिः—तृष्णा, तृषा।

४९३. तायृ सन्तानपालनयोः—सन्ताने रक्षणे च। तायते—रक्षति। तायकः, तायमानः, तायः[2], ताय्यः—चत्वारो रक्षितरि। तायिः, तायी[3]—द्वौ जनन्याम्। तायुः, तायनम्, तायनीयम्—त्रयो रक्षायाम्।

---

१. अत्र पाठभ्रंशः प्रतीयते। 'क्नूयी शब्दे' इति युक्तः पाठः स्यात्, तथैव 'क्नूयते' इत्याद्युदाहरणेष्वपि ज्ञेयम्। कातन्त्रधातुपाठेऽपि 'क्नूयी' इत्येव पाठः।

२. हिन्दीभाषायां पितुर्ज्येष्ठभ्रातरि प्रयुज्यमानः 'ताया' शब्दोऽस्यैवापभ्रंशः सम्भवति।

३. पितुर्ज्येष्ठभ्रातुर्जायायां ( बड़ी मां-इत्यर्थे ) प्रयुज्यमानः 'तायी' शब्दोऽयमेव संभवति।

४९४. शल शल्ल शल्कि चलने—कम्पने। शलते—चलति, कम्पते। शलकः, शलमानः—द्वौ कम्पितरि। शलभः—धान्योत्पत्तिः। शाल्लूरः—मण्डूकः। शालूकम्—कमलकन्दः। शलाका—केशः, लोहयष्टि (सलाई इति भाषायाम्)। शालकः—देवरः। शल्यम्—अस्थि। शलितम्—जलम्। शाला—गृहम्। शलिः, शलुः, शलनम्, शलनीयम्—चत्वारः कम्पने। शलिका—लोहयष्टिः ('सलाई' इति भाषायाम्)। शल्लते—कम्पते। शल्लकः, शल्लमानः—द्वौ कम्पितरि। शल्लिः, शल्लुः, शल्लनम्, शल्लनीयम्—चत्वारः कम्पने। शल्कते—श्रमं करोति, तपस्यति। शल्कः—ब्रह्मणः पुत्रः। शाल्कायनः—शल्कस्यापत्यम्। शाल्कायिनिः—शाल्कायनस्य सुतः। शल्कनम्, शल्कनीयम्—द्वौ तपस्यने।

४९५. बुल बुल्ल सेचने—घर्षणे। बोलते—घर्षति। बोलः, बोलकः, बोलमानः—त्रयः संघर्षितरि। बुलिः, बोलुः, बोलनम्, बोलनीयम्—चत्वारः संघर्षणे। बुल्लते—घर्षति। बुल्लः, बुल्लमानः—द्वौ घर्षितरि। बुल्लिः—भगः। बुल्लम्—(?)। बुल्लनम्, बुल्लनीयम्—द्वौ घर्षणे।

४९६. तुल तुल्ल द्रवणे—तोलते—परिमाति (तोलता है)। तुला—तोलनसाधनम् (तराजू इति प्रसिद्धम्)। तुला—राशिविशेषः। तुलिः, तुलुः, तुलनम्, तुल्यम्, तोल्यम्, तुलितम्—षट् परिमाणे। तुल्लते। तुल्लकः, तुल्लमानः। तुल्लिः, तुल्लुः, तुल्लनम्, तुल्लनीयम्।

४९७. वल वल्ल संवरणे—प्रसारे[1]। वलते—विस्तारयति। वलकः, वलमानः, द्वौ विस्तारयितरि। वालम्—केशः, पुच्छम्। वालिः—देवेन्द्रस्य पुत्रः। वलितम्—(?)। वलम्, वलिः, वलुः, वलनम्, वलनीयम्—पञ्च विस्तारे। वल्लते—संवृणोति (लपेटता है)। वल्लकः, वल्लमानः—द्वौ संवरितरि। वल्ली—लता। वल्लरिः—गुच्छः। वल्लः—गोपालः (ग्वाला), आभीरः (अहीर), देशः। वल्लनम्, वल्लम्—संवरणे।

४९८. मल मल्ल मुल मुल्ल धारणे—घर्षणे। मलते—घर्षयति। मलकः, मलमानः—द्वौ घर्षितरि। मलम्—पुरीषम्। मलिनम्—कल्मषम्। आम्लकः—अम्लः। मला—वर्षा। माला—पुष्पादिसंग्रथनम्। मालिनी—मालासंग्रथिका, वृत्तविशेषः, समुद्रशाखम्, देवकन्या। मलेयः, मलयः—पर्वतविशेषः। मालेयः, मलयजः—द्वौ श्रीगन्धे, चन्दने। मालम्—अवरोधरहितं स्थानम्, समभूमिः।

---

१. वृत्तौ 'संवरणे' इत्यस्य 'प्रसारे' इत्यर्थो ज्ञापितः। परन्तु आख्यातपदनिर्देशे 'वलते' इत्यस्य 'प्रसारयति' 'वल्लते' इत्यस्य 'संवृणोति' (लपेटता है) इति विरुद्धावर्थौ निर्दिष्टौ।

माळिका–आपणम् । माळी–( ? ) । माळः–( ? ) । मल्लते–सहते । मल्लकः, मल्लमानः–द्वौ सहनकर्तरि । मल्लः–मल्लयुद्धकर्ता ( पहलवान )। मल्लिः, मल्लिका–द्वौ पुष्पे । मल्लनम् , मल्लनीयम्–द्वौ सहने । मोल्लते–सहते । मुल्लकः, मुल्लमानः–द्वौ सोढरि । मुल्ला–स्तनम्, कीलकम् । मुलः–यशः । मुल्लते–शोचति । मुल्ला, मुल्लनम् , मुल्लनीयम्–त्रयः शोचने । मुल्लुः–कण्टकम् । मुल्लः, मुल्लकः, मुल्लानः–त्रयः शोचयितरि ।

४९९. भल भल्ल परिभाषणहिंसादानेषु—गालिप्रदाने, हिंसायां, दाने च । भलते–गालिं ददाति । भलकः, भलमानः–द्वौ गालिप्रदातरि[1] । भलकः, भालुकः, भलमानः–त्रयो गालिप्रदातरि । भला, भली, भल्ला[2], भल्ली[2]–चत्वारः स्तुतौ । भालः–( हलस्य पौत्रम्–फाल इतिभाषायां प्रसिद्धम् )। भलनम् , भलनीयम्–द्वौ गालिप्रदाने । भल्लते–हिनस्ति । भल्लः, भल्लमानः–द्वौ हिंसके । भल्लूकः–ऋक्षः । भल्ला–( ? ) । भल्लनम् , भल्लनीयम्–द्वौ हिंसायाम् । भल्लातकिः–औषधविशेषः ( 'भिलावा' इति प्रसिद्धः ) ।

५००. भिल भिल्ल वनप्रदेशे—वनगमने । भेलते–उन्मत्तो भवति । भेलः, भेलकः, भेलमानः–त्रय उन्मत्ते । भेलिः, भेलुः, भेलनम् , भेलनीयम्–उन्मादे । भिल्लते–वने क्रीडति । भिल्लः[3], भिल्लकः, भिल्लमानः–त्रया वनचरे । भिल्लाम् (?), भिल्–द्वौ धनुषि ।

५०१. कल संख्याने—गणनायाम् । कलते–वयसो गणनां करोति । कालः–शिवः, यमः । काळिः, काळिका–पार्वती । कालः–चतुर्थयुगपुरुषः । कालिका, उत्कालिका–द्वौ उदाहरणगद्यभेदे । कललम्–संयोगः । कलना–गणना । कलकलः–गद्गद्स्वरः । काळिमा, कालः–द्वौ काले । कलकः, कलमानः–गणकः । कल्ना–गणितम् । कालानः, काल्यः–द्वौ काल उत्पन्नौ । कल्–पाषाणः । कलुः, कलनम् , कलनीयम् , कल्यम् , कल्यणम् , कल्याणम्–षट् शुभे ।

५०२. कल्ल अव्यक्ते शब्दे—कल्लते–उच्चैरव्यक्तं शब्दयति । कल्लकः, कल्लमानः–उच्चैः शब्दयितरि । कळ्ळः–चोरः । कळिळः–तैलपदार्थः । कल्लुः–पाषाणः । कल्लनम् , कल्लनीयम्–कोलाहले । कल्लोलः–क्रीडा ।

५०३. तेवृ देवृ देवने—दुःखे । तेवते–दुःखितो भवति । तेवकः, तेव-

---

१. अग्रे 'भालुकः' पदेन सहायं पाठः पुनः पठ्यते ।
२. भल्लधातो रूपम् ।
३. 'भील' इति लोके प्रसिद्धोऽस्यैवापभ्रंशः ।

मानः—द्वौ दुःखिनि । त्रेवनम्—पिण्याकम् । तेवम्—आर्द्रम् । तेविः, तेवुः, तेवनीयम्—त्रयो दुःखे । देवते—पूजयति । देवलः, देवलकः—देवोपजीवी ( पुजारी इति भाषायाम् ) । देवकः, देवमानः—पूजयितरि । देवनम्, देवनीयम्, देविः, देवुः, देव्यम्—पञ्च पूजने । दैवम्—भाग्यम् ।

५०४. पेवृ शेवृ केवृ खेवृ गेवृ घेवृ ग्रेवृ ग्लेवृ मेवृ पेवृ म्लेवृ सेचने—घर्षणे । सेवते—घर्षति सेवयति । सेवकः, सेवमानः—घर्षकः, परिचारकः । सेवन्ती, सेवन्तिका—पुष्पविशेषः । सेवका—परिचारिका । सेवा—परिचर्या । सेवनम्, सेवनीयम्, सेविः, सेवुः, सेव्यम्, सैव्यम्—षट् गृहकार्ये । सेवालः—'काई' इति प्रसिद्धम् । शेवते—राजपरिषदि उपविशति । शेवः, शेवमानः, शेवः, शैवः,—चत्वारो[1] राजपरिषदुपवेशके । शेवनम्, शेवनीयम्, शेव्यम्, शैव्यः, शेविः, शेवुः, शेवा—राजपरिषदुपवेशने । केवते—रिक्तो भवति । केवकः, केवलः, केवः, केवमानः, केवू—पञ्च रिक्ते । केविः, केवुः, केवा, केवनम्, केव्यम्, कैव्यम्—षट् रिक्तीभावे । खेवते—आतुरो भवति । खेवः, खेवकः, खेवलः, खेवमानः, खैवः—पञ्च आतुरे । खेव्, खेवी, खेविः, खेवुः, खेवनम्, खेव्यम्, खैव्यम्—षट् आतुरतायाम् । गेवते—घर्षति । गेवकः, गेवमानः—द्वौ घर्षके । गेवनम्, गेवनीयम् घर्षणे । घेवते—वपति ( बोता है ) । घेवकः, घेवमानः—वप्तरि । घेवनम्, घेवनीयम्—बीजवपने । ग्रेवते—निगिरति । ग्रेव्, ग्रेवः, ग्रेवकः, ग्रेव्यः, ग्रैव्यः, ग्रेवमानः—षट् निगरीतरि । ग्रैविः ( ?, ग्रेविः ), ग्रेवुः, ग्रेवा, ग्रेवणम्, ग्रेवणीयम्—पञ्च मुखस्थे द्रव्ये ( कौर इति भाषायाम् ) । ग्लेवते—स्वयति ( फूलता है ) । ग्लेव्, ग्लेवः, ग्लेवकः, ग्लेव्यः, ग्लैव्यः, ग्लेवमानः—षट् स्वयितरि । ग्लेवनम्, ग्लेवा, ग्लेवनीयम्, ग्लेविः, ग्लेवुः—पञ्च स्वयथौ । मेवते—( लगता है ) । मेव्, मेवः, मेवकः, मेवमानः, मेव्यः, मैव्यः—षट् ( लगाने वाले ) । मेविः, मेवुः, मेवनम्, मेवा, मेवनीयम्—( लगाना ) । पेवते—शीतं करोति । पेव्, पेवः, पेवकः, पेवलः, पेव्यः, पैव्यः, पेवमानः—षट् शीतीकर्तरि । म्लेवते । म्लेव्, म्लेवः, म्लेवलः, म्लेव्यः, म्लेवमानः । म्लेविः, म्लेवुः, म्लेवनम्, म्लेवनीयम् ।

५०६. रेवृ प्लवगतौ—श्रमेण चलने । रेवते—श्रमेण चलति । रेव्, रेवकः, रेवळः, रेव्यः, रैव्यः, रेवमाणः—षट् श्रमेण गन्तरि । रेवणः—सत्पुरुषमुख-

---

१. अत्र 'शेवः' द्विः पठ्यते तेन त्रय एव, न चत्वारः । यद्वा पूर्वत्र 'शेवः' इत्यस्य स्थाने 'शेवकः' इति स्यात् ।

जन्मा रेणुकापुत्रः। रेवा—सोमा, मेखलपुत्री, बाणासुरपत्नी, नर्मदा। रेवती—दक्षपुत्री, चन्द्रपत्नी। रेवुः—नदी। रेविः—श्रमेण गन्त्री। रेवणीयम्—श्रमेण गमनम्।

५०६. क्लेश बाधने—दुःखे। क्लेशते—दुःखितो भवति, श्रमं करोति। क्लेट्, क्लेशकः, क्लेशमानः, क्लेश्यः क्लेदयः—पञ्च श्रमकर्तरि, दुःखिते। क्लेशिः, क्लेशुः, क्लेशनम्, क्लेशनीयम्—चत्वारः श्रमे।

५०७. पर्प[1] स्नेहने—तैले। पर्पते—स्निग्धो भवति। पर्पः, पर्पकः, पर्पमाणः—त्रयः स्नेहयुक्ते। पर्पिः, पर्पुः, पर्पणम्, पर्पणीयम्—चत्वारः स्नेहने।

५०८. धुक्ष धिक्ष संदीपनक्लेशनजीवनेषु—क्षुधायाम्, श्रमे, जीवने च। धुक्षते—क्षुधितो भवति, श्रान्तो भवति। धुक्षः, धुक्षकः, धुक्षाणः—त्रयो क्षुधिते। धुक्षिः, धुक्षुः, धुक्षणम्, धुक्षा, धुक्षणीयम् – पञ्च क्षुत्कर्मणि। धिक्षति—जीवति। धिक्षः, धिक्षकः, धिक्षणः—त्रयः प्राणधारके ( जीवितरि )। धिक्षः ( ?, धिक्षिः ), धिक्षुः, धिक्षा, धिक्षणः (?, धिक्षणम्), धिक्षणीयम्—जीवने।

५०९. वृक्ष वरणे—आवरणे[2]। वृक्षते—आच्छादयति। वृक्षः[3], वृक्षाणः,—आच्छादनकर्तरि। वृक्षिः, वृक्षः ( ?, वृक्षुः ), वृक्षणम्, वृक्षा, वृक्षणीयम्—पञ्च आवरण।

५१०. शिक्ष विद्योपादाने—विद्याग्रहणे। शिक्षते—पाठयति। शिक्षकः, शिक्षमाणः—द्वा अध्यापयितरि। शिक्षिः, शिक्षुः, शिक्षा, शिक्षणम्, शिक्षणीयम्—पञ्चाध्यापने।

५११. भिक्ष याच्ञायाम्—याचने। भिक्षते—याचते। भिक्षुः, भिक्षुकः, भिक्षमाणः—त्रयो याचयितरि। भिक्षा, भिक्षिः, भिक्षणम्, भिक्षणीयम्, भिक्षम्, भैक्षम् (?, भैक्ष्यम्)—षट् याचने।

५१२. दक्ष वृद्धौ शीघ्रे च—वर्धने त्वरायां च। दक्षते—वर्धते, त्वरति। दक्षः—एतन्नामा पुरुषः, शिवस्य श्वशुरः। दक्षिः, दक्षुः, दक्षणम्, दक्षा, दक्षणीयम्

---

१. 'स्पर्श स्नेहने' इति कातन्त्रपाठः, चान्द्रपाठश्च।

२. संपर्दवो वरणे—स्वीकार इत्यादि।

३. अत्रार्थे मन्त्रवर्णो भवति—किंस्विद् वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः। यजुः १७।२०। अत्र वनम्, वृक्षः आभ्यां पदाभ्यां सर्वस्यास्य ब्रह्माण्डस्य संभजनीयम् आच्छादकं च कारणं ( प्रकृतिभूतं ) किमासीदिति पृच्छ्यते। 'वन-वृक्ष' शब्दाभ्यां वेदे ब्रह्माण्डस्य मूलभूता प्रकृतिरुच्यते।

–पञ्च त्वरणे । दाक्षायणी–सती देवी, शिवपत्नी । दक्षम्–दक्षिणपार्श्वम् । दक्षिणम्–दक्षिणा दिक् । दक्षिणा–दानम् ।

५१३. ऋक्ष हिंसायां दीप्तौ च—हिंसने प्रकाशे च । ऋक्षते–कृन्तति (हिनस्ति) । ऋक्षः–भल्लुः, तारकम् । ऋक्षकः, ऋक्षमाणः–द्वौ विकर्तनशीले । ऋक्षिः, ऋक्षुः, ऋक्षणम्, ऋक्षणीयम्–चत्वारो विकर्तने ।

५१४. प्लक्ष छायायाम्—प्लक्षते–छाया भवति । प्लक्षः–वृक्षविशेषः । प्लक्षिः, प्लक्षुः, प्लक्षणम्, प्लक्षणीयम्–चत्वारश्छायाकर्मणि ।

५१५. अक्ष खेलने—क्रीडने । अक्षते–क्रीडते । अक्षः–क्रीडनम्, इन्द्रियं च । अक्षि–चक्षुः । अक्षकः, अक्षमाणः–द्वौ क्रीडितरि । अक्षणम्, अक्षणीयम्–द्वौ क्रीडने । परोक्षः–[ इन्द्रियेभ्यः परः ] कालविशेषः ।

५१६. कक्ष धारणे—कक्षते–घर्षति । कक्षकः, कक्षमाणः–द्वौ घर्षितरि । कक्षः–शरीरावयवविशेषः ( बगल इति भाषायाम् ) । कक्षिः–शङ्का । कक्षणम्, कक्षणीयम्–द्वौ घर्षणे ।

५१७. पक्ष विभागे—विभजने । पक्षते–विभजते । पक्षः–विभागः । पक्षकः, पक्षमाणः–विभक्ता । पक्षी–आकाशचारी प्राणीः । पक्षिणी–तिथिः । पक्षिलः–चन्द्रः, वात्स्यायनमुनिः । पक्षधरः–मासः, पक्षी ।

५१८. ऋभुक्ष घातने—मारणे । ऋभुक्षते–मारयति । ऋभुक्षाः–देवेन्द्रः । ऋभुक्षणम्, ऋभुक्षणीयम्–द्वौ मारणे ।

५१९. वक्ष पालने—त्राणे । वक्षते–रक्षति । वक्षकः, वक्षमाणः–द्वौ पालयितरि । वक्षस्–उरः । वक्षणम्, वक्षणीयम्–रक्षणम्, पालनम् ।

५२०. कुक्ष पूरणे—भरणे । कुक्षति–भरति । कुक्षकः, कुक्षमाणः–द्वौ पूरयितरि । कुक्षिः–उदरम् । कुक्षणम्, कुक्षणीयम्–द्वौ भरणे ।

५२१. इक्ष आस्वादने—इक्षते–स्वदते । इक्षकः, इक्षमाणः–स्वदितरि । इक्षुः–'ईख' इति प्रसिद्धः । इक्षणम्, इक्षणीयम्–द्वौ स्वदने ।

५२२. मक्ष दशने—मक्षते–दशति । मक्षकः, मक्षमाणः–द्वौ दंशके । मक्षुः, मक्षुकः–मक्षिका । मक्षणम्, मक्षणीयम्–द्वौ दशनकर्मणि ।

५२३. तक्ष हिंसायाम्—तक्षते–हिनस्ति । तक्षकः–महासर्पः । तक्षणम्, तक्षणीयम्–द्वौ हिंसायाम् ।

५२४. उक्ष सहने—उक्षते-सहते । उक्षः-( वृषभः ) । उक्षणम्, उक्षणीयम्—द्वौ सहने ।

५२५. दीक्ष मौण्ड्येज्योपनयननियमव्रतादेशेषु—मुण्डने, यजने, उपनयने, नियमे, व्रते, आह्वाने च । दीक्षते-दीक्षां गृह्णाति । दीक्षितः, दीक्षकः, दीक्षमाणः-त्रयो दीक्षाग्रहीतरि । दीक्षितायिनि[1]-दीक्षितस्य पत्नी । दीक्षा, दीक्षणम्, दीक्षणीयम्—त्रयो दीक्षाग्रहणे ।

५२६. ईक्ष दर्शने—ईक्षते-पश्यति । ईक्षकः, ईक्षमाणः-द्वौ द्रष्टरि । ईक्षणम्, ईक्षणीयम्, ईक्षा-त्रयो दर्शने ।

५२७. ईर्ष गतिहिंसादानेषु—गतौ हिंसायां दाने च । ईर्षते-ईर्ष्यां करोति । ईर्षकः, ईर्षमाणः-ईर्ष्याकर्तरि । ईर्षा, ईर्षणम्, ईर्षणीयम्—त्रयः ईर्ष्याकर्मणि ।

५२८. भाष व्यक्तायां वाचि—आलङ्कारिकवाक्ये । भाषते-वदति । भाषकः, भाषमाणः-द्वौ वदितरि । भाष्, भाषणम्, भाषणीयम्, भाष्यम्—चत्वारो वाक्कर्मणि । भाषा—सरस्वती, वाक्यं च ।

५२९. गवेष अन्विच्छायाम्—अन्वेषणे । गवेषते-अन्विषति । गवेषकः, गवेषमाणः-अन्वेषकः । गवेष्, गवेषणम्, गवेषणीयम्-त्रयोऽन्वेषणे ।

५३०. येष प्रयत्ने—प्रमादपरिहारे । येषते-प्रयतते । येषकः, येषमाणः-द्वौ प्रयतितरि । येष्, येषणम्, येषणीयम्-त्रयः प्रयत्ने ।

५३१. जेष णेष एष ह्रेष गतौ—जेषते-चलति । जेषकः, जेषमाणः-द्वौ गन्तरि । जेट्, जेषणम्, जेषणीयम्, जेषा, जेष्यम्-पञ्च चलने । नेषते-कूर्दते । नेट्, नेषकः, नेषमाणः-त्रयः कूर्दके । नेषणम्, नेषणीयम्-द्वौ कूर्दने । एषते-स्खलति (फिसलता है)। एट्, एषकः, एषमाणः-त्रयः स्खलितरि । एषणम्, एषणीयम्-स्खलनम् । ह्रेषते-नृत्यति । ह्रेट्, ह्रेषकः, ह्रेषमाणः-त्रयो नर्तके । ह्रेषणम्, ह्रेषणीयम्, ह्रेषिः-त्रयो नर्तने ।

५३२. रेष ह्रेष अव्यक्ते शब्दे—अव्यक्तध्वनौ । रेषते-अव्यक्तं ध्वनति ( गुनगुनाता है )। रेट्, रेषकः, रेषमाणः-त्रयोऽव्यक्तवक्तरि । रेषिः, रेषणम्, रेषणीयम्-अव्यक्तध्वनौ । ह्रेषते-अश्वः शब्दयति ( हिनहिनाता है )। ह्रेट्, ह्रेषकः, ह्रेषमाणः-त्रयोऽश्वे । ह्रेषिः, ह्रेषा, ह्रेषणम्, ह्रेषणीयम्-चत्वारोऽश्वध्वनौ ।

---

१. 'दीक्षितायनी' शुद्धः पाठः स्यात् । अत्र लिङ्गानुशासनं द्रष्टव्यः ।

५३३. कास् शब्दकुत्सायाम्—कासते–कासनं करोति ( खांसता है )। कासरः–महिषः ( ? )। कासः, कासकः, कासमानः–त्रयः कासितरि ( खांसने वाले में )। कासिः, कासुः, कासनम्, कासनीयम्–चत्वारो ध्वनिविकारे ( खांसने में )।

५३४. काशृ भासृ दीप्तौ—प्रकाशे। काशते–प्रकाशितो भवति। काश्, काशः, काशमानः–त्रयः प्रकाशितरि। काशिः, काशी, काशिका–त्रयः काश्यां वाराणस्याम्। काशम्, काश्यः–पाञ्चालाः ( ? )। काशनम्, काशनीयम्, काशनी–त्रयः प्रकाशने। भासते–दीप्यते ( चमकता है )। भास्, भासकः, भासमानः–त्रयः दीपितरि। भासिः, भासुः, भासनम्, भासनीयम्, भासिनी ( ? ) –चत्वारो[1] दीपने।

५३५. नासृ रासृ शब्दे—ध्वनौ। नासते–ध्वनिं करोति। नासकः, नासमानः–द्वौ शब्दकर्तरि। नासा, नासिका–घ्राणेन्द्रियम्। नासनम्, नासनीयन्, नास्यम्, नासिः, नासा–पञ्च श्वासध्वनौ[2]। रासते–शब्दं करोति। रासः, रासकः, रासमानः–गर्दभध्वनिकर्तरि ( रेंगने वाले में )। रासभः–गर्दभः। रासिः, रासुः, रासनम्, रासनीयम्, रास्यम्–पञ्च गर्दभध्वनिक्रियायाम् ( रेंगना क्रिया में )। रासिमः–( ? )। रासक्रीडा–रासलीला।

५३६. नस कौटिल्ये—नसते कुटिलमाचरति ( धोखा देता है )। नसकः नसमानः–त्रयः[3] कौटिल्याचरितरि ( धोखा देने वालों में )। नस्–नासिका। नसा[4]–व्यसनम्। नस्यम्, नासिः, नसुः, नसनीयम्–चत्वारः कौटिल्याचारे।

५३७. भ्यस भये—भ्यसते–बिभेति। भ्यसकः, भ्यसमानः–भीरुः। भ्यसिः, भ्यसनम्, भ्यसुः, भ्यसनीयम्, भ्यस्यम्–पञ्च भये।

५३८. आङः शसि इच्छायाम्—आशंसते–प्रशंसाम् इच्छां वा करोति। आशंसकः, आशंसमानः–प्रशंसकः इच्छुर्वा। आशंसिः, आशंसुः, आशंसनम्, आशंसनीयम्–चत्वारः स्तुतौ।

५३९. ग्रसु ग्लसु अदने—भक्षणे। ग्रसते–भक्षति। ग्रसकः, ग्रसमानः–खादकः। ग्रसिः, ग्रसुः, ग्रासः, ग्रसनम्, ग्रसनीयम्–चत्वारोऽदने। ग्लसते–

१. 'भासिनी' संदिग्धोऽयं पाठः। अनेन सह पञ्च भवन्ति न चत्वारः।
२. नासिकया यः श्वासो गृह्यते तद्ध्वनौ ( खुर्राटे भरना )।
३. द्वावेव शब्दौ पठ्येते। यद्वा 'नसः' इत्यप्यत्र स्यात्।
४. व्यसनार्थं एव भाषायामपि प्रयुज्यते।

अत्ति । ग्लसकः, ग्लसमानः—भोजकः । ग्लसिः, ग्लसुः, ग्लस्तम्, ग्लस्तिः, ग्लसनम्, ग्लसनीयम्—षड् भोजने ।

५४०. ईह चेष्टायाम्—इच्छायाम् । ईहते—इच्छति । ईहकः, ईहमानः—इच्छुकः । ईट्, ईहिः, ईहुः, ईहनम्, ईहनीयम्, ईहा—षड् इच्छायाम् ।

५४१. वहि महि वृद्धौ—वंहते—साहाय्यं करोति । वंहकः, वंहमानः—सहायकः । वंहिः, वंहुः, वंहनम्, वंहनीयम्, वंहम्—पञ्च साहाय्यकरणे । मंहते—उत्पद्यते ( अङ्कुरितो भवति ) । मंहकः, मंहमानः—उत्पद्यमानः । मंहिः, मंहुः, मंहम्, मंहनम्, मंहनीयम्—पञ्च उत्पादे ( अङ्कुरीभावे ) ।

५४२. अहि ग्लिह वक्रगतौ—कुटिलगत्याम् । अंहते—कुटिलं गच्छति । अंहकः, अंहमानः—पापः । अंहस्—पापम् । अंहिः, अंहुः, अंहनम्, अंहनीयम्—चत्वारः कुटिलगत्याम् । ग्लेहते—वामनो भवति, लङ्गते । ग्लेहकः, ग्लेहमानः—वामनः, पङ्गुः । ग्लिहिः, ग्लिहुः, ग्लेहनम्, ग्लेहनीयम्—चत्वारो वामनीभावे, पङ्गुभावे ।

५४३. गर्ह गल्ह[1] कुत्सने—निन्दायाम् । गर्हते—निन्दति । गर्हकः, गर्हमाणः—निन्दकः । गल्हते—निन्दति । गल्हकः, गल्हुकः—निन्दकः । गल्हिः, गल्हुः, गल्हनम्, गल्हनीयम्—चत्वारो निन्दायाम् ।

५४४. बल्ह मल्ह विल्ह कल्ह प्राधान्यपरिभाषणहिंसादानेषु—मुख्ये, परिभाषणे, हिंसायां, दाने च । बल्हते—मुख्यो भवति । बाल्हिकः—देशविशेषः, अश्वः[2] । बल्हणः, बल्हकः, बल्हनम्, बल्हनीयम्—त्रयो प्राधान्ये । मल्हते—कठोरं भाषते । मल्हणः—शिवभक्तः संन्यासी [ एतन्नामा ][3] । मल्हकः, मल्हमानः—द्वौ कठोरभाषितरि । मल्हिः, मल्हनम्, मल्हनीयम्—कठोरवचने । बिल्हते—वर्णयति । बिल्हणः—मल्हणस्य मातुलः । बिल्हकः, बिल्हमानः—द्वौ वर्णयितरि । विल्हिः, बिल्हनम्, बिल्हनीयम्—त्रयो वर्णने । कल्हते—ददाति । कल्हणः[4], कल्हकः, कल्हमानः—त्रयो दातरि । कल्हिः, कल्हनम्, कल्हनीयम्—त्रयो दानकर्मणि । कल्हारम्—(?) ।

---

१ कलकत्तामुद्रिते ग्रन्थे 'गल्ह' इत्येवं हकारल्कारयोर्विपर्यासो दृश्यते तथैव 'गल्हते' इत्याद्युदाहरणेष्वपि । स प्रमादपाठः, हकारान्तप्रकरणानुरोधात्, उत्तरत्र 'बल्ह मल्ह' आदिषु सर्वसम्मतपाठस्योपलम्भाच्च ।

२. बाल्हिकदेशजः ।

३. द्रष्टव्यम् अत्रैव उत्तरधातोर्बिल्हणशब्दः ।

४. राजतरङ्गिणीविरचयितारं महाकविं कल्हणं नात्र धातुवृत्त् स्मरति, किमत्र कारणम् ?

५४५. वर्ह चर्ह वेह्व जेह्व वाह्व प्रयत्ने—व्यवसाये। वर्हते–क्रीडति। वर्हिणः–मयूरः। वर्हम्–(पुच्छम्)। वर्हिस्–पूजाद्रव्यम् (कुशा)। वर्हकः, वर्हमाणः–क्रीडकः। वर्हणम्, वर्हणीयम्–क्रीडाकर्म। चर्हते–नृत्यति। चर्हः–(?)। चर्हिः, चर्हणम्, चर्हणीयम्–त्रयो नृत्यकर्मणि। चर्हकः, चर्हमाणः–नर्तकः। वेह्वते–उद्योगं करोति। वेह्वकः, वेह्वमानः–उद्योगी। वेह्विः, वेह्वनम्, वेह्वनीयम्–उद्योगकर्मणि। जेह्वते–विचारयति। जेह्वकः, जेह्वमानः–विचारकः। जेह्विः, जेह्वनम्, जेह्वनीयम्–विचारणा। वाह्वते–वहति। वाह्वकः, वाह्वमानः–वोढा। वाट्, वाहः, वाह्वनम्, वाह्वनीयम्, वाह्विनी–पञ्च नद्याम्, सेनायाम्।

५४६. द्राह्व निद्राक्षये—जागरणे। द्राह्वते–जागर्ति। द्राह्वकः, द्राह्वमानः–जागरिता। द्राह्विः, द्राह्वणम्, द्राह्वणीयम्, द्राढा, द्राह्यम्–पञ्च जागरणे।

५४७. ऊह्व वितर्के—विचारे। ऊह्वते–विचारयति (अनुमाति)। ऊह्वकः, ऊह्वमानः–विचारकः। ऊह्विः, ऊहा, ऊह्वनम्, ऊह्वनीयम्, ऊह्यम्, ऊट्–षट् विचारक्रियायाम्।

५४८ गाह्व विलोडने—गाह्वते–विलोडते। गाह्वकः, गाह्वमानः–विलोडकः। गाह्विः गाढा, गाह्वनम्, गाह्वनीयम्, गाह्यम्–पञ्च विलोडनकर्मणि।

५४९. घुपिर् क्रान्तिकरणे—अन्धकारनिवारणे। घुपते[1]–स्खलनमपमार्ष्टि। घुपकः, घुपमाणः—विस्मरणत्यागी। घुपिः, घुप्तिः, घुप्तम्, घुपणम्, घुपणीयम्, घुप्यम्–षट् स्खलनपरित्यागे।

५५०. स्मिङ् ईषद्धसने—अल्पहासे (मुस्कराने में)। स्मयते–अल्पं हसति (मुस्कराता है)। स्मयकः, स्मयमानः–ईषद्धासकः। स्मितम्, स्मितिः, स्मयः, स्मयिः, स्मयनम्, स्मयनीयम्, स्मेरम्–ईषद्धसने।

५५१. कुङ् खुङ् गुङ् घुङ् ङुङ् ऊङ् ऋङ् ॠङ् लृङ् ॡङ्[2] एङ् ऐङ् ओङ् औङ् हुंङ् (? कुङ्) युङ् णुङ् नुङ् शब्दे—ध्वनौ। कवते–

---

१. 'घुपते, घुपकः' इत्यादिषु गुणाभावः कथमिति न ज्ञायते।

२. काशकृत्स्नाचार्यो द्विमात्रिकम् ऌकारं स्वीकरोति। अत एव तत्संक्षेपभूते कातन्त्रे दशानां (अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ) स्वराणां समानसंज्ञा निर्दिश्यते। द्र० का० व्या० १।१।३॥ आपिशलपाणिनीयास्तु द्विमात्रिकम् ऌकारं नेच्छन्ति (द्र० आ० शि०, पाणिनीया सूत्रात्मिकाशिक्षा, प्रकरण ६)। तैत्तिरीयप्रातिशाख्यकृत्तु द्विमात्रिकम् ऌकारं त्यक्त्वा नवानां समानाक्षरसंज्ञा विधत्ते, शौनककात्यायनौ ऌकारस्य ह्रस्वदीर्घानुगौ भेदावुज्झित्वाऽष्टानामेव समानसंज्ञां मतः।

गर्जति । कुः—पृथिवी । कविः, कवकः, कवमानः—अयो वर्णयितरि । कवनम्, कवनीयम्, काव्यम्, कव्यम्,—चत्वारो वर्णनक्रियायाम् । कव्यम्—यज्ञद्रव्यम् (पितृमेधसंबन्धि ) । कः—ब्रह्मा । खवते—स्तौति । खविः, खवकः, खवमानः—स्तावकः । खुः—पृथिवी । खः—विष्णुः । खवनम्, खव्यम्, खाव्यम्, खवनीयम्—स्तवने, प्रशंसने । गवते—आशंसते, मन्यते । गवकः, गवमानः—आशंसकः, मन्ता । गः—गणपतिः । गुः, गविः, गव्यम्, गाव्यम्, गवनम्, गवनीयम्—षट् मनने । घवते—हुँकरोति । घवकः, घवमानः—हुँकर्त्ता । घुः—हुँकारः । घः—मेघः । घविः, घव्यम्, घाव्यम्, घवनम्, घवनीयम् पञ्च हुँकारकर्मणि । [उङ्—]अवते—पालयति । अवकः, अवमानः—पालकः । उः—गौरी । अविः—( भेड़ ) । अव्यम्, आव्यम्, अवनम्, अवनीयम्—रक्षणम् । [ ऊङ्— ] अवते—विश्वस्तं करोति । अवकः, अवमानः—विश्वासयिता । ऊः, अविः, अवनम्, अवनीयम्,—चत्वारो विश्वसने । [ ऋङ्—] अरते—महत्त्वं प्रदर्शयति । अरकः, अरमाणः—महत्त्वप्रदर्शयिता । ऋः, अरिः, अरणम्, अरणीयम्, अर्यम्, आर्यम्—षट् महत्त्वप्रदर्शने । [ ॠङ्— ] अरते—हिनस्ति । अरकः, अरमाणः—हिंसकः । ऋः ( ?, ॠः ), अरिः, अरम्, अरणम्, अरणीयम्, अर्यम्, आर्यम्—सप्त हिंसने । [ ऌङ्— ] अलते—समाप्नोति । अलकः, अलमानः—समापयिता । लृः, आलिः, अलनम्, अलनीयम्, अल्यम्, आल्यम्—षट्—समापने । अलम्—पर्याप्तम् । [ ॡङ्— ] अलते—सहते । अलकः, अलमानः—राजा, पर्वतः । ॡः, अलनम्, अलनीयम्—सहनम् । [ एङ्— ] अयते । अयकः, अयमानः । ए, अयिः, अयनम्, अयनीयम् । [ऐङ्—] आयते—शास्ति । आयकः, आयमानः—राजा । ऐ, आयनम्, आयनीयम्—त्रयः शासने । [ओङ्—] अवति—शब्दयति । अवकः, अवमानः—द्वा आह्वयितरि । ओ, अवनम्, अवनीयम्—त्रय आह्वाने । [ औङ्— ] आवते—गालिं ददाति । आवकः, आवमानः—गालिप्रदातरि । औ, अवनम् , औवनीयम्—गालिप्रदानम् । ङवते—खादति । ङवकः, ङवमानः—खादकः । ङ, ङवनम् , ङवनीयम्—खाद्यम् । ञवते—विस्मरति । ञवकः, ञवमानः—विस्मर्ता । ञ, ञवनम् , ञवनीयम्—विस्मरणम् । णवते—वदति । णवकः, णवमानः—वदिता । ण, णवनम् , णवनीयम्—वाक्यम् , भाषा । नवते—निश्चिनोति । नवकः, नवमानः—निश्चेता । न, नु, नवनम् , नवनीयम्—चत्वारो निश्चये ।

५५२. चुङ् च्युङ् जुङ् झुङ् छुङ्[१] क्षुङ् टुङ् ठुङ् डुङ् ढुङ् पुङ् फुङ् बुङ् भुङ् प्रुङ् प्लुङ् गाङ् श्यैङ् गतौ—चवते—चलति । चवकः, चवमानः

१. 'छुङ्' वृत्तौ न व्याख्यायते । 'जुङ्' धातोरनन्तरं 'च्युङ्' व्याख्यायते ।

–चलिता। च, चवनम्, चवनीयम्–त्रयो गमने। च्यवते–तरति (उतराता है)। च्यवकः, च्यवमानः–तारकः (उतरानेवाला)। च्यवनः–एतन्नामा मुनिः। च्यवनम्, च्यवनीयम्–तरणम् (उतराना)। जवते–त्वरते। जवकः, जवमानः–क्षिप्रकारी। ज, जवः, जवनम्, जवमानम् (?, जवनीयम्), जव्यम्, जाव्यम्, जविः–सप्त तीव्रे, क्षिप्रे। ज्यवते[1]–धावति। ज्यवकः, ज्यवमानः–धावकः। ज्यविः, ज्यवनम्, ज्यवनीयम्–धावनम्। छवते[2]–कूर्दते। छवकः, छवमानः–कूर्दकः। छवनम्, छवनीयम्, छव्यम्, छाव्यम्, छविः–पञ्च वैहायस्यां गतौ, कूर्दने। झवते–कूर्दते। झवकः, झवमानः–द्वौ कूर्दितृरि। झ, झु, झवः, झविः, झवनम्, झवनीयम्, झव्यम्, झाव्यम्–अष्टौ कूर्दने। टवते–सिञ्चति (छिड़कता है)। टवकः, टवमानः–सिञ्चिता। ट, टु, टविः, टवनम्, टवनीयम्, टव्यम्, टाव्यम्–सप्त सिञ्चने। ठवते–वञ्चति, ठवकः, ठवमानः–वञ्चकः। ठ, ठु, ठविः, ठवनम्, ठवनीयम्, ठव्यम्, ठाव्यम्–सप्त वञ्चने। डवते–ऋजु भवति। डवकः डवमानः–ऋजुः। ड, डु, डवि, डवनम्, डवनीयम् डव्यम्, डाव्यम्–सप्त ऋजुभावे। ढवते–ध्माति। ढवकः, ढवमानः–ध्माता। ढ, ढु, ढविः, ढवनम्, ढवनीयम्, ढव्यम्, ढाव्यम्–सप्त ध्माने। पवते–रक्षति। पवकः, पवमानः–रक्षकः। प, पु, पविः, पवः, पवनम्, पवनीयम्, पव्यम्, पाव्यम्–अष्टौ रक्षणे। फवते–भवति। फवकः, फवमानः–भावुकः। फ, फु, फविः, फवनम्, फवनीयम्, फाव्यम्, फवः–सप्त भवने। बवते (?)। बवकः, बवमानः (?)। ब, बु, बविः, बवः, बवनम्, बवनीयम्, बव्यम्, बाव्यम् (?)। भवते–घर्षति। भवकः, भवमानः–घर्षिता। भ, भु, भविः भवः, भवनम्, भवनीयम्, भव्यम्, भाव्यम्–अष्टौ घर्षणे। प्रवते–अधिकं भवति। प्रवकः, प्रवमाणः–आधिक्यम्। प्र, प्रु, प्रवः, प्रविः, प्रवणम्, प्रवणीयम्, प्रव्यम्, प्राव्यम्–अष्टा आधिक्ये। प्लवते–तरति। प्लवकः, प्लवमानः–तरिता। प्लवः–मण्डूकः, लघ्वी तरणिः (छोटा जहाज)। प्लवनम्, प्लवनीयम्–तरणम्। गावते–गानं करोति। गायकः, गायमानः–गायकः। गाः, गयः, गायनम्, गायनीयम्, गायम्–पञ्च गाने (संगीते)। श्यायते–तरति। श्यायकः, श्यायमानः–तरिता।

५५३. धृङ् अवध्वंसने–सहने। धरते–सहते। धरकः, धरमाणः, धारकः–त्रयः सोढरि। धरः–पर्वतः। धृत्, धरणी, धारणी, धरित्री, धरा–पञ्च

---

१. ज्युङ् सूत्रे न पठ्यते।

२. सूत्रे झुङ् पूर्वं पठ्यते।

पृथिव्याम् । धरणम्, धारणम्, धरणीयम्, धारणीयम्, धर्यम्, धार्यम्–पट् सहने । धरिः–तटम् । धरुः –विपादः ( झगड़ा ) ।

५५४. मेङ् प्रतिदाने—ग्रहणे[1] । मयते–गृह्णाति[1] । मायः, मायकः, । मायमानः–ग्रहीता । मा–लक्ष्मीः । मा–अपव्ययः । मायनम्, मायनीयम्–ग्रहणम् मायम्–नाशनम् ( छिपाना ) ।

५५५. दैङ् त्रैङ् पालने—रक्षणे । दायते–रक्षति । दायकः, दायमानः, दाता–रक्षकः । दायम्, दा, दानम्, दायनम्, दानीयम्–पञ्च रक्षणे । त्रायते–रक्षति । त्राता, त्रायकः, त्रायमाणः–रक्षकः । त्रातम्, त्राणम्, त्रायणम्, त्रायणीयम्, त्रायम्–पञ्च रक्षणे ।

५५६. प्यैङ् वृद्धौ–प्यायते–वर्धते । प्याता, प्यायकः, प्यायमानः–वर्धिता । प्या, प्यानम्, प्यायनम्, प्यायनीयम्, प्यायम्–पञ्च वर्धने ।

५५७. पुङ् पवने—श्वासग्रहणे । पवते–श्वसिति । पवः, पूः, पवनम् :, पवमानः, पविता–पञ्च श्वसितरि । पविः, पव्यम्, पाव्यम्, पवनीयम्–चत्वार श्वसने । पवनम्, पावनम्, पूतम्, पूतिः–चत्वारः शुद्धौ । पवित्री–पवित्रकर्त्री ।

५५८. मुङ् मू[2] बन्धने—मवते–बध्नाति । मुः, मवकः, मवमानः–त्रयो निग्रहीतरि । मूतम्–आच्छादनम् । मूतिः, मवनम्, मवनीयम्, मव्यम्, माव्यम्–पञ्च बन्धने ।

५५९. डीङ् विहायसा गतौ—पक्षिणां गतौ । डयते–आकाशे चरति । डयकः, डयमानः–आकाशचारी । प्रडीनम्–पक्षिणामवतरणम् । उड्डीनम्–पक्षिणामुपरिगमनम् । संडीनम्–पक्षिणां संरक्षणम् । डय्यम्, डाय्यम्, डयनम्, डयनीयम्–पञ्चाकाशगमने ।

५६०. गुप गोपनकुत्सनयोः—रक्षायाम्, निन्दने । जुगुप्सते[3]–निन्दति

---

१. 'प्रणिदाने प्रणिदानम् प्रत्यर्पणम्' इति क्षीरस्वामी ( क्षीरत० १।६८५ ) । हेमचन्द्र-शाकटायनौ काशकृत्स्नवत् प्रतिदाने । प्रतिदानमपि प्रत्यर्पणमेव । तच्च कस्माचित् किञ्चिद् वस्तुगृहीत्वा वस्त्वन्तरस्यप्रदानम् । कन्नटीकायाम् 'ग्रहणम्' ( लेना ) इत्यर्थो निर्दिष्टः, स च प्रतिग्रहणरूपो व्याख्येयः । स्वकीयं वस्तु कस्मैचिद् दत्त्वा ततो वस्त्वन्तरस्य प्रतिग्रहणम् ( दानं प्रतिपरिवर्तनं ) ।

२. इत्यस्य नाख्यातरूपं निर्दिष्टम् ।

३. 'दानादीनां सन् सार्वधातुके, द्विः सनि' आभ्यां सन् द्विर्वचनं च शेषम् । द्र० १।५८२ धातुसूत्रव्याख्यानम् ।

कुत्सयति। गुप्, गोपः, जुगुप्सकः, जुगुप्समानः–चत्वारःकेत्सक। जुप्सा[१]–जुप्सनम्[१] जुप्सनीयम्[१]–त्रयः कुत्सायाम्।

५६१. मान पूजायाम्—आदरे। मीमांसते–आद्रियते। मीमांसः, मीमांसकः–आदरिता। मीमांसा, मानम्, मान्यम् मानिः, मान्, माननम्, माननीयम्–सप्त मान्यतायाम्।

५६२. बध बन्धने—निग्रहे। बधते[१]–बध्नाति। बध्, बधः, बधकः, बधमानः–चत्वारो निग्रहीतरि। बधनम्, बधनीयम्, बध्यम्, बाध्यम्–चत्वारो बन्धने।

५६३. रभ राभस्ये—कार्योपक्रमे। रभते–उपक्रमते। रम्, रभकः, रभः, रभमाणः–चत्वार उपक्रमके। रभिः, रभणम्, रभ्यम्, राभ्यम्, रभणीयम्–पञ्च उपक्रमे।

५६४. डुलभष् प्राप्तौ—लभते–प्राप्नोति। लभकः, लाभकः, लाभमानः–त्रयः प्रापके। लभ्, लब्धिः, लब्धम्, लभिः, लभनम्, लभ्यम्, लाभ्यम्, लभः, लाभः–नव प्रापणे।

५६५. द्युत शुभ रुच दीप्तौ—प्रकाशे। द्योतते–प्रकाशते। द्योतकः, द्योतमानः–प्रकाशकः। खद्योतः–सूर्यः, लघुकीटविशेषः। द्युत्, द्युतिः, द्योतनम्, द्योतनीयम्, द्युत्यम्, द्यौत्यम्–षट् प्रकाशे। शोभते–प्रकाशते। शोभकः, शोभमानः–द्योतकः। शुभ्, शुभिः, शुभम्, शोभा, शोभनम्, शोभनीयम्–षट् प्रकाशने। रोचते–अभिलषति, प्रकाशते। रोचकः, रोचमानः, रुचकः–प्रकाशकः। रुक्, रुचिः, रोचनम्, रोचनीयम्, रुच्यम्, रौच्यम्, षट् रोचने।

५६६. श्वित वर्णे—श्वेतवर्णे। श्वेतते–शुभ्रो भवति। श्वेतकः, श्वेतमानः–शुभ्रवर्णकः। श्वित्, श्वितिः, श्वेतः, श्वेतनम्, श्वेतनीयम्, श्वित्यम्, श्वैत्यम्–सप्त शुभ्रवर्णे।

५६७. ञिमिदा स्नेहने—मेदते–स्निग्धो भवति। मेदकः, मेदमानः,

---

१. अत्र पाठभ्रंशः प्रतीयते। यथासंख्यम् 'जुगुप्सा, जुगुप्सनम्, जुगुप्सनीयम्' इति शुद्धः पाठः स्यात्। यद्वोक्तधातुवृत्त्यनुसारम् 'गुप्सा, गुप्सनम्, गुप्सनीयम्' इत्येवं पाठो द्रष्टव्यः।

स्नेहनकर्तरि । मेदिनी—पृथिवी । मेदः—शरीरधातुविशेषः । मेदुरम्—मेदोयुक्तम् । मिद्, मिदिः, मिदुः, मेदनम्, मेदनीयम्, मेद्यम्, मैद्यम्, मित्रम्—अष्टौ स्नेहने ।

५६८. ञिष्विदा मोचने—स्वेदे स्नेहने च । स्वेदते—( पसीना बहता है ) । स्वेदकः, स्वेदमानः—स्वेदयुक्तः । स्विद्, स्विदिः, स्विदुः, स्वेदनम्, स्वेदनीयम्—पञ्च स्वेदे ।

५६९. घुट परिवर्तने[1]—नृत्ये । घोटते[2]—नृत्यति । घोटकः, घोटमानः—अश्वः । घोटिका—अश्वा । घुटिका—मात्रा, औषधगुटिका । घुट्, घुटिः, घोटनम्, घोटनीयम्, घुट्यम्, घोट्यम्, घौट्यम्, घाटा—अष्टौ नृत्ये ।

५७०. रुट लुट रुठ लुठ प्रतिघाते—प्रतिहिंसायाम् । रोटते—प्रतिघातयति ( बदले में मारता है ) । रोटकः, रोटमानः—प्रतिहन्ता । रुट्, रुटः, रोटनम्, रोटनीयम्, रोट्यम्, रौट्यम्—प्रतिघातने । रोटिः—(?) । करोटिः—शिरः । लोटते—पदा ताडयति ( लात मारता है ) । लोटकः, लोटमानः—पदेनघातकः । लुट्, लुटिः, लोटः, लोष्टुः, लोटनम्, लोटनीयम्—षट् पदाघाते । रोठते—कठोरो भवति । रोठकः, रोठमानः—कठोरं भावुकः, रुठ्, रुठः, रोठः, रोठनीयम्—पञ्च कठोरे । लोठते—मिलति । लोठकः, लोठमानः—मेलकः । लुठ्, लुठिः, लोठनम्, लोठनीयम्—चत्वारो मेलने, मिश्रणे ।

५७१. क्षुभ संचलने—कम्पने । क्षोभते—कम्पते । क्षोभकः, क्षोभमानः—कम्पकः । नान्तः क्षुण्णादीनाम् ( ?, क्षुभादीनाम् ) क्षुभ प्रभृतीनां प्रत्ययानामन्ते नकारस्य णत्वं न भवति । क्षुभ्, क्षुभः, क्षोभनम्, क्षोभनीयम्, क्षुब्धम्, क्षुब्धिः—चत्वारः ( ?, षट् ) कम्पने ।

५७२. णभ तुभ हिंसायाम्—नभते—मारयति । नभकः, नभमानः—मारयिता । नाभिः—शरीरैकदेशः । पद्मनाभिः—अर्हन्तस्य पिता । नभ्, नभिः, नभनः, नभनीयम्, नभ्यम्, नाभ्यम्, नब्धिः, नब्धम्—अष्टौ हिंसायाम् । तोभते—ताडयति । तोभकः, तोभमानः—ताडिता । तुभ्, तुभिः, तोभम्, तोभ्यम्, तौभ्यम्, तुब्धिः, तुब्धम्, तोभनीयम्—अष्टौ ताडनायाम् ।

---

१. पाणिनीयमतानुसारमिह स्वार्थे सनि 'बीभत्सते' इत्यादीनि रूपाणि भवन्ति । यथा गुप् मान धात्वोर्वृत्तिकृता जुगुप्सते मीमांसते इत्यादीनि रूपाणि प्रदर्शितानि ।

२. 'परिवर्तने' इत्यन्ये । कातन्त्रेऽपि 'परिवर्तने' इत्येव पठ्यते । अतो घोटनं इत्यनेन औषधादिपेषणक्रियोच्यते । नर्तनार्थस्तु लेखकप्रमादजः प्रतिभाति ।

५७३. भ्रंसु भ्रशु अवस्रंसने—पतने । भ्रंसते–पतति । भ्रंसकः–भ्रंसमानः–पतिता । भ्रंसनम्, भ्रंसनीयम्, भ्रस्तम्, भ्रस्तिः–चत्वारः पतने । भ्रशते[1]–अधः पतति । भ्रशकः, भ्रशमानः, भ्रष्टः, भ्रष्टवान्–चत्वारः पतिते । अपभ्रंशः–विकृतः शब्दः । भ्रशनम्, भ्रशनीयम्, भ्रष्टिः–अधःपतने ।

५७४. ध्वंसु गतौ—दूरीभावे । ध्वंसते–दूरीभवति, नश्यति । ध्वंसकः, ध्वंसमानः, ध्वस्तः ध्वस्तवान्–चत्वारो ध्वंसकर्तरि । ध्वंसिः, ध्वंसः, ध्वंसा, ध्वंसनम्, ध्वंसनीयम्, ध्वंसिः–चत्वारो दूरीभावे ।

५७५. श्रम्भु विश्वासे—श्रम्भते–विश्वसिति । श्रम्भकः, श्रम्भमाणः, श्रब्धः, श्रब्धवान्–चत्वारो विश्वसितरि । श्रम्भिः, श्रम्भुः, श्रम्भणम्, श्रम्भणीयम्, श्रब्धिः–पञ्च विश्वासे ।

५७६. वृतु वर्तने—व्यवहारे । वर्तते–व्यवहरति । वर्तकः, वर्तमानः–व्यावहारिकः । वृत्तम्, वृत्तिः, वर्तनम्, वर्तनीयम्, वार्ता, वार्तिकम्–षड् व्यवहारे । वार्ताकः, वार्ताकिः–'बैंगन' इति प्रसिद्धम् । इक्तिपौ धातुस्वरूपे–क्रियाभावे इक्श्तिपौ भवतः । वृतिः–वर्तनम् । वत्तिः, वर्तिका–दीपाङ्गम् ('बत्ती' इति प्रसिद्धम्) ।

५७७. वृध[2] वृद्धौ—वर्धते एधते । वर्धकः, वर्धमानः, वृद्धः–त्रयो ज्येष्ठे वृद्धे वा । वृध्, वृधिः, वृद्धिः, वर्द्धिः, वर्धनम्, वर्धनीयम्, वर्ध्यम्, वार्ध्यम्, वार्धिकम्, वार्धिक्यम्–दश वृद्धौ ।

५७८. शृधु शब्दकुत्सायाम्—ध्वनेर्हीनतायाम् । शर्धते–अपानिति । शर्धकः, शर्धमानः, शृद्धः–अपानशब्दकर्तरि । शृध्, शृधिः, शृद्धिः, शर्धा, शर्धनम्, शर्धनीयम्, शर्ध्यम्, शार्ध्यम्–अष्टौ अपानवायौ ।

५७९. स्यन्दू स्रवणे—स्रोतसि । स्यन्दते–प्रस्रवति । स्यन्दः, स्यन्दकः, स्यन्दमानः–त्रयः स्रोतसि । स्यन्दिः, स्यन्दनः, स्यन्दनीयम्, सन्द्यम्, सान्द्यम्–पञ्च स्रवणे ।

५८०. कृपू सामर्थ्ये—कृपायाम् । कृपो रो लः–कृपुधातो रकारस्य लकारो भवति । कल्पते–कृपां करोति । कृपालुः, कल्पकः, कल्पमानः–त्रयः

---

१. 'भ्रंशु, इति साधु पाठः स्यात् । कातन्त्रधातुपाठेऽपि 'भ्रंश' इत्येव पठ्यते । अत उदाहरणेष्वपि 'भ्रंशते भ्रंशकः भ्रंशमानः' इत्यादीनि रूपाणि ज्ञेयानि ।

२. 'वृधु' इति शुद्धः पाठः स्यात् ।

कृपालौ। क्लप्, क्लपि, क्लपा, कल्पनीयम्, कल्प्यम्, काल्प्यम्–षट् सामर्थ्ये।

[इति काशकृत्स्नधातुपाठे भ्वादिगण आत्मनेपदिनः समाप्ताः]

## (३)

## णिजन्ताश्च

५८१. घटि[1] चेष्टायाम्—घटते–व्याप्रियते। घटयति[2]–व्यवहरति। घटकः, घटमानः–भविता। घट्, घटिः, घटः, घटा, घटनम्, घटनीयम्, घट्यम्, घाट्यम्–अष्टौ व्यापारे।

५८२. व्यथ दुःखभयचलनयोः—दुःखेन भयेन च व्यथने चलने। व्यथते, व्यथयति–दुःख्यति, बिभेति। व्यथकः, व्यथमानः–दुःखितः, भीरुश्च। व्यथ्यम्, व्यथ्, व्यथिः, व्यथम्, व्यथा, व्यथनम्, व्यथनीयम्, व्याथ्यम्–दुःखे भये।

५८३. प्रथ प्रख्याने—प्रसिद्धौ। प्रथते, प्रथयति–प्रसिद्धो भवति। प्रथकः, प्रथमः, प्रथमानः–प्रसिद्धः। प्रथ्, प्रथिः, प्रथमम्, प्रथनम्, प्रथनीयम्–पञ्च प्रख्याने।

५८४. प्रस विस्तारे—प्रसते, प्रसयति–विस्तृणाति। प्रसकः, प्रसमानः–विस्तारकः। प्रसः, प्रसिः, प्रसा, प्रसनम्, प्रसनीयम्, प्रस्यम्, प्रास्यम्, प्रासम्–अष्टौ सुविस्तारे।

५८५. म्रद मर्दने—म्रदते, म्रदयति–मर्दयति। म्रदकः, म्रदमानः–मर्दकः। म्रद्, म्रदिः, म्रदनम्, म्रदनीयम्, म्रद्यम्, म्राद्यम्–षट् मर्दने।

५८६. स्खद स्खदने—विशरणे स्खलने च। स्खदते, स्खदयति–कृन्तति,

---

१. 'घट' इति शुद्धपाठः, घटते घटयति इत्यादिरूपोदाहरणात्। इदितो नुम् स्यात्। कातन्त्रधातुपाठेऽपि 'घट' इत्येव पाठः।

२. इतः प्रभृति णिजन्तेषु 'घटादयो मानुबन्धाः' (धातुसूत्र १।५९२) इत्यनेन मित्त्वाद् ह्रस्वभावः।

चोरयति, अपराध्यति। खदकः, खदमानः—विकर्तकः, अपराधी। खद्, खदः, खदनम्, खदनीयम्, खद्यम्, खाद्यम्–[·पट्] विकर्तने, अपराधे वा।

५८७. क्षजि दाने गतौ च—दाने चलने च। क्षञ्जते, क्ष[ञ्ज]यति—ददाति, चलति। क्षञ्जकः, क्षञ्जमानः—दाता, गन्ता। क्षञ्जम्, क्षञ्जिः, क्षञ्जनम्, क्षञ्जनीयम्–पञ्च[1] दाने चलने च।

५८८. दक्ष हिंसायां च—हिंसने घात् चलने च। दक्षते, दक्षयति—हिनस्ति। दक्षः, दक्षकः, दक्षमाणः–त्रयो घातके। दक्षिः, दक्षा, दक्षणम्, दक्षणीयम्, दक्ष्यम्, दाक्ष्यम्–पट् हिंसायाम्।

५८९. क्रप कृपायाम्—दयायाम्। क्रपते, क्रपयति। क्रपकः, क्रपमाणः—कृपालुः। क्रपिः, क्रपा, क्रपणम्, क्रपणीयम्, क्रप्यम्, क्राप्यम्–पट् दयायाम्।

५९०. क्रदि क्लदि क्रद क्लद वैकल्ये—विकलतायाम्–क्रन्दते, क्रन्दयति—विकलो भवति। क्रन्दकः, क्रन्दमानः–द्वौ विकले। क्रन्दिः, क्रन्दनम्, क्रन्दनीयम्, क्रन्द्यम्, क्रान्द्यम्–पञ्च चञ्चलतायाम्। क्लन्दते, क्लन्दयति—चिन्तयति। क्लन्दकः, क्लन्दमानः—चिन्तयिता। क्लन्दिः, क्लन्दम्, क्लन्दनम्, क्लन्दनीयम्, क्लन्द्यम्, क्लान्द्यम्–पट् चिन्तने। क्रदते, क्रदयति—व्यथते, चिन्तति। क्रदकः, क्रदमानः—चिन्तकः। क्रदिः, क्रदनम्, क्रदनीयम्, क्रद्यम्, क्राद्यम्–पञ्च चिन्तने। क्लदते, क्लदयति—चिन्तितो भवति। क्लदकः, क्लदमानः—चिन्तितः। क्लदिः, क्लदम्, क्लदनम्, क्लदनीयम्, क्लद्यम्, क्लाद्यम्–पट् चिन्तायाम्।

५९१. ञित्वरा सम्भ्रमे–शैघ्र्ये। त्वरते, त्वरयति—शैघ्र्यमाचरति। त्वरकः, त्वरमाणः, त्वरन्–शीघ्रकारी। त्वरिः, त्वरम्, त्वरणम्, त्वरितम्, त्वर्यम्, त्वार्यम्, त्वरितव्यम्, त्वरणीयम्–अष्टौ शीघ्रतायाम्।

५९२. घटादयो मानुबन्धाः—घटप्रभृतयो मानुबन्धयुक्ता भवन्ति। मानुबन्धाद् इन् मा—मानुबन्धधातुभ्य इन् णानुबन्धवन्मा[2] भवेत्।

५९३. ज्वर रोगे—ज्वरति, ज्वरयति—तीव्रं संतपति। ज्वरकः, ज्वरन्—उष्णः। ज्वरः, ज्वरणम्, ज्वरणीयम्, ज्वर्यम्, ज्वार्यम्–पञ्चौष्ण्ये।

---

१. उदाहरणेषु चत्वार एव पठ्यन्ते, लेखकप्रमादाद् भ्रष्टः स्यात्।

२. कन्नडटीकायां सूत्रार्थोऽस्पष्टः। अस्माभिः चुरादिप्रकरणे निर्दिष्टम् 'इन् णानुबन्धवत्' सूत्रमनुरुध्यायमर्थः प्रदर्शितः। तेन तत्रैव निर्दिष्टेन 'वृद्धिरादौ सणे' सूत्रेण वृद्धिर्न भवति। पाणिनीयास्तु वृद्धिं कृत्वा मितां ह्रस्वः (६।४।९२) सूत्रेण ह्रस्वत्वं विदधति।

५९४. गड सेचने—घर्षणे। गडति, गडयति–घर्षति। गडकः, गडन्–घर्षकः। गडम्, गाडिः, गडुः, गडनम्, गडनीयम्, गड्यम्, गाड्यम्, गाडिः, गाडम्–नव घर्षणे।

५९५. हेड वेष्टने—परिवेष्टने ( लपेटने में )। हेडति, हेडयति–परिवेष्टयति। हेडकः, हेडन्, हेडः–परिवेष्टकः। हेडिः, हेडुः, हेडनम्, हेडनीयम्, हेड्यम्, हैड्यम्, हैडम्–सप्त वेष्टने।

५९६. वट भट परिभाषणे—व्यक्तभाषणे। वटति, वटयति–वदति। वटः, वटुः, वटन्–वदिता। वटः–एतन्नामा वृक्षः। वटा–भक्ष्यविशेषः ( 'बड़ा' इति भाषायाम् )। वाटम्–धावनम्। वाटी–मार्गः, उद्यानम्। वटुकम्–औषधमात्रा, गुटिका। वटनम्, वटनीयम्, वट्यम्, वाट्यम्–चत्वारो वार्तायाम्। भटति, भटयति–गप्पयति[1]। भटः, भटकः, भटन्–गप्पयिता। भटिः, भटुः, भटनम्, भटनीयम्, भट्यम्, भाट्यम्–गप्पक्रियायाम्। भाटः–भृतिः। भाटी–(?)।

५९७. नट नृतौ[2]—नृत्ये। नटति, नटयति–नृत्यति। नटः, नटकः, नाटकः, नटन्–चत्वारो नर्तके। नटिः, नटुः, नटनम्, नटनीयम्, नट्यम्, नाट्यम्–षट् नर्तने।

५९८. कट्ट प्रतिघाते—प्रतिहिंसने। कट्टति, कट्टयति–प्रतिहिनस्ति। कट्टन्, कट्टकः–प्रतिहिंसकः। कट्टम्, कट्टिः, काट्टम्, कट्टनम्, कट्टनीयम्, कट्ट्यम्, काट्ट्यम्–षट् प्रतिहिंसने।

५९९. चक तृप्तौ—शीतीभावे। चकति, चकयति–शीतीभवति। चकः, चककः, चकन्–शीतीभवितरि। चाकलः–रजकः। चाकली–रजकी। चकि, चकु, चकनम्, चकनीयम्, चक्यम्, चाक्यम्, चाकम्, चक्, चाक्–नव शीतीभावे। चक्रम्–(रथाङ्गम्)।

६००. कख हसने—कखति, कखयति–हसति। कखः, कखकः, कखन्–हसिता। कखि, कखु, कखनम्, कखनीयम्, कख्यम्, काख्यम्, काखम्, कख्, काख्–नव हसने।

६०१. रगे शङ्कायाम्—शङ्कायां भये च। रगति, रगयति–शङ्कते। रगः, रगकः, रगन्–शङ्किता। रगिः, रगुः, रगा, रगणम्, रगणीयम्, रग्यम्,

---

१. गप्पं करोति गप्पयति। यद्वा 'गप मिथ्यापरिभाषणे'—'गपयते'। एतद्विषये पूर्वम् ( पृष्ठ ४६ ) टिप्पणी ( १ ) द्रष्टव्या। २. 'नृतौ' इत्यपपाठः कल्पद्रुमटीकायाम्।

राग्यम्, रग्, राग्—नव शङ्कायाम्। रागी—धान्यविशेषः। रागम्—गानम्, रक्तवर्णम्।

६०२. लगे संगमे[1]—सङ्गे। लगति, लगयति—परस्परं संगच्छते। लगः, लगकः, लगन्—संगन्ता। लगिः, लगुः, लग्नम्, लगनम्, लगनीयम्, लगितव्यम्, लग्यम्, लाग्यम्, लागुः—नव परस्परं संगमने, मेघादिराशीनां गतौ च।

६०३. ह्लगे ह्रगे षगे स्थगे संवरणे—आच्छादने। ह्लगति, ह्लगयति—आच्छादितो भवति (?, आच्छादयति)। ह्लगः, ह्लगन्, ह्लगकः—आच्छादयिता। ह्लगिः, ह्लगुः, ह्लगणम्, ह्लगितव्यम्, ह्लगणीयम्, ह्लग्यम्, ह्लाग्यम्, ह्लागम्—अष्टावाच्छादने। ह्रगति, ह्रगयति—आच्छादयति। ह्रगः, ह्रगकः, ह्रगन्—आच्छादकः। ह्रगिः, ह्रगम्, ह्रगनीयम्—त्रय आच्छादने। सगति, सगयति—संवृणोति (ओढ़ता है)। सगः, सगन्, सगकः—संव्रियमाणः (ओढ़ने वाला)। सगिः, सगनम्, सगनीयम्—संवरणे (ओढ़ने में)। स्थगति, स्थगयति-आवृणोति (घेरता है)। स्थगः, स्थगकः, स्थगन्—आवरकः। स्थगिः, स्थगितम्, स्थगनम्, स्थगनीयम्—चत्वार आवरणे।

६०४. कगे गतौ[2]—कगति, कगयति—चलति। कगः, कगकः, कगन्—गन्ता। कागिः, कागः—काकः। कगिः, कगनम्, कगनीयम्—गतौ।

६०५. अक अज[3] कुटिलायां गतौ—अकति, अकयति—कुटिलमाचरति। अकः, अककः, अकन्—वक्रगन्ता। अकिः, अकनम्, अकनीयम्, अक्यम्, आक्यम्, आकम् आक्—सप्त वक्रगमने। आकु—करभूषणम्। [अजति, अजयति······]।

६०६. कण, रण गतौ—कणति, कणयति—चलति। कणः, कणकः, कणन्—गन्ता। कणा—[गन्त्री]। कणम्—धान्यम्। कणुकम्—(?)। कणादः—एतन्नामा महर्षिः, पक्षिविशेषः। कणनम्, कणितव्यम्, कणनीयम्, कण्, काण्, काणम्, कण्यम्, काण्यम्—अष्टौ गमने। रणति, रणयति—चलति। रणकः, रणन्—चलिता। रणनम्, रणनीयम्—द्वौ चलने।

६०७. चण शण श्रण दाने—चणति, चणयति—ददाति। चणन्—दाता। चणः, चणकः—धान्यविशेषः। ('चना' इति प्रसिद्धः)। चणितव्यम्, चणनम्,

---

१. कातन्त्रपाठे 'लगे सङ्गे च'।

२. कगे नोच्यते इति पाणिनीयाः, गतिसामान्यादनेकार्थत्वात्‌ार्थो नोच्यत इति वृत्तिकारा आहुः।

३. अज धातोरुदाहरणानि कन्नडवृत्तौ नोपलभ्यन्ते।

चणनीयम्, चण्यम्, चाण्यम्, चणि, चणु, चाणु, चाणम्, चण्, चाण्—एकादश दाने। शणति, शाणयति—ददाति। शणः, शणकः, शणन्—दाता। शण शाण् शणि, शणु, शणनम्, शणनीयम्, शण्यम्, शाण्यम्, शणितम्—अष्टौ दाने। श्रणति, श्रणयति—रक्षति। श्रणः, श्रणकः, श्रणन्—रक्षकः। श्रण्, श्रणि, श्रणु, श्राणु, श्रणितम्, श्रण्यम्, श्राण्यम्, श्रणनम्, श्रणनीयम्, श्राणम्, श्रणितव्यम्—एकादश रक्षणे।

६०८. श्नथ क्नथ क्रथ क्लथ—हिंसायाम्—मारणे। श्नथति, श्नथयति—मारयति। श्नथः, श्नथकः, श्नथन्—मारयिता। श्नथनम्, श्नथितम्, श्नथितव्यम्, श्नथनीयम्, श्नथ्यम्, श्नाथ्यम्, श्नाथम्, श्नथ्, श्नाथ्, श्नाथु, श्नथि, श्नथु,—द्वादश हिंसायाम्। क्नथति, क्नथयति—ताडयति। क्नथः, क्नथकः, क्नथन्—ताडयिता। क्नथ्, क्नाथ्, क्नथि, क्नथु, क्नाथु, क्नाथम्, क्नथितम्, क्नथितव्यम्, क्नथनम्, क्नथनीयम्, क्नथ्यम्, क्नाथ्यम्, क्नाथम्[1]—त्रयोदश[1] ताडने। क्रथति, क्रथयति—पातयति ( डालता है ! )। क्रथः, क्रथकः, क्रथन्—पातयिता। क्रथ्, क्राथ्, क्रथिः, क्रथुः, क्राथुः, क्रथ्यम्, क्राथ्यम्, क्रथितम्, क्रथितव्यम्, क्रथनम्, क्रथनीयम्—एकादश पातने। क्लथति, क्लथयति—अवहन्ति ( कूटता है )। क्लथः, क्लथकः, क्लथन्—अवहन्ता। क्लथ्, क्लाथ्, क्लथिः, क्लथुः, क्लाथुः, क्लथनम्, क्लथितव्यम्, क्लथनीयम्, क्लथ्यम्, क्लाथ्यम्, क्लाथम्—एकादश अवहनने।

६०९. चनु वनु स्मरणे—चनति, चनयति—स्मरति। चनः, चनकः, चनन्—स्मर्ता। चननम्, चननीयम्, चन्यम्, चान्यम्, चानम्, चन्, चनु, चानु—अष्टौ स्मृत्याम्। वनति, वनयति—स्मरति। वनः, वनकः, वनन्—स्मृतिशीलः। वननम्, वननीयम्, वन्यम्, वान्यम्, वानम्—पञ्च स्मरणे।

६१०. ज्वल दीप्तौ—प्रकाशे। ज्वलति, ज्वलयति—प्रकाशते। ज्वलः, ज्वलनम्, ज्वलकः, ज्वलन्, जाज्वल्यमानः, ज्वाली—षट् प्रकाशयितरि। ज्वलिः, ज्वलुः, ज्वाला—त्रयः प्रकाशे।

६११. ह्वल, ह्मल चलने—स्पन्दने। ह्वलति, ह्वलयति—स्पन्दते। ह्वलः, ह्वलकः, ह्वलन्—स्पन्दिता। ह्वलनम्, ह्वलनीयम्, ह्वलितव्यम्—त्रयः स्पन्दने। ह्मलति, ह्मलयति—कम्पते। ह्मलः, ह्मलकः, ह्मलन्—कम्पकः। ह्मलनम्, ह्मलनीयम्, ह्मलितव्यम्—त्रयः कम्पने।

---

१. 'क्नाथम्' द्विरुच्यते; अतो द्वादश एव साधुपाठः। यद्वा एकत्र 'क्नथम्' इत्यपेक्षते।

६१२. स्मृ आध्याने—स्मरणे। स्मरति, स्मरयति—आध्यायति। स्मरः—मन्मथः। स्मर्ता—आध्यायकः। स्मरणम्, स्मृतिः, स्मृतम्, स्मर्तव्यम्, स्मरणीयम्, स्मर्यम्, स्मार्यम्, स्मर्यमाणम्—अष्टौ स्मरणे।

६१३. दॄ भये—दरति दरयति—बिभेति। दरः, दरकः, दरन्—भीरुः। दाराः पुंसि भूम्नि[1]—पत्नीवाचको दाराशब्दः पुंसि बहुवचने प्रयुज्यते। [दाराः—भार्या।] दरा, दरी—द्वौ तटे। दर्तव्यम्, दरणीयम्, दरणम्, दर्यम्, दार्यम्, दरिः, दॄ—सप्त भयेन श्वयथौ (भय से हाथ पैर फूलने में)।

६१४. नॄ नये—विनये। नरति, नरयति—विनीतो भवति। नरः, नृ, नरकः, नर्ता—चत्वारो विनये। नर्तव्यम्, नरणीयम्, नरणम्, नर्यम्, नार्यम्—पञ्च मृदुनि, कोमले। नरी—भीरुः।

६१५. श्रा पाके—श्रायति, श्राययति, श्रापयति[2]—पचति। श्रायः, श्रायन्, श्रायकः—पक्तरि। श्रायणम्, श्रायणीयम्, श्रायितव्यम्—त्रयः पाके। आतो युरनि[3]—आकारान्तानां धातूनां 'यु' आगमो भवति। आतः पुरिनि—आकारान्तानां धातूनां 'पु' आगमो भवति इन् परे।

६१६. मारणतोषणनिशामनेषु ज्ञा—'ज्ञ अवबोधने'[4] मारणे, प्रसन्नतायां, उपवेशने[5] [मानुबन्धो] भवति। क्र्यादिषु पठितो ज्ञ घटादिषु पठितो भवति। ज्ञाजनोर्जा—ज्ञा-जनधात्वोर् 'जा' [आदेशो] भवति। क्र्यादेर्ना—क्र्यादिभ्यो धातुभ्यो 'ना' विकरणो भवति सार्वधातुके परतः। जानाति—

---

१. बहुत्वं प्रायिकम्, एकवचनान्तस्यापि दर्शनात्। तद्यथा—'श्रोत्रियस्य दारेण' (बृ० उ० ६।४।१२); 'आचार्यदारे' (आप० धर्म० १।२।७।२७); 'दारे' (तन्त्राख्यायिका, पृष्ठ ६७, श्लोक १५७) इत्यादयो बहवः प्रयोगा दृश्यन्ते।

२. 'श्राययति श्रायति श्रापयति' इत्येवं व्युत्क्रमेण कन्नडटीकायां पाठः।

३. अत्र सूत्रे 'अनि', 'इनि' वा पाठ इति संदिग्धः। अस्यार्थनिर्देशे कस्यापि प्रत्ययस्योल्लेखो न क्रियते। 'अनि' पाठे 'श्रायति' इत्यत्र यकारागमो ज्ञेयः। तथा सति श्रायति इत्यत्र केन यकारागम इति न ज्ञायते। 'इनि' पाठे 'श्राययति' इत्यत्र यकारागमः सिद्ध्यति। 'श्रायति' इत्यत्र पूर्वनिर्दिष्टेन (पृष्ठ ५०) 'आतो युः' सूत्रेण यकारागमो भवत्येव। वयं तु पश्यामः—इह श्राययति पाठः श्रापयति पाठश्चोभावपि प्रमादजौ। यतः श्रा पाके घटादिषु पठ्यते, स च मानुबन्धः, मानुबन्धस्य च वृद्धिर्न भवतीत्युक्तं पुरस्तात् (पृष्ठ ९८, टि० २) तेनेह 'श्रपयति' इत्येव युक्तः पाठः। पाकादन्यत्र श्रापयतीत्येव भवति।

४. कन्नडवृत्तौ 'ज्ञा अवबोधने मारणतोषणनिशामनेषु ज्ञा' इत्येवं पूर्वापरं पठ्यते। अस्माभिः प्रकरणानुसारं शोधनं विहितम्।

५. निशामनस्य उपवेशनरूपोऽर्थः कन्नडटीकायामुच्यते, स चिन्त्यः।

अवबुध्यते । शपयति-मारयति, नृत्यति,[1] विवदति[1] । मारणतोषणनिशामने-भ्योऽन्यत्र-ज्ञापयति । शमादर्शने मानुबन्धः-शधातो शमो लोपे मकारानुबन्धो भवति[2] । जयति-विवदति । मारणादेरन्यत्र ज्ञापयति-स्मारयति ।

६१७. कम्पने चलिः—ज्वलादिषु पठितश्चलिः कम्पनेऽर्थे मानुबन्धः । तरुर्लतां चलयति-वृक्षो लतां कम्पयतीत्यर्थः । कम्पनादन्यत्र चालयति-अवलम्बयति ।

६१८. अर्जने छदिः—'छद पद संवरणे' इति चुरादौ पठ्यते । स चले प्रागने वर्तमानो मानुबन्धो भवति । स्वार्थे णिच्-स्वार्थे णिच् आगमो भवति । छदति छादयति ( ?, छदयति ) । [ अन्यत्र छादयति गृहम् । ]

६१९. जिह्वोन्मथने लडिः—'लड विलासे' इत्ययं जिह्वोन्मथनेऽर्थे मानुबन्धः । दन्तैर्जिह्वां लडयति घर्षयतीत्यर्थः ।

६२०. हर्षग्लपनयोर्मदिः—'मदी हर्षे' दिवादिषु परस्मैपदी, स हर्षग्लपन-योर्मानुबन्धः । मित्रं मदयति-हर्षयतीत्यर्थः । रिपुं मदयति-विनाशयतीत्यर्थः ।

६२१. ध्वन शब्दे—ध्वनयति, ध्वानयति-शब्दं करोति,[4] करोति ।

६२२. जनीजृष्क्नसुरञ्जोऽमन्ताश्च—'जनी प्रादुर्भावे, जृष् वयोहानौ, क्नसु[5] ह्वरणदीप्त्योः, रञ्ज रागे' [ इत्येते धातवः, अम् अन्ते येषां ते अमन्ताश्च मानुबन्धा भवन्ति ] । जनयति-उत्पादयति । जरयति-केशान् श्वेती करोति । क्नसयति-कलरवो भवति, प्रकाशयति । रञ्जयति-प्रसन्नयति । रमयति-आनन्दयति । भ्रामयति ( ?, भ्रमयति ) भ्रान्तं करोति ।

---

१. 'नृत्यति विवदति' इत्येतौ कस्यार्थौ इति न ज्ञायते, सूत्रे तु 'तोषणनिशामन' शब्दौ निर्दिष्टौ । तस्मादयं पाठः प्रमादज एव ।

२. कन्नडटीकायां 'शमादर्शने मानुबधः' इत्यस्य योऽर्थः कृतस्तस्येयं संस्कृतच्छाया वर्तते, परन्त्वर्थोऽस्य न व्यक्तीभवति । वस्तुतस्तु 'शमोऽदर्शने' इति धातुसूत्रम् । एतदीयार्थः ( १।६२५ ) स्वयं वृत्तिकृता सम्यग् व्याख्यातः । इहास्योपन्यासो व्याख्या च प्रमादजा । प्रकृतस्य मारणतोषणादिसूत्रस्य प्रायेण सर्वाऽपि कन्नडव्याख्या अशुद्धा वर्तते । किमत्र कारणमिति तु न जानीमः ।

३. इत आरभ्य अग्रे पठ्यमानानां धातुसूत्राणामर्थः कन्नडवृत्तावस्पष्टः, अस्माभिरिह प्रकरणानुसारं कन्नडटीकामधिकृत्य स्पष्टीकृतः ।

४. प्रथमोऽर्थो मित्संज्ञकस्य ध्वनयतीत्यस्य, अपरोऽमितो ध्वानयतीत्यस्य ज्ञेयः ।

५. कन्नडवृत्तावपि 'क्नसु' इत्येवं पठ्यते, तथैव चोदाह्रियते, परन्तु दिवादौ 'क्नसु ह्वरण-दीप्त्योः' पाठदर्शनाद् अस्माभिरिह तथैव शोधनं विहितम् ।

६२३. ज्वलह्वलह्मलनमोऽनुपसर्गाद्वा—ज्वल ह्वल ह्मल [ नम ] इत्येते उपसर्गरहिता वा मानुबन्धा भवन्ति । ज्वलयति, ज्वालयति—प्रकाशते[1] । ह्वलयति, ह्वालयति—कलरवो भवति । ह्मलयति, ह्मालयति—स्वप्नं पश्यति । नमयति, नामयति—नमस्कारं करोति ।

६२४. ग्लास्नावनुवमश्वनकम्यमिचमः—एते मानुबन्धाः विकल्पेन भवन्ति । ग्लपयति ग्लापयति-म्लायति (मुरझाता है) । स्नपयति स्नापयति—स्नाति । वमयति, वामयति—वमनं करोति । वनयति वानयति—अङ्कुरितो भवति । श्वनयति, श्वानयति—भषते ( भूंकता है )। कमयति—कामयति—इच्छति । अमयति, आमयति—क्षुधितो भवति । चमयति, चामयति—गण्डूषं करोति ।

६२५. शमोऽदर्शने—शमधातुरदर्शने मानुबन्धः । शमयति रोगम्—पीडां निवर्तयति । दर्शने—निशामयति रूपम्—परिचिनोति रूपमित्यर्थः ।

६२६. यमोऽपरिवेपणे—वेपहीनतायां[2] 'यम उपरमे' धातुर्मानुबन्ध भवति । यमयति—नाशयति । यमः—अन्तकः । यमी—यतिः । यमलम्—युग्मम् । यन्ता—प्रेरकः । यामः—घटित्रयकालः । यामिनी—रात्रिः । यमुना—सूर्यपुत्री एतन्नाम्नी नदी । यन्त्रम्—उद्धरणिः । आयामम्—दीर्घता । संयमयति—संयमं करोति । संयमी—यतिः । नियमयति—नियमं करोति । नियमः—व्रतम् । नियमी—व्रती । वेपे—यामयति—सहते[3] ।

६२७. स्खदिर् अवत्यां च—रक्षणे चात् अपरिवेपणे[4] स्खदिर् धातुर्मानुबन्धो भवति । स्खधयति ( ?, स्खदयति )—रक्षां करोति, रूपयति ।

६२८. फण गतौ—फणयति—रिङ्गति ( रेंगता है ) । फणी—सर्पः । फणा—सर्पस्य शिरः ।

६२९. वृत् , घटादयो मानुबन्धा एकत्वे—एकत्वे[5] घटादयो मानुबन्धाः समाप्ताः ।

---

१. इह प्रकरणे बहूनां ण्यन्तानां धातुनां स्वार्थरूप एवार्थो निर्दिश्यते, न प्रयोजकव्यापाररूपः । २. नाश इत्यर्थः । उदाहरणस्य तथैवार्थदर्शनात् ।

३. अन्ये तु 'परिवेपणे' इत्यस्य भोजनप्रस्तुतीकरणरूपोऽर्थ इत्याचक्षते ( 'परोसना' इति भाषायाम् ) ।

४. कन्नडटीकायाम् 'परिवेपणं' इत्येव पठ्यते, स च चिन्त्यः पाठः ।

५. 'एकत्वे' इत्यस्याभिप्रायो न व्यक्तीकृतो वृत्तिकृता । कदाचिद् धात्वर्थस्यैकत्वे, अर्थात् 'स्वार्थे' इत्यर्थोऽभिप्रेतः स्यात् ( द्र० पृ० १०४, टि० १ ) ।

परस्मैभाषाः—सप्त[1] परस्मैभाषाः।

## उभयतोभाषः

६३०. राजृ दीप्तौ—राजति, राजते—प्रकाशते। राट्, राजा, राजन्, राजमानः—चत्वारो राज्ञि। राजानां (?)—धान्यम्। राज्यम्—राजाधीनो प्रदेशः। राजितम्, राजितव्यम्, राजनम्, राजनीयम्—चत्वारः प्रकाशे। राजिः—श्रेणिः। राज्ञी—राज्ञः पत्नी।

## [ आत्मनेभाषाः ]

६३१. भ्राजृ, टुभ्रासृ टुभ्लासृ दीप्तौ—प्रकाशे। भ्राजते—प्रकाशयति। भ्राट्, भ्राजमानः—प्रकाशयिता। भ्राजिः, भ्राजम्, भ्राजनम्, भ्राजनीयम्—चत्वारः प्रकाशे। भासते—प्रकाशते, दीप्यते। भ्राः, भ्रासमानः—दीपिता। भ्रासम्, भ्रासिः, भ्रासितम्, भ्रासनम्, भ्रासनीयम्—पञ्च दीपने। भ्लासते—दीप्यते। भ्लाः, भ्लासमानः—दीप्यमानः। भ्लासम्, भ्लासनम्, भ्लासनीयम्—प्रकाशे।

आत्मनेभाषाः—एते आत्मनेपदिनः।

## [ परस्मैभाषाः ]

६३२. स्यमु स्वन ध्वन शब्दे—ध्वनौ। स्यमति—शब्दयति। स्यमः, स्यमन्, स्यमकः, स्यमः—चत्वारो[2] ध्वनितरि। स्यमनम्, स्यमितव्यम्, स्यमनीयम्, स्यम्यम्, स्याम्यम्—षट् ध्वनौ। स्वनति—ध्वनति। स्वनन् स्वनकः—शब्दयिता। स्वनः, स्वानः—शब्दः। ध्वनति—अनर्गलं वदति ( बकता है )। ध्वनन्, ध्वनकः—वाचालः। ध्वनिः, ध्वानः—अनर्गलशब्दनम्।

६३३. षम ष्टम वैक्लव्ये—भ्रमे। समति—विभजति ( बाँटता है )। समन्, समकः—विभजकः। समम्, समनम्, समानम्, समनीयम्, साम्यम्,

---

१. 'सप्त' इत्यनेन केषां संग्रह इति न ज्ञायते। परस्मैपदनिर्देशस्तु 'ज्वर रोगे' (१।५८६) इत्यारभ्यैव वृत्तिकृता कृतः। यद्वा पाणिनीये यथा फणादयः सप्त 'फणां च सप्तानाम्' (अ० ६।४।१२५) इत्यत्र स्मर्यन्ते तथैव काशकृत्स्नीयेऽपि तन्त्रे फणादीनां सप्तानामवान्तर्गणः कार्यविशेषार्थं स्मृतः स्यात्। तथा सति 'परस्मैभाषाः' इत्यत्रैकवचनम् स्यात्, उत्तरा च व्याख्या प्रामादिका इत्यपि संभाव्यते।

२. 'स्यमः' द्विः पठ्यते, तथा सति 'चत्वारः' इति प्रमादपाठः, यद्वा एकत्र 'स्यामः' इत्येवं कल्पनीयम्।

स्म्यम्, सम्, समि, समु, सामु, सामम्—एकादश समाने। सामन्—वेदविशेषः। सामकः—सामवेदः। स्तमति—प्रतिनिवर्तयति ( चुकाता है )। [1]स्तम्, स्तमकः—प्रतिनिवर्तकः। स्तमनम्, स्तमितव्यम्, स्तमनीयम्, स्तम्यम्, स्ताम्यम्, स्तामम्, स्तमिः, स्तमुः, स्तामुः, स्तामु[1]—एकादश प्रतिनिवर्तने ( चुकाने में )।

६३४. ज्वल दीप्तौ—द्योतने। ज्वलति—द्योतते। ज्वलः, ज्वालः, ज्वलन्, ज्वलकः—चत्वारो द्योतके। ज्वाला, ज्वलनम्, ज्वलनीयम्, ज्वल्यम्, ज्वाल्यम्—[ पञ्च ] द्योतने।

६३५. चल कम्पने—चलति—कम्पते। [1]चलन्, चलकः—कम्पिता। चलि, चालि, चलु, चालु, चलनम्, चलितम्, चलितव्यम्, चलनीयम्, चल्यम्, चाल्यम्, चालम्—एकादश कम्पने।

६३६. जल धान्ये—आर्द्रीभावे। जलति—आर्द्रो भवति। जलन्, जलिता—आर्द्रीकर्ता। जलम्—पयः। जलकम्—स्थानम्। जालम्—आनायः। जालन्ध्रम्—गवाक्षम्। जालु—कीलकम्। जालिः—संयोजकः। जलारी—जलमार्गः। जलिनी—लघुजलाश्रयः। जलनम्, जलनीयम्, जल्यम्, जाल्यम्—चत्वारः स्रोतसि।

६३७. टल ट्वल वैक्लव्ये—दुःखे श्रमे। टलति—दुःख्यति। टलन्, टलः, टलकः—श्रमी। टलिः, टलनम्, टलनीयम्, टलितव्यम्, टल्यम्, टाल्यम्, टालम्—षट् श्रमे। ट्वलति—चूर्णयति। ट्वलः, ट्वलकः, ट्वलन्—चूर्णयिता। ट्वलनम्, ट्वलनीयम्, ट्वल्यम्, ट्वाल्यम्, ट्वालम्—पञ्च चूर्णने।

६३८. ष्ठल स्थाने—स्थितौ। स्थलति—स्थिरो भवति। स्थलम्—स्थानम्। स्थाली—पाकाधिकरणी।

६३९. हल विलेखने—कर्षणे। हलति-कर्षति। हलम्—क्षेत्रकर्षणसाधनम्। हली—कृषकः। हलायुधः—राजा, बलरामः, शिवशरणः।

६४०. णल गन्धे—दुर्गन्धे। नलति—दुर्गन्धयति। नलः—कुबेरपुत्रः, एतन्नामा महाराजः, वानरविशेषः। नलिनम्—कमलम्। नालम्—छिद्रम्। नाली—जलादिसंचरणी।

६४१. बल प्राणने—चेतने। बलति—चेतयति। बलम्—चेतनम्। बलिः—एतन्नामा चक्रवर्ती राजा। बालः, बालकः—कुमारः। बाला, बालका

१. लिङ्गभेदेन पुनः पाठः। तमपेक्ष्यैव 'एकादश' इति संख्या ज्ञेया।

( ?, बालिका )–कुमारी । बलिष्ठः, बलीयान्, बलिष्ठः, बलवान्–चत्वारो बलवति । बलाहकः[1]–मेघः ।

६४२. पुल महत्त्वे—पूजने । पोलति–पूज्यो भवति । पुलस्त्यः–ब्रह्मणः पुत्रः । पुलस्तिः–( ? ) । पुलहः–ब्रह्मणः पुत्रः । पुलिः–व्याघ्रः । पुली–अम्लम् ( ? ) । पुलम्–क्षेत्रम् । पुलि, पुली–व्याधिः । पुलिनम्–प्रमत्तता ।

६४३. कुल संख्याने—गणनायाम् । कोलति–गणयति । कुलम्–समीपम् । कुलकम्–कोलग ( ? ) काव्याङ्गनापादः, सर्पः । कुलिः–निम्नभूमिः । कुलुत्थम्–धान्यविशेषः ( 'कुलथ' इति भाषायाम् ) । कुली–पर्वतः । कुलीन–उत्तम-कुलजः । कुलम्–सम्पूर्णम्, बलाश्रयः ।

६४४. हुल हिंसासंवरणयोः—हिंसायाम्, कवितायां ( ? ) च । होलति–मारयति । हुलिः–व्याघ्रः । हुलम्–क्षेत्रम् ।

६४५. पल हुल (?, शल) पतृ[2] पथा गतौ च—गत्यामपि । पलति–फलं ददाति पुष्पितो भवति । पलाशः–एतन्नामा वृक्षः । पललम्–म्लानता । पलायनम्–धावनम् । फलितम् ( ?, पलितम् )–केशानां श्वैत्यम् । पालिः–श्रेणी । पलारिः–(?) । पालु–शून्यम् । पाल्–दुग्धम् । पल्–फलम् । पलिः–निन्दा, विचारः । शलति–विस्मरति । शला–अवरोधकः, सत्यम् । शलिलम्–जलम् । शालूरः–मण्डूकः । शलाका–शल्कम्, लोहयष्टिः । शाला–गृहम् । शलभः–एतन्नामा कीटविशेषः । शल्यम्–अस्थि । शाल्यम्–तण्डुलम् । शालु–(दुशाला) । शालः–एतन्नामा वृक्षः । पतति–अधो गच्छति (गिरता है) । पतन्, पतितः, पतकः–अधोगन्ता । पतिता अञ्जलिः यस्य–पतञ्जलिः ऋषिः । पतिः–शासकः । पताका, पताकी–ध्वजा । पत्यम्, पात्यम्, पतनम्, पतनीयम्–चत्वारोऽधोगमने । पथति–गच्छति । पथन्, पथकः–गन्ता । पथिः, पथः–मार्गः । पाथेयम्–पथि भक्षितुं योग्यं द्रव्यम् । पथनम्, पथनीयम्, पथ्यम्, पाथ्यम्–चत्वारो गमने ।

६४६. क्वथे पाके—क्वथति–पचति ( उबलता है ) । क्वथकः, क्वाथकः–पाचकः । क्वथम्, क्वथि, क्वथु, क्वाथम्, क्वाथु क्वथ्यम्, क्वाथ्यम्, क्वथनम्, क्वथनीयम्, क्वथितव्यम्–दश–पाके (उबालने में)।

६४७. मथे विलोडने—मथति–विलोडयति । मथन्, मथकः–विलोड-

---

१. नायं वकारादिः, अपितु बकारादिः साधुः । 'वारि वाहको बलाहकः' इति पृषोदरादिः (६।३। १०९) इति वैयाकरणाः । वर्=जलनाम, तस्य आहकः–व्यापकः (आह् व्याप्तौ) =जलेन पूर्ण इत्यर्थः, इति वयम् । वर्–आह =वराह इत्यपि मेघनाम, अनयैव व्युत्पत्त्या ।

२. 'पतॢ' इति शुद्धः पाठः स्यात् ।

यिता। गथम्, गथा, गथि, गथु, गाथु, गथितम्, गथितव्यम्, गथनम्, गथनीयम्, गथ्यम्, गाथ्यम्, गथ्, गाथ्—त्रयोदश विलोडने।

६४८. डुवम[1] उद्गिरणे—वमने। वमति—उद्गिरति। वमन्, वमकः—उद्गरिता। वामनः—लघुपरिमाणः (नाटा), विष्णोरवतारः। वमनम्, वमनीयम्, वान्तिः, वम्यम्, वाम्यम्—पञ्च वमने। वामम्—उत्तरपार्श्वम्।

६४९. भ्रमु चलने—गतौ। भ्रमति—चलति। भ्रमन्, भ्रमकः, भ्रामकः, भ्रान्तः—चत्वारः चलितरि। भ्रमरः—षट्पदः, राक्षसः। भ्रमरका—(?)। भ्रमरा—श्रीशैलमल्लिकार्जुनपत्नी। भ्रमणम्, भ्रामणम्, भ्रमणीयम्, भ्रान्तिः, भ्रमा, भ्रमितव्यम्, भ्रम्यम्, भ्राम्यम्—अष्टौ पेषण्याम् ('चक्की' इति भाषायाम्)।

६५०. क्षर संचलने—क्षरति—(नश्यति)। क्षरन्, क्षरकः—नष्टा। क्षारम्—लवणम्। क्षरणम्, क्षरणीयम्, क्षरितव्यम्—नाशे।

एते परस्मैभाषाः।

६५१. षह मर्षणे—सहते—मर्षयति। साट्, सहन्, सहकः, सोढा—मर्षयिता। सह—सहभावे। सहि—प्रत्यर्पणम्। सहनम्, सहनीयम्—मर्षणम्। सह्यः—पर्वतविशेषः।

६५२. रमु क्रीडायाम्—रमते—क्रीडति। रमणः—शासकः। रमा—लक्ष्मी। रामा—स्त्री। रम्यकः—पर्वतः। रम्यम्—सौन्दर्यम्। रन्ता, रममाणः—क्रीडकः। रामः—गर्दभरक्षकः, परशुरामः, दशरथपुत्रो रामः, मैथुनरामः, सिद्धरामः, एकान्तरामः। आरामम्—सुन्दरमुद्यानम्। रामठम्—हिङ्गुः।

एतावात्मनेभाषौ।

६५३. षद्लृ विशरणगत्यवसादनेषु—विकर्तने, गतौ, स्थाने। सदेः सीदः—सदधातोः स्थाने सीद—आदेशो भवति। सीदति—विकृन्तति। प्रसन्नः—मुदितः। आसन्नः—समीपवर्ती। आसादी—महापूजकः। प्रसादः—चन्द्रिका। प्रसादः, प्रासादः—गृहोपरिभवः छदः ('छत' इति भाषायाम्)। प्रसादनम्—आभरणम्। सद्यः—तत्कालम्, साह्नः। सदस्, सदर्, सदस्यः—सदस्यः।

६५४. शद्लृ शातने—आसने[2]। शदेः शीयः—शदधातोः स्थाने शीय—आदेशो भवति। शीयति[3]—आस्ते। शदन्, शदकः—आसकः। शदनम्, शदनीयम्, शादम्—आसने।

---

[1]. 'डुवम' इति शुद्धः पाठः स्यात्। [2]. शातनं तनूकरणमित्यन्ये धातुवृत्तिकाराः।
[3]. 'शदेः शितः' (अष्टा० १।३।६०) इत्यनेनात्मनेपदमिति पाणिनीयाः।

६५५. क्रुश आह्वाने—शब्दने । क्रोशति–आह्वयति । क्रोष्टा–शृगालः । क्रोशः–योजनार्धम्.( 'कोस' इति भाषायाम्–दो मील ) । क्रुशम्–दीनता, श्रमः । क्रुष्टम्, क्रुष्टिः–आह्वानम् ।

६५६. कुच सम्पर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु—असंवरणे (?,मिश्रणे), कौटिल्ये, रोधने, कर्षणे ( क्षते ) च । कोचति–संवृणोति ( लपेटता है ), स्पृशति, कुटिलयति, अभ्यागच्छति, लिखति । कुचन्, कुचकः—संवरिता । कुचः—स्तनः । कोचा–भीरुता ।

६५७. बुध अवगमने—ज्ञाने । बोधति–जानाति । बुध्, बुधः, बोधकः–ज्ञाता । बोधनम्, बोधा, बुधिः–ज्ञानम् । बुद्धः–विष्णोरवतारः ।

६५८. रुह जन्मनि—प्रसवे । रोहति-प्रसूते । रुह्, रुहम्, रोहणम्, रोहणीयम्–चत्वारोऽङ्कुरे । रोहिणी–दक्षपुत्री, चन्द्रमसः पत्नी । रौहिणेयः–बुधः । आरूढः–उपरिवर्तमानः । आरोहणम्–अधिगमनम्, उपरिगमनम् ।

[ एते परस्मैभाषाः । ]

६५९. कस गतौ—कसति, कसते[1]–चलति । कसन्, कसकः–चलिता । कसम्–पांशुः । कसा–पांशुः । कासु–पणम् ( पैसा इति भाषायाम् ), मुद्रा । कसकलम्–( ? ) । कसनम्, कसनीयम्, कस्यम्, कास्यम्–चत्वारोऽपगमने ।

६६०. हिष्क[2] गतौ–संतोषगत्याम् । हिष्कति, हिष्कते–संतोषेण गच्छति । हिष्कन्, हिष्ककः, हिष्कमानः–सन्तोषेण गन्ता । हिष्कणम्, हिष्कणीयम्, हिष्कम्–सन्तोषगतौ ।

६६१. धावु गतिशुद्धयोः—शीघ्रगत्याम्, शब्दे (?, शुद्धौ ) धावति धावते–शीघ्रं गच्छति (दौड़ता है), वृत्तं ददाति (?)। धावन्, धावकः, धावमानः–शीघ्रगन्ता । धावनम्, धावनीयम्, धावितः, धविः, धावः, धावा, धाव्यम्–सप्तैते शीघ्रगमने ( दौड़ने में ) ।

६६२. अञ्चु व्ययगतौ—अञ्चति, अञ्चते–शनैर्गच्छति । अञ्चन्, अञ्चकः, अञ्चानः, अञ्चमानः–चत्वारो व्ययगतिमति । अञ्चनम्, अञ्चनीयम्, अञ्च्यम्, आञ्च्यम्–चत्वारो व्ययगतौ । अञ्चुः–तटम् । अञ्चा–प्रयागस्थानम् । गतौ नलोपः–गत्यर्थेऽञ्चतेर्नकारस्य लोपो भवति । अचति, अचते–मरति[3] । अचन्, अचकः, अचानः, अचमानः–मर्ता । आचः–वृक्षः । आचा–तस्मिन्

---

१. पाणिनीयाः परस्मैपदिनमेनं स्मरन्ति, उपरितनान् हिक्कादीन् उभयपदिन आहुः ।

२. 'हिक्क' इति पाणिनीयाः ।

३. द्र० काशकृत्स्नधातुसूत्रम् ( १।२२४ ) । 'म्रियते' इत्यन्यमते प्रयोगः ।

दिधि । अच्, आच्, अचिः, अचुः, अचम्, अच्यम्, आच्यम्, आचनम्[1], आचनीयम्[1]–नव मरणे ।

६६३. अस अप दीप्त्यादानयोश्च—प्रकाशे, आदाने, गतौ च । असति असते–प्रकाशते, आदत्ते, चलति । असन्, असकः, असानः, असमानः–प्रकाशकः, ग्रहीता, चलिता । असुः–जीवः । असुः–खड्गः, लवित्रम् ( चाकू इति भाषायाम् ), कान्तिः । असकः–( ? ) असती–( ? ) । असिः–जीवनम्, क्षुरम् । अस्थि–(हड्डी इति भाषायाम्) । अस्तिः–प्रकाशकः । अस्मत्–सर्वनाम । असा–( ? ) । असुरः–हन्ता । आसनम्, आसन्, आसुरम्, अः–चत्वारः प्रकाशे । अषति, अषते–प्रकाशयति । अषन्, अषकः, अषाणः, अषमाणः–चत्वारः प्रकाशके । अट्, आट्, अषम्, अषणीयम्, अष्यम्, आष्यम्, अषम् ( ?, आषम् ), अषि, ( ?, आषि ), अषु, आषु, अषा, आषा–त्रयोदश-प्रकाशने । अष्टु–तावत् ( ? ) । अष्टम्, अष्टन्–द्वौ अष्टसंख्यायाम् । अष्टि–काष्ठम् । आषाढः–दण्डम् । आषाढा–नक्षत्रम् ।

६६४. वीणृ ज्ञानचिन्तानिशामनेषु—ज्ञाने चिन्तायां श्रवणे च । वेणति वेणते[2]–शृणोति । वीणा, वीणी–वाद्यविशेष । वेणी–स्त्रीजटा । वेणुः–वंशवृक्षः । वीणः, वीणकः, वीणन्, वीणानः, वीणमानः, वीणू–षडेते बुद्धिमति । वीणनम्, वीणनीयम्, वीण्यम्, वैण्यम्–पञ्च श्रवणे ।

६६५. टुयाचृ याच्ञायाम्—याचनायाम् । याचति, याचते–भिक्षति । याचन्, याचकः, याचमानः याचिता–भिक्षुकः । याच्ञा, याचनम्, याचनीयम्, याच्यम्, याच्, याचितम्–षट् भिक्षायाम् ।

६६६. रेडृ परिभाषणे—अतिभाषणे । रेडति, रेडते–अतिभाषते । रेट्, रेडः, रेडकः, रेडन्, रेडमानः–पञ्चातिभाषके ।

६६७. चते चदे याचने च—याच्ञायां [चात् परिभाषणे] च । चतति, चतते–याचते । चत्, चात्, चतन्, चतकः, चतमानः–पञ्च याचके । चातकः–एतन्नामा पक्षी । चतम्, चातम्, चत्यम्, चात्यम्, चतनम्, चतनीयम्–षट् याच्ञायाम् । चतुरः, चत्वरः, चत्वारः–चतुरे षटौ । चदति, चदते–

---

१. दीर्घत्वमादौ कथमिति न व्यक्तीकृतम् ।

२. अत्र वृत्तौ वेणति वेणते, वीणः वीणकः आद्युदाहरणेषु एकारवन्तो दीर्घकारवन्तश्च प्रयोगा दृश्यन्ते । तेन विज्ञायते 'वेणृ वीणृ' द्वौ स्वतन्त्रौ धातू । पाणिनीया 'वेणृ' इति पठन्ति, काशकृत्स्नीयास्तु 'वीणृ' इति ।

प्रशंसयति । चदन्, चदकः, चदमानः–त्रयः स्तावके । चदनम्, चदनीयम्, चद्यम्, चाद्यम्, चदम्, चादम्–षट् स्तुतौ ।

६६८. प्रुथृ, प्रृथृ, पृतृ व्याप्तौ—प्रोथति, प्रोथते–शरणं गच्छति । प्रुथु–राजा । प्रुथुलम्, प्रुथक–प्रत्येकम् । प्रुथुवी, प्रुथ्वी–पृथ्वी । प्रुथ्, प्रोथः, प्रोथकम्, प्रोथन्, प्रोथमानः–पञ्च आश्रयितरि । प्रोथनम्, प्रोथनीयम्, प्रोथ्यम्, प्रौथ्यम्–चत्वार आश्रयणे । पर्थति, पर्थते–प्रशास्ति । पार्थः–अर्जुनः । पार्थिवः–राजा । पर्थनम्, पर्थनीयम्, पर्थ्यम्, पार्थ्यम्–चत्वारः शासने । पर्तति पर्तते–बलान्निस्सारयति । पर्तन्, पर्तकः, पर्तमानः–त्रयो बलात्कर्तरि । पृतना–बलम् ।

६६९. मिदृ मेदृ मेथृ[1] गतिहिंसयोः—मेदति, मेदते–चलति, हिंसयति । मिद्, मेदकः, मेदमानः–त्रयो गन्तरि । मिदिः, मेदुः, मिद्यम्, मिद्यम्, मैद्यम्, मिदुळम्–षड् गतौ । मेदति, मेदते–मारयति । मेत्, मेदकः, मेदन्, मेदमानः–चत्वारो मारयितरि । मेदस्–एतन्नामा धातुविशेषः ( चर्बी इति प्रसिद्धः ) । मेदिनी–पृथिवी । मेदुरः–स्थूलव्यक्तिः । मेदनम्, मेदनीयम्, मेद्यम्–मेदः । मेथ्यति[2], मेथ्यते–गर्वति ( स्थूलो भवति ) । मेथ्यः, मेथ्यकः, मेथ्यन्, मेथ्यमानः–चत्वारो गर्वके । मेथ्यनम्, मेथ्यनीयम्–गर्वं, अहंकारे ।

६७०. मेधृ संगमे च—मेधति मेधते–परस्परं मिलति । मेध्, मेधन्, मेधकः, मेधमानः–चत्वारो संगन्तरि । मेधा–दृढबुद्धिः । मेधावान्–बुद्धिमान् । मेधनम्, मेधनीयम्, मेध्यम्, मैध्यम्–चत्वारः संगमे ।

६७१. णिदृ णेदृ कुत्सासंन्निकर्षयोः—निन्दने सामीप्ये च । नेदति, नेदते–निन्दति । निद्, नेदः, नेदन्, नेदकः, नेदमानः–पञ्च कुत्सके । निदिः, निदा, नेदनम्, नेदनीयम्, निद्यम्, नैद्यम्–षट् निन्दायाम् । नेदति, नेदते–संबन्धयति । नेद्, नेदकः, नेदुरः, नेदमानः–पञ्च संबन्धयितरि । नेदिः, नेदुः, नेदनम्, नेदनीयम्–चत्वारः सन्निकर्षे ।

६७२. सृधु मृधु उन्दे—मर्दने । [सर्धति,] सर्धते–मर्दयति । सृध्, सर्धकः, सर्धमानः–मर्दकः । सर्धनम्, सर्धनीयम्–मर्दनम् । मर्धति, मर्धते–संपीडयति ( दबाता है ) । मृध्, मर्धन्, मर्धमानः–संपीडकः । मर्धनम्, मर्धनीयम्–संपीडनम् ।

---

१. अस्य धातोरुदाहरणेषु मेथ्यतिप्रभृतिषु थकारयकारयोः संयोग उपलभ्यते । तेनेह 'मेथ्यृ' इति पाठः स्यात् । यद्वोदाहरणेषु थकारयकारसंयोगवान् पाठः सर्वत्र प्रामादिकः स्यात् ।

२. द्रष्टव्या प्रथमा टिप्पणी ।

६७३. बुधिर् बोधने—ज्ञाने। बोधति, बोधते—जानाति। बुधः, बुधन्, बुध्नः, बुधानः—चत्वारो ज्ञानिनि। बोधिनी, बोधिका—ज्ञानदात्री।

६७४. चुदिर्[1] निशामने—श्रवणे। चुन्दति[1], चन्दते—शृणोति।

६७५. खनु अवदारणे—खनने। खनेः खा—खनेर्धातोः खा-आदेशो भवति[2]। परिखा, खेयम्—अवदारणम्। खातम्—वैरी। खननम्, खननीयम्, खन्यम्, खान्यम्, खनम्, खानम्, खनिः, खनुः, खानुः, खन्, खान्, खननम्—एते द्वादश अवदारणे।

६७६. कप चीवृ संवरणादानयोः—आच्छादने (ओढ़ने में) ग्रहणे च। कपति, कपते—संवृणोति। कपा, कपणम्, कपणीयम्, कप्यम्, काप्यम्, कट्, काट्—सप्त संवरणसाधने। कषायः—रसः। काषायम्—रागविशेषः। कपन्, कपमाणः, कपः, कपकः—चत्वारः संवारके (ओढ़नेवाले में)। चीवति, चीवते—मारयति। चीवन्, चीव्यः, चीवः, चीवकः—चत्वारो घातके। चीवनम्, चीवनीयम्—हिंसा।

६७७. याचृ पूजानिशामनयोः—अर्चने, श्रवणे च। चायति, चायते—अर्चति। चायन्, चायमानः, चायकः—अर्चकः (पुजारी)। चाय्, चायम्, चायनम्, चायनीयम्, चाय्यम्—पञ्च पूजने निशामने च।

६७८. दाशृ दासृ दाने—दाशति, दाशते—ददाति। दाशः—धीवरः (मछुआ इति भाषायाम्)। दाशनम्, दाशनीयम्, दाश्यम्—दाने। दासति, दासते—दास्यं करोति। दासः—दास इत्येव प्रसिद्धः। दासी—[दासस्य स्त्री, स्वयं वा दास्यकर्मकर्त्री]। दासनम्, दासनीयम्, दास्यम्—त्रयो राजपरिषदि (?) (दरबार में)। दिवोदासः—एतन्नामा सूर्यवंशप्रभवो राजा।

६७९. भेपृ भये—भेपति, भेपते—बिभेति। भेट्, भेपन्, भेपमाणः,

---

१. अस्योदाहरणे चुन्दति चुन्दते इत्येवं पठ्येते। कथमत्र नकारागम इति न ज्ञायते। चान्द्रधातुपाठे तु 'उचुन्दिर्' इति सनकार एव पठ्यते (द्र० १।६००) कातन्त्रपाणिनीयास्तु 'उचुन्दिर्' इत्येवं पठन्ति। तस्मात् काशकृत्स्नेऽपि 'चुन्दिर्' इत्येव युक्तः पाठः।

२. खनेः खादेशः कुत्र भवतीति न स्पष्टीकृतं कन्नडटीकाकृता। पाणिनीयनियमानुसारं तु झलादौ सनि झलादौ क्ङिति च खनेर्नकारस्याकारादेशे 'खा' रूपं भवति (द्र० ६।४।४२), यकारादौ क्ङिति च विकल्पेन आकारादेशो भवति (द्र० ६।४।४३)। एवं 'परिखा' इत्यत्र पाणिनीयमतेऽप्रत्यये टिलोपे च रूपं निष्पद्यते। खेयमित्यत्र 'ई च खनः' (३।१।१११) इति नकारस्य ईकारादेशे गुणो भवति। काशकृत्स्नस्तूभयत्र खनेः खादेशं शास्ति।

भेषकः, भेषः–पञ्च भीरौ। भेषिः, भेष्टिः, भेषा, भेषणम्, भेषणीयम्, भेष्यम्, भैष्यम्–सप्त भये।

६८०. भ्रेपृ चलने—भ्रेषति, भ्रेषते–कम्पते। भ्रेट्, भ्रेपः, भ्रेषकः, भ्रेषन्, भ्रेषमाणः–पञ्च कम्पके। भ्रेषिः, भ्रेष्टिः, भ्रेषणम्, भ्रेषणीयम्, भ्रेष्यम्, भ्रैष्यम्–षट् कम्पने चलने।

६८१. पषा बाधनस्पर्शयोः—बाधायाम्, स्पर्शने च। पषति, पषते–बाधते, स्पृशति। पट्, पाट्, पषः, पाषकः, पषन्, पषमाणः–षट् बाधके स्पर्शके। पषिः, पष्टिः, पषणम्, पषणीयम्, पष्यम्, पाष्यम्, पाषम्–सप्त[1] बाधायां स्पर्शे।

६८२. लष कान्तौ—इच्छायाम्। लषति, लषते–काङ्क्षति। लषः, लट्, लाट्, लषन्, लषमाणः, लषकः, लाषकः–सप्त कामयितरि। लषिः, लष्टिः, लषणः, लषणीयम्, लष्यम्, लाष्यम्, लाषम्–सप्त कामनायाम्। अभिलाषः–इच्छा।

६८३. चष भ्लक्ष भक्षणे—खाद्ये। चषति, चषते–भक्षयति। चाषः–एतन्नामा लघुपक्षी। चषण्[2], चषाणः, चट्, चाट्–चत्वारो भक्षयितरि। चषकः–[पानपात्रम्]। चषिः, चष्टिः, चषणम्, चषणीयम्, चष्यम्, चाष्यम्–षट् खाद्ये। भ्लक्षति, भ्लक्षते–खादति। भ्लक्षन्, भ्लक्षमाणः, भ्लक्षकः– अतिभक्षयितरि।

६८४. छष हिंसायाम्—छषति, छषते–मारयति। छट्, छाट्, छषः, छाषः, छषकः, छषण, छषमाणः–हिंसकः। छषणम्, छषणीयम्–हिंसनम्।

६८५. माहृ माने—(वर्तने)[3]। माहति, माहते–(वर्तयति)। माहः, माहकः, माहमानः, माहन्–चत्वारः (वर्तके)। माहनम्, माहनीयम्–(वर्तनम्)।

६८६. गुहू संवरणे—आच्छादने। गुहो दीर्घः–गुहधातोरादेर्दीर्घो भवति[4]। गूहति, गूहते–आच्छादयति। गुहा–कन्दरा (गुफा इति भाषायाम्)। गूहन्, गूहकः, गूहमानः–आच्छादकः। गुह्यम्–रहस्यम्। गुह्यकः–यक्षः। गुहः–षण्मुखः। उपगूहनम्–आलिङ्गनम्।

---

१. 'पट्' इति मूलपाठः।

२. पाणिनीयमते पदान्ते वर्तमानस्य नस्य णत्वं न भवति (द्र० ८।४।३७)। इह उत्तरसूत्रवृत्तौ (छषण्) च णत्वं निर्दिश्यते। तत्कथमिति विचारणीयम्।

३. मानं वर्तनमिति क्षीरस्वामी (१।६२३)।

४. पाणिनीयमतानुसारमजादौ प्रत्यये यत्र 'गोह' इति रूपं प्राप्नोति तत्रैव ऊकारादेशो भवति (अ० ६।४।८९)। इदमेव च कातन्त्रमतम् (३।६।६३)।

६८७. हृञ् हरणे—नाशने (पाप काटने में)। हरति, हरते—पापं नाशयति। हरः—शिवः। हरिः—विष्णुः। हारः—माला। हरिणः—कार्पासः, रागः (मृगः)। हरिणी—मृगी। विहारिणी—विहारकर्त्री। आहारः—भक्ष्यम्। उपाहारः (उपहार इति भाषा)। संहारः—नाशः। अध्याहारः—अर्थपूर्त्यर्थकं बाह्यं पदम्, येन वाक्यादेरर्थः परिपूर्णो भवति। उदाहरणम्—दृष्टान्तः। प्रत्याहारः—संकोचः। प्रतिहारः—प्रतिहारी। परिहारः—समाधानम्। नीहारः—अवश्यायः। व्यवहारः—वर्तनम्, युद्धम्। प्रहारः—प्रहरणम्। हर्ता—नाशयिता। हर्त्री—नाशयित्री। हृत्, हृतिः, हृतम्, हर्तव्यम्, हरणम्, हरणीयम्, हर्यम्, हार्यम्—एतेऽष्टौ नाशने।

६८८. भृञ् भरणे—धारणे। भरति, भरते—धारयति। भृ, भृत्—राजा, पर्वतः। भृतिः—वेतनम्। भृतम्, भर्तव्यम्, भरणम्, भरणीयम्, भर्यम्, भार्यम्—षट् धारणे। भरणी—एतन्नाम नक्षत्रम्। भर्ता—शासकः। भार्या-पत्नी। भारम्—(भार, वजन इति भाषायाम्)। भरम्—तीव्रम्। भारि—(?)। भारिणी—तुला। भृत्यः—भटः।

६८९. अलञ् भूषणपर्याप्तिवारणेषु—आभूषणे, व्याप्तौ, निवारणे। अलति, अलते—परिदधाति। अलन्, अलमानः—परिधारकः। अलम्—पर्याप्तम्। आलः—वटवृक्षः। आळः—गह्वरम्। आलुः—भृत्यः। आळी—दासी। अळिः—भ्रमरः। अळा—तोलनम्। अलकाः—(घुंघराले बाल इति भाषा)। अलका—कुबेरस्य प्रधाना नगरी (राजधानी)। आळवीरि—आल्वीरी (?)। अट्टालः—दुर्गः। आळवम्—(?)। अल्लाळम्—मूलबन्धः। निराळम्—निराकारः।

६९०. धृञ् धारणे—सहने। धरति, धरते—सहते। धृत्, धरन्, धरमाणः, धारकः—चत्वारः सोढरि। धरा, धरित्री, धरिणी धारिणी—चत्वारः पृथिव्याम्। धरः—पर्वतः। गङ्गाधरः—शिवः, मेघः, श्रीफलवृक्षः। धृतिः—सारः। धरणम्—निष्कचतुर्थः। धारणम्, धारणा, धरणीयम्, धर्मम्, धार्यम्, धृतम्, धर्तव्यम्—सप्त सहने।

६९१. णीञ् प्रापणे—गतौ। नयति, नयते—चलति (प्रापयति)। सेनानीः—सेनानायकः। ग्रामणीः—ग्रामनायकः, ग्राममुख्यः। नयनम्—चक्षुः। नायकः—नेता। नायकी[1]—नेत्री। नेता—राजा। नेत्री—रानी। नेत्रम्—नयनम्। नयः—नर्म (मुलायम), धर्मः, न्यायः। नायः—मलयाली, श्वा। नायी—शुनी। (मलियालिन—नायर इति प्रसिद्धा), ग्राममुख्या। नीतव्यम् (?, नेतव्यम्)

---

१. एतादृशरूपाण्यन्यत्राप्युलभ्यन्ते। पाणिनीयास्तु 'नायिका' इत्याहुः।

नेयम्, नयनीयम्, नीतम्, नीतिः, नय्यम्, नाय्यम्–सप्त ( पश्वादीनां ) नयने (हांकने में)।

६९२. दान अवखण्डने—खण्डकरणे, विभजने। दानादीनां सन् सार्वधातुके–दानादीनां धातूनां सन् आगमो भवति सार्वधातुके परतः[१]। द्विः सनि–दानादीनां द्विर्वचनं भवति सनि परतः। दानयति, दानयते–विभजति (चीरता है)। दीदांसति[२], दीदांसते–विभजति। दीदांसन्, दीदांसमानः, दीदांसकः–विभजितारः। दीदांसा, दानम्, दाननम्, दाननीयम्–चत्वारो विभजने।

६९३. शान अवतेजने—धारास्थापने[३] ( धार रखने में )। शीशांसति, शीशांसते; शानयति, शानयते–तीक्ष्णीकरोति। शीशांसकः, शानन्, शानमानः–त्रयोऽवतेजके। शीशांसा, शानम्, शाननीयम्–तीक्ष्णीकरणे ( धार रखने में )।

६९४. डुपचष् पाके—पचति पचते–पाकं करोति। पचन्, पचमानः पाचकः, पक्, पाक्, पचकः, पक्ता–सप्त पक्तरि। पक्वम्, पक्तव्यम्, पचनम्, पचनीयम्, पच्यम्, पाच्यम्, पाकम्–सप्त पाके। पाकः–राक्षसः। पक्वालम्–मलकुण्डम्।

६९५. भज श्रीञ् सेवायाम्—सेवने। भजति, भजते–सेवते। भक्तः, भञ्जकः, भाजकः, भजन्, भजमानः–पट् सेवके, भक्ते। भक्तम्–आहारः। भक्तिः–विश्वासः। भजनम्–सेवनम्। भाजनम्–घटम्, पात्रम्। भक्तव्यम्, भज्यम्, भाज्यम्, भजनीयम्–चत्वारः सेवने। श्रयति, श्रयते–सेवते। श्रयन्, श्रयमाणः–सेवकः। श्रीः–लक्ष्मी। श्रयणम्, श्रयणीयम्, श्रयम्, श्रायम्–सेवा। श्रेयस्–मङ्गलम्। निःश्रेयसम्–मुक्तिः।

६९६. रञ्ज रागे—वर्णे ( रक्तवर्णे )। रजति[४] रक्तं भवति। रक्ता, रञ्जन्, रञ्जमाणः–रञ्जकः। रक्तिः, रक्तिमा, रागः–रक्तं वर्णम्, प्रेम। रक्तम्–लोहितम्। रजस्–स्पर्शः। रजकः–वस्त्रधावकः ( धोबी )। रजकः, रञ्जकः–औषधम्। रागी–आसक्तः। विरक्तः, विरागी, वैरागी–संन्यासी। निरञ्जनः–मायातीतः। रजनी–रात्रिः। रजस्–धूलिः।

---

१. पाणिनीयास्तु निशानेऽर्थे विशेषेण सनमाहुः। द्र० ३।१।६॥
२. अभ्यासस्य दीर्घत्वं कथमिति नोक्तं वृत्तिकृता।
३. द्र०–क्षुरस्य धारा निशिता दुरत्यया। कठो० ३।१४।
४. पाणिनीयास्तु 'रञ्जेश्च' ( अ० ६।४।२६ ) इति अनुनासिकलोपं स्मरन्ति–रजति।

६९७. शप आक्रोशे—कोपे। शपति, शपते–निन्दति। शपन्, शपमानः, शपकः, शापकः, शप्ता–पञ्च निन्दके। शपम्, शापम्, शपनम्, शपनीयम्, शप्तव्यम्, शप्यम्, शाप्यम्, शप्तम्, शप्तिः, शपथः–दशैते निन्दायाम्।

६९८. त्विष दीप्तौ—प्रकाशे। त्वेषति, त्वेषते–प्रकाशते। त्विषन्[1], त्विषमाणः–प्रकाशकः। त्विट्, त्विषिः, त्विषा, त्विषणम्, त्विषणीयम्, त्विष्यम्, त्वैष्यम्, त्विष्टिः, त्विष्टम्–नवैते प्रकाशे।

६९९. यज देवपूजासंगतिकरणदानेषु—देवपूजायाम्, धारणे, करणे, दाने च। यजति, यजते–पूजयति, ददाति, धारयति, करोति। यट्, याट्, याजी, यजन्, यजमानः, यक्ता[2], यायजूकः–षट् पूजके। इष्टम्, इष्टिः,[3] यष्टिः[3], यजनम्, याजनम्, यज्ञः, यागः, इष्टव्यम्[4], यज्यम्, याज्यम्–दशैते देवपूजने। यजुस्–यजुर्वेदः।

७००. डुवप बीजतन्तुसंताने—वपने, घर्षणे, तन्तुनिर्माणे च। वपति–क्षेत्रे धान्यमाकिरति (बोता है)। वपते–योजयति (?)। वपन्, वपमानः, वपकः, वापकः,–चत्वारो बीजवापके। वपा–नाभेः श्वेतं मांसम् (चर्बी)। वापिः–कृतसोपानको कूपः। वपनम्–बालकर्त्तनम्, क्षौरकर्म। उप्तव्यम्[5], उप्तम्, उप्तिः, वपनीयम्, वप्यम्, वाप्यम्, वापम्, वप्, वाप्–नव वपने योजने, तन्तुसन्ताने (बुनने में)।

७०१. वह प्रापणे—धारणे। वहति, वहते–धारयति। वहन्, वहमानः, वोढा, वहकः, वाहकः–भारवाही। वह्निः, वाहः, वहनम्, वहनीयम्, वह्या, वाह्यम्, ऊढम्, ऊढिः, ऊढव्यम्–नव वहने। प्रौढिः–बुद्धिमत्ता। प्रौढः–बुद्धिमान्। प्रौढा–बुद्धिमती।

७०२. वेञ् तन्तुसन्ताने—तन्तुयोजने (वस्त्रवयने)। वयति, वयते–तन्तुन् योजयति। तन्तुवायः–वस्त्रनिर्माता (जुलाहा इति भाषायाम्)। वयनम्, वयनीयम्, वीतिः, वीतम्, वयितव्यम्, वय्यम्, वाय्यम्–सप्त तन्तुसंयोगे।

---

१. इत आरभ्योदाहरणेषु गुणाभावश्चिन्त्यः।

२. यष्टेति पाणिनीयाः।

३. पूर्वपठितः 'इष' धातुरप्यत्र द्रष्टव्यः (१।२९१) तत्रस्था. टिप्पणी च।

४. 'इष्टव्यम्' इषेरेव, न यजेः।

५. उप्तव्यम्–कृतसम्प्रसारणस्य 'उप' धात्वन्तरस्य रूपम्। उभयोः समानार्थकत्वादिहैव निर्दिष्टम्। द्रष्टव्या एतत्पृष्ठस्था तृतीया टिप्पणी।

७०३. व्येञ् संवरणे—उपयोगितायाम्। व्ययति, व्ययते–व्ययं करोति, व्यवहरति। व्ययम्, व्ययमानः–व्ययकर्ता, व्यवहर्ता। व्ययम्, व्ययनम्, व्ययनीयम्–उपयोगिता।

७०४. ह्वेञ् स्पर्धायां वाचि—विवादवाक्ये। ह्वयति, ह्वयते–निन्दति। ह्वयन्, ह्वयानः–द्वौ निन्दके। आह्वानम्–शब्दनम्। ह्वा, ह्वायनम्, ह्वायनीयम्, ह्वाय्यम्–चत्वारो विवादशब्दे।

७०५. वस निवासे—वसति, वसते[१]–निवासं करोति। वसन्, वसानः–द्वौ आच्छादके[२]। वसनम्, वस्त्रम्, वासस्–त्रयः प्रावारे ( चादर में )। वस्तु–द्रव्यम्। वस्तिः–शरीरैकदेशः। वसतिः–निवासस्थानम्, जैनमन्दिरम्। वासः, आवासः, निवासः–गृहम्। अधिवासः–निवसनम्। वस्तव्यम्, वसनीयम्, वस्यम्, वास्यम्, उष्टम्,[३] उष्टिः–षण्निवासे। वासना–दैवाधीना, दुर्वासना। वास्तु–गृहस्वामी। वास्तव्यः–निवासयोग्यं गृहम्।

७०६. वद व्यक्तायां वाचि—व्यक्तवाक्ये। वदति, वदते–भाषते। वक्ता[४], वदन्, वदान्यः, वादकः, वादी, वावदूकः–षट् वक्तरि। वदनम्, वक्त्रम्[४]–मुखम्। उक्तिः[४], उक्तम्[४], वक्तव्यम्[४], वदनीयम्–चत्वारो वाक्ये ( भाषणे )। वादनम्, वाद्यम्, वादित्रम्–गानसाधने ( बाजे में )। प्रतिवादः–प्रतिवदनम् ( प्रत्युत्तरम् )। परीवादः–हास्योक्तिः। संवादः–सहभाषणम्। अनुवादः–पश्चात् वादः ( भाषान्तरकरणमपि )।

७०७. टुओश्वि गतिवृद्ध्योः—श्वयति, श्वयते–चलति, वर्धते। श्वयन्, श्वयानः–गन्ता। श्वेतः–वर्णविशेषः, शिवभक्तिः। श्वितिः, श्वितम्, श्वयनम्, श्वितव्यम् ( ? ), श्वित्, श्वित्यम्–षट् चलने वृद्धौ च।

## ॥ अनुविकरणो भ्वादिः समाप्तः ॥

---

१. वस वद श्वि व्रय एते परस्मैपदिन इति पाणिनीयाः। तत्र वदतेरर्थविशेष आत्मनेपदमपि स्मरन्ति ( द्र० १।३। ४७–५० )।

२. अयमर्थश्चिन्त्यः, 'निवासकर्ता' इति सूचितः। आच्छादनार्थस्तु 'वस आच्छादने' इत्यादादिकस्य ज्ञेयः। एवमेव 'वसनम्' आद्युदाहरणार्था ज्ञेयाः। यद्वा निवासशब्दस्य उभाभ्यां धातुभ्यां प्रयोगसम्भवादुभावर्थौ निर्दिष्टौ।

३. अयं धातुः सेट्, तेन 'उषितम्' इति पाणिनीयाः।

४. वदप्रकरणे 'वच' धातो रूपाणि कथमुदाहरति वृत्तिकार इति न ज्ञायते।

# अथ अदादि-गणः

## लुग्-विकरणः[1]

१. अद प्सा भक्षणे—खादने। अदादीनामनो लुक्—अदप्रभृतीनां धातूनाम् अनो लुग् ( लोपो ) भवति। अत्ति—खादति। अदन्, अदः, अदकः—खादकः। अत्ता—श्वश्रूः[2]। अत्तिका—भामी। आदम्—अधिकम्। अत्तिः—वृक्ष-विशेषः ( अञ्जीर इति भाषायां प्रसिद्धः )। अन्तम्—भक्तम्, आहारः। आदिः—प्रभृतिः। अत्तम्, अत्तिः, अत्तव्यम्, अदनम्, अदनीयम्, अद्य, आद्य, अद्यम्, आद्यम्, अद्, आद्, अदि—द्वादश खाद्यपदार्थे। अन्नादम्—अन्नविक्रयः ( ? )। अद्य—अस्मिन् अहनि। प्साति—भक्षति। प्सायन्, प्सायकः—भक्षकः। प्सातम्, प्सायनम्, प्सातव्यम्, प्सानीयम्, प्सायम्—षट् खाद्ये।

---

१. काशकृत्स्नीये धातुपाठे जुहोत्यादयोऽपि अदादिष्वेव पठ्यन्ते। तेन जुहोत्यादयोऽपि लुग्विकरणा एव (श्लुविकरणाः जुहोत्यादय इति तु पाणिनीयाः)। तेन 'नवगणी' धातुपाठ इति कचित्का प्रसिद्धिरपि न्याय्या। 'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणम्' इति पाणिनीयैरप्याश्रीयमाणा परिभाषाऽपि तस्यैव कस्यचिद् व्याकरणस्योक्तिर्यत्र श्लुविकरण-स्याभाव आसीत्। अत एव एतत्परिभाषोपयोगिस्थले श्लुविकरणमपि धातुं लुग्विकरणपक्षे निक्षिप्यालुग्विकरणकार्यं नेच्छन्ति पाणिनीयाः। अन्यथा श्लुविकरणानामलुग्विकरणत्वाद् अलुग्विकरण कार्यप्राप्तिः स्यादेव। कातन्त्रा अपि जुहोत्यादीन् अदादिष्वेव पठन्ति।

२. श्वश्रूवाचकः 'अत्ता'शब्दः प्राकृतभाषाया इति शाब्दिकाः। तथा च प्रयोगः—'अत्ता एत्थ निमज्जइ···' (साहित्यदर्पणे प्रथमपरिच्छेदे उद्धृतं पद्यम्) इति। 'श्वश्रूरत्र निमज्जति' इति तत्संस्कृतच्छाया इति टीकाकाराः। वस्तुतः श्वश्रूवाचकोऽत्ताशब्दः संस्कृत-भाषाया एव इति अनया टीकया स्पष्टं भवति। प्राकृतापभ्रंशादित्वेन शाब्दिकैः सम्मतेषु देशिशब्देष्वपि बहवः शुद्धाः संस्कृतभाषात्मकाः शब्दा उपलभ्यन्ते। तेषां देशित्वं तु देश-विशेष एव प्रयोगदर्शनात् प्रतिज्ञायते। भवति च बहूनां संस्कृतशब्दानामपि देशविशेष एव प्रयोगः। यथाह यास्कः—'शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते विकारमस्यार्येषु भाषन्ते शव इति' (निरुक्त २।२)। इममेव मतं भगवान् पतञ्जलिर्विस्तरेण प्रोवाच—'एतस्मिं-श्चातिमहति प्रयोगविषये ते ते शब्दास्तत्र तत्र नियतविषया दृश्यन्ते। तद्यथा शवतिर्गति-कर्मा कम्बोजेष्वेव भाषितो भवति विकार एनमार्या भाषन्ते शव इति। हम्मतिः सुराष्ट्रेषु, रंहतिः प्राच्यमगधेषु, गमिमेव त्वार्याः प्रयुञ्जते। दातिर्लवनार्थे प्राच्येषु, दात्रमुदीच्येषु' इति। पस्पशाह्निके १।१। आ. १॥

२. षस स्वप्ने—सस्ति-शेते। ससन्, ससकः—स्वप्नद्रष्टा। सस्तिः, सस्तम्, ससनम्, ससनीयम्, सस्यम्, सास्यम्, सासम्-सस स्वप्ने।

३. वश कान्तौ—द्योतने[1]। वष्टि—द्योतते। वशन्, वशकः—द्योतकः। वशिः, वशुः, वाशुः, वशः, वश्यम्, वाश्यम्, उष्टिः, उष्टम्, उष्टव्यम्, वशनम्, वाशनम्, वाशम्, वश्, वाश्—एते पञ्चदश द्योतने। वशा—मांसम्[2]।

४. हन हिंसागत्योः—मारणे चलने च। हन्ति—मारयति गच्छति[3] वा। हान्, हन्, हनन्, हनकः, हः, हनो घा—हन्तेर्घा आदेशो भवति—घातः, घातकः, घाः, घायकः, हन्ता—एते दश घातके गन्तरि च। हानिः, हनिः, हननम्, हनम्, हन्तव्यम्, हन्तिः, हन्तम्, हननीयम्, हन्यम्, हान्यम्, हानम्, घातम्, घातिः, घायम्—चतुर्दश मारणे चलने च।

५. द्यु अभिगमने-सम्मुखगमने। द्युत्वादीनां वृद्धिस्तिसिमिपु—द्युप्रभृतीनां वृद्धिर्भवति तिसिमिपरतः। द्यौति—अभिमुखं गच्छति। द्युत्, द्यवन्, द्यवकः, द्यावः—चत्वारोऽभिमुखं गन्तरि। द्यविः, द्यवनम्, द्यवनीयम्, द्युतम्, द्युतिः, द्युतव्यम्—षट् अभिमुखं गमने।

६. यु मिश्रणे—सम्मेलने। यौति— मिश्रयति। युत्, यवन्, यावकः—चत्वारो मिश्रके। यवः—धान्यविशेषः (जौ)। यवनः—म्लेच्छः। यवानी—यवनस्त्री[4]। यवनानी—म्लेच्छस्त्री[5]। यावनी[5]—यवनलिपिः। यावनालः—धान्य-

---

१. कान्तिरत्रेच्छा इत्यर्थे व्याख्यातार आहुः।

२. वशा वन्ध्या गौरिति कोशकाराः। मांसम् इत्यर्थः कश्चट्टीकाकारेण दन्त्यवतः 'वसा' शब्दस्य भ्रान्त्या निर्दिष्टः स्यात्।

३. कवयस्तु हन्तेर्गमनार्थेऽसामर्थ्यमाहुः। तद्यथा—'कुञ्जं हन्ति कृशोदरी-अत्र हन्तीनि गमनार्थे पठितमपि न तत्र समर्थम्' इति (द्र० साहित्यदर्पण परि०७)। वस्तुतः साहित्यकृतां गुणदोषविचारः प्रायेण तात्कालिकीं परिस्थितिं प्रसिद्धिं वानुरुध्य प्रवर्तते। तेन मम्मटविश्वनाथप्रभृतीनां गुणदोषविवेचनमाश्रित्य प्राचीनतनेषु कविप्रबन्धेषु दोषा-विष्करणमप्रमाणम्। यथा पाणिनीयं शब्दानुशासनमाश्रित्य तत्पूर्वकालिकेषु रामायण-महाभारतादिप्रयोगेषु साध्वसाधुविवेचनम्। इममेव नियममनवबुद्ध्य आधुनिकाः पाणिनीयाः प्राचीनान् शिष्टप्रयोगान् अप्यसाधून् मन्यन्ते। हन्तेर्गमनार्थत्वमस्वीकृत्यैव गोघ्नादिषु हन्तेर्हिंसार्थत्वं च स्वीकृत्य गोघ्नायातिथये गवामालम्भनं प्रवर्तितम्। वस्तुतः 'गोघ्न'शब्दे हन्तिर्गत्यर्थ एवः। गतेस्त्रयोऽर्थाः—ज्ञानं गमनं प्राप्तिश्च। तत्र गोघ्ने प्रापणार्थो हन्तिः। यद्यन्यथा चेत् हस्तघ्नशब्दं पश्यत। हस्तघ्नशब्देन हस्तत्राणम् (दस्ताना इति भाषायाम्) उच्यते। नात्र कश्चिदपि विपश्चित् 'हस्तस्य हिंसनम्' अर्थं इति ब्रवीति।

४. यवाद्दोषे—दुष्टो यवो यवानी' (= अजवायन) इति पाणिनीयाः (४।१।४९)।

५. 'यवनाल्लिप्याम्—यवनानां लिपिः' इति पाणिनीयाः (४।१।४९)।

विशेषः–('मकई' इति प्रसिद्धः)। युवा–तरुणः। युवतिः–तरुणी। यौवनम्–तरुणावस्था। युतिः, युतम्, युतव्यम्[1], यवनीयम्, यव्यम्, याव्यम्–षट् मिश्रणे।

७. णु स्तुतौ—नौति–प्रशंसति। नुत्, नवन्, नवकः–स्तोता। प्रणवः–ओङ्कारः। नवन्, नवम्, नव्यम्, नवीनम्, नाव्यम्, नावम्, नवनीयम्, नुतव्यम्[1], नुतिः, नुतम्, नुत्यम्, नुतव्यम्[1]–एते द्वादश[2] स्तुतौ प्रशंसायाम्। नवतिः–दशोनं शतम्।

८. क्ष्णु तेजने—अणिकरणे (नोक बनाने में)। क्ष्णौति–अणिं करोति अग्रभागं तीक्ष्णी करोति। क्ष्णवन्, क्ष्णवकः, क्ष्णुत्–त्रयः अणिकर्तरि, अणिमति च। क्ष्णवनम्, क्ष्णवनीयम्, क्ष्णव्यम्, क्ष्णाव्यम्–चत्वारोऽणिकरणे तीक्ष्णीकरणे।

९. स्नु प्रस्रवणे—स्रोतसि। स्नौति–प्रस्रवति। स्नुत्, स्नवन्, स्नवकः, स्नावकः, स्नावः–पञ्च स्रोतप्रस्रावके। स्नुः–स्रोतस्थानम्। स्नुतिः, स्नुतम्, स्नवम्, स्नवनम्, स्नवनीयम्–पञ्च स्रोतसि।

१०. टुक्षु रु कु शब्दे—ध्वनौ। क्षौति–व्यर्थं वदति। क्षवन्, क्षावकः, क्षवणः, क्षावणः–वाचाले वैतण्डिके। क्षुत्, क्षुतिः, क्षुतम्, क्षुतव्यम्, क्षव्यम्, क्षाव्यम्–षट् वितण्डायाम्। रौति–भर्त्सयति। रवन्, रवकः, रावकः, रवणः, रावणः–पञ्च भर्त्सके। रावणः–एतन्नामा व्यक्तिः। रविः[3]–सूर्यः। रुत्, रव्यम्, राव्यम्, रवणीयम्–चत्वारो भर्त्सने। कौति–भर्त्सयति (शब्दयति)। कवन्, कवकः, कावकः, कवः, कविः, कावः, कव्यः, काव्यः–भर्त्सके। कुः–पृथ्वी। कुत्, कुतिः, कुतम्, कुत्यम्, कुतव्यम्[4], कवनम्, कवनीयम्–षट् (?, सप्त) भर्त्सने। कविः, काव्यः–शुक्रग्रहः (?, शुक्राचार्योऽसुरपुरोहितः)।

११. षु प्रसवे—गर्भविमोचने। सौति–गर्भं विमुञ्चति। सवन्, सवकः, सावकः, सविता–चत्वारः प्रसवकर्तरि।[5] सूर्यः। सावित्री–माता, क्रियाशक्तिः।

---

१. गुणाभावश्चिन्त्यः। २. पुनः पाठात् 'एकादश' इत्येव साधु।

३. एतेन सूर्यतः काचन ध्वनिः प्रसरति इति प्राचीनं विज्ञानं स्पष्टीभवति। सूर्यस्य विशिष्टेभ्यो रश्मिभ्यो विशिष्टा ध्वनय उत्पद्यन्ते। अत एव तेषां रश्मीणां गायत्र्यादीनि नामानि स्मर्यन्ते पुराणविद्भिः।

४. गुणाभावश्चिन्त्यः, एवमुत्तरत्रापि 'अधीतव्यम्' इत्यादिषु द्रष्टव्यः।

५. यद्यपि प्रसवनं स्त्रीकर्म। तथापि गर्भस्य निमित्तत्वात् गर्भधारयितरि पुंस्यप्येते प्रयुज्यन्ते। अत एव 'आचार्यो गर्भी भवति हस्तमादाय दक्षिणम्' (ब्रह्मचारिणः) (शत० ११, ५, ४, १२) इत्यत्राचार्येऽपि गर्भिशब्दस्य प्रयोगो दृश्यते।

सुः, सुत्, सविः, सवुः, सावुः, सवनम्, सुतिः, सुतम्, सुतव्यम्, सुत्यम्—दश प्रसवे। सव्यम्—दक्षिणपार्श्वम्। अपसव्यम्—वामपार्श्वम्।

१२. अधिपूर्व इक् स्मरणे[1]—स्मृतौ। अध्येति—स्मरति। अध्ययन्, अध्ययकः, अध्यायकः, अध्येता—चत्वारः स्मर्तरि। अध्यायः—एतन्नामा ग्रन्थावयवः। अध्ययनम्, अध्यापनम्, अधीतिः, अधीतम्, अधीतव्यम्, अध्ययनीयम्, अधीः, अधीत्—अष्टौ पठने[2] (?, स्मरणे)। अध्येत्री—अध्यापिका[2] (?, स्मर्त्री)।

१३. इण् गतौ—चलने। एति—चलति। इः—कामः, मन्मथः। यन्, यन्ता, अय्यः, आय्यः, अयकः, आयकः—षट् गन्तरि। उपेतः, समेतः[3]—संगच्छमानः। परेतः, अपेतः—मृतः। अयनम्—मार्गः। न्यायः—नीतिः। नैयायिकः—न्यायस्याध्येता। इति—समाप्तिः। इत्, इतिः, इतम्, इतव्यम् (?)—चत्वारश्चलने। आयः—अवस्था = स्थितिः, धनागमः, (आमदनी इति भाषायाम्)।

१४. वी प्रजननकान्त्यासनखादनेषु[4] च—प्रसवे, प्रकाशे, आसने, खाद्ये च। वेति—प्रसूते। वयन्, वयकः, वायकः—जन्मदाता। वयस्—आयुः, पक्षिविशेषः। वायम्—सिंहासनस्येच्छा। वायिः—प्रकाशः। वीतिः—खाद्यम्। प्रकाशदाता। वीतम्, वयनम्, वय्यम्, वाय्यम्—चत्वारः सिंहासने (?)। वेत्रम्—यष्टिः ('छड़ी' इति भाषायाम्)। वैय्यारः (?)—'इठलाना' इति भाषायाम्।

१५. भा दीप्तौ—द्योतने। भाः, भायिः, भायन्, भायकः—चत्वारो द्योतके। भम्—नक्षत्रम्। भायुः—पिता। प्रभा, भानम्, भातिः, भानीयम्, भातव्यम्, भायम्—षट् प्रकाशे। प्रभाकरः—सूर्यः। प्रभातम्—प्रातःकालः।

१६. या प्रापणे—गतौ। याति—गच्छति। यायन् (?, यन्), यायकः, याता—गन्ता। यानम्, यापनम्, यापनीयम्, यात्रा—चत्वारो गतौ। यायावरः—धान्यविशेषः (?)।

१७. वा गतिगन्धनयोः—चलने दुर्गन्धे च। वाति—वहति। वायुः—अनिलः। वायव्यम्—उत्तरपश्चिमकोणम्। वायवीयम्—वायोरिदम्। वानम्—

---

१. कातन्त्रधातुपाठे 'इक् स्मरणे' इत्येव पठ्यते, नाधिपूर्वः।

२. अयमर्थस्तु इङ् अध्ययने इति धातोः, न इक् स्मरणे इत्यस्य।

३. 'सम्+आ+इतः' इति सन्धिच्छेदो ज्ञेयः। यद्वा 'सम+इतः' इति। अत्र सम्-अर्थकोऽकारान्तो समशब्दो द्रष्टव्यः। ४. 'कान्त्यसन' इति कातन्त्रपाठः। कशट-टीकायाम् आसनार्थस्य निर्देशात् काशकृत्स्ने 'आसन' इत्येव पाठो द्रष्टव्यः। यद्वा मूलपाठे प्रमादपठितस्यैव टीकाकृता तथा व्याख्यानं कृतं स्यात्।

वर्षा। वायिः—स्वगोत्रम्। वायन्, वायकः, वाता—गन्ता, दुर्गन्धयुक्तः। वातः—वायुः, पीडा। वा—विकल्पार्थः।

१८. ष्णा शौचे—स्नाने। स्नाति(—स्नान करता है)। स्नायन्, स्नातः, स्नापकः, स्नाता, स्नातकः—पञ्च स्नानकर्तरि। स्नानम्, स्नपनम्, स्नापनम्, स्नातव्यम्, स्नापनीयम्—स्नाय्यम्—षट् स्नाने।

१९. श्रा पाके—श्राति श्रपयति—पचति। श्रायन्, श्रायकः, श्रापकः श्राता—चत्वारः पक्तरि। श्राणम्—श्राणीयम्, श्रायम्, श्रातिः, श्रातव्यम्—पञ्च पाके।

२०. द्रा कुत्सायां गतौ—नीचगत्याम्। द्राति—निन्दति। द्रायन्, द्रापकः, द्राता—निन्दकः। द्राणम्, द्रापणम्, द्रापणीयम्, द्राति, द्रातव्यम्, द्राय्यम्—षट् निन्दायाम्।

२१. पा रक्षणे—पालने। पाति—रक्षति। पायन्, पायकः, पाता, पाः,—चत्वारो रक्षके। गोपः—बलीवर्दः, गोपजातिविशेषः। पातिः—अश्वः। पातम्—प्राचीनम्। पायिः—दरिद्रः। पायुः—गुदा। पानम्, पातव्यम्, पानीयम्, पायम्, पाय्यम्—पञ्च रक्षणे। पात्रम्—भाजनम्।

२२. रा ला आदाने[1]—ग्रहणे। राति—गृह्णाति। रायन्, रायकः, राता—ग्रहीता। रायणम्, रायणीयम्, राता—चत्वारो ग्रहणे। राः, रः—अग्निः। अरातिः—शत्रुः। आरात्—दूरार्थकः, समीपार्थकश्च। लाति—गृह्णाति। लायन्, लायकः, लातः, लाता—ग्रहीता। लायः—अश्वशाला। कुलायः—नीडम् (घोंसला), 'टोपी' इति प्रसिद्धं च। अलातम्—प्रज्वलितं काष्ठम्। लाः, लः—ग्रहीता। लानम्, लातव्यम्, लानीयम्—त्रयो ग्रहणे। कुलायी—पक्षी।

२३. दाप् लवने—कर्तने। दाति—कृन्तति। दायन्, दायकः, दाता, दाः, दः—पञ्च लवितरि। दानम्, दातिः, दायनीयम्, दाय्यम्, दातव्यम्—पञ्च लवने।

२४. ख्या प्रकथने—वचने। ख्याति—कथयति। ख्यायन्, ख्यायकः,

---

१. कातन्त्रस्यास्मदीये ब. कोशे 'रा ला आदाने' पठ्यते, रा. कोशे 'रा ला दाने' इति। 'रा ला आदाने' इति चन्द्रः। रा दाने, ला आदाने इति पाणिनीयाः (क्षीर० २।५०,५२)। निरुक्ते अप्सरा पदव्याख्याने 'तद्रा भवति रूपवती, तदनयात्तमिति वा, तदनया दत्तमिति वा' (५।१३)। एवं 'रा' इत्यस्योभावप्यर्थौ प्रदर्शितौ। तौ च 'रादाने' इति सांहितिकपाठस्योभयथा विच्छेदात् उभावपी सम्भवतः।

ख्याता, ख्याः—चत्वारो वक्तरि । ख्यानम् , ख्यातम् , ख्यातिः, ख्यातव्यम् , ख्यापनम् , ख्यापनीयम् , ख्यायम्—सप्त कथने । आख्या—नाम । प्रत्याख्यानम् , प्रत्याख्यातम्—असत्यम् ।

२५. प्रा पूरणे—भरणे । प्राति—भरति । प्रायन् , प्रायकः, प्राता—त्रयो भरणकर्तरि । प्रातर्—सूर्योदयकालः । प्रा (?, प्र )—अतिशयः । प्राः, प्रातिः, प्रातम् , प्रापणम् , प्रापणीयम् , प्रान्यम् , प्रायम् , प्रातव्यम्—अष्टौ पूरणे ।

२६. मा माने—माति—( 'माता है' 'समाता है' इति भाषायाम् ) । मा—लक्ष्मी, निषेधकार्थः । माता—जन्मदात्री । मापन् , मापकः, प्रमाता—त्रयः प्रमातरि । मानम् , मितम् , मितिः, मितव्यम्, मेयम्—पञ्च माने । प्रतिमा—मूर्तिः ।

२७. विद ज्ञाने—वेत्ति—जानाति । वित् , विद्वान्[2], वेदन् , वेदकः, वेदी, वेत्ता[3]—षट् ज्ञातरि । वेदः—श्रुतिः । वेदनम् , वेदितव्यम् , वेदनीयम् , वेद्यम् , वैद्यम्—पञ्च ज्ञाने ।

२८. अस भुवि—सत्तायाम् । अस्ति—भवति । असन् , असकः[4]—भविता । अः—महेश्वरः । अस्तिः, अस्तम् , अस्तव्यम् , अस्यम् , असनीयम्—पञ्चास्तित्वे ।

२९. मृजुप् शुद्धौ—मार्ष्टि—शुद्धं करोति । मार्ष्टा, मार्जन् , मार्जकः, मार्क्—चत्वारः शोधके । मार्जनम् , मार्जनीयम् , मार्ष्टव्यम् , मार्ग्यम् , मृष्टिः, मृष्टम्—शुद्धौ । संमार्जनी—मार्जनकर्त्री ( 'बुहारी' इति भाषायाम् ) ।

३० वच परिभाषणे—कथने । वक्ति—कथयति । वक्ता, वाचकः, वचन्—कथयिता । उक्तिः, उक्तम्, वचनम्, वचनीयम्, वाच्यम्, वाचकम्, वाचनीयम् , वाक् , वचस् , वक्तव्यम्, वाचा[5]—एकादश कथने । वक्त्रम्—मुखम् । वाग्मी, वाचालः, वाचाटः—कथकः ।

३१. रुदिर् अश्रुविमोचने—रोदने । रुदादेरिः सर्वधातुके—रुदादीनाम् इकारो भवति सार्वधातुके परतः । रोदिति—अश्रु विमोचयति । रुत्, रुदन्,

---

१. इत्त्वं कथम् ?  २. विद् इत्यस्मान्मतुप्यपि विद्वान् इति भवति ।

३. पाणिनीयाः सेटमाहुः—वेदिता इति । 'वेत्ता' इति प्रयोगोऽपि दृश्यते । यथा—'वेत्तासि वेद्यं च परं च धाम' (गीता ११।३८), 'यथा खरश्चन्दन भारवाही भारस्य वेत्ता न तु चन्दनस्य' इति सुभाषितम् ।

४. अत्र भूभावाभावे को हेतुः । यद्वा यथा पाचयामास आदिषु न भूभावस्तथाऽत्रापि ज्ञेयः ।

५. भागुरिराचार्योऽपि आबन्तं 'वाचा' शब्दमनुशास्ति । तथा च श्रूयते—

रोदकः, रुद्रः—चत्वारो रुदनकर्तरि। रुत्तिः, रुत्तम्, रुत्तव्यम्, रोदनीयम्, रोद्यम्, रौद्यम्, रौद्रम्—सप्त रोदने।

३२. ञिष्वप शये—स्वपिति—शेते। स्वपन्, स्वपकः—शायकः। सुप्तिः, सुप्तम्, सुप्तव्यम् (?, स्वप्तव्यम्), स्वप्नः, स्वापः, स्वपनीयम्, स्वप्यम्, स्वाप्यम्—अष्टौ शयने।

३३. श्वस अन प्राणने—चेतने। श्वसिति—चेतति, जागर्ति। श्वसन्, श्वसकः—द्वौ चेतितरि। श्वसनः—वायुः। श्वासः—प्राणः। श्वस्तिः—कल्याणम् (अच्छा)। श्वस्तम्—हितम्। श्वस्तव्यम्, श्वस्यम्, श्वसनीयम्, श्वास्यम्—चत्वार-श्चेतने। अनिति—चेतति। अनन्, अनः, अनकः—त्रयश्चेतितरि। आनकः—(मुद्रा, परिमाणविशेषः)। आना—हस्तिनी, रोगः। प्राणः—हृद्वायुः। अपानः—गुदवायुः। समानः—नाभिवायुः। उदानः—कण्ठवायुः। व्यानः—सर्वशरीरव्यापि-वायुः। अन्—उत्तमः पुरुषः। अन्तिः, अन्तम्, अननम्, अन्तव्यम्, अननीयम्—पञ्च चेतनायाम्। अन्यः—द्वितीयः।

३४. जक्ष भक्षणहसनयोः—अदने हसने च। जक्षिति—अत्ति, हसति। जक्षन्, जक्षकः—भक्षकः, हसिता च। जक्षणम्, जक्षणीयम्—खाद्यम्।

३५. जागृ निद्राक्षये—निद्रापनये। जागर्ति—निद्रां परित्यजति। जाग्रन्, जाग्रकः—त्यक्तनिद्रः (जागा हुआ)। जागरूकः—कुक्कुटः। जाग्रत्, जागरणम्, जागरणीयम्, जागरम्—निद्रात्यागे।

३६. दरिद्रा दुर्गतौ—दारिद्र्ये। दरिद्राति—धनहीनो—भवति। दरिद्रः, दरिद्रकः—धनरहितः। दरिद्रा, दरिद्राणम्, दरिद्राणीयम्, दारिद्र्यम्—चत्वारो धनाभावे।

३७. चकासृ चाकश्ट दीप्तौ—प्रकाशे। चकास्ति—प्रकाशते। चकासन्, चकासकः—द्वौ प्रकाशके। चकास्तिः, चकास्तम्, चकास्तव्यम्, चकासनम्, चकासनीयम्, चकासम्, चकास्यम्—षट् (? सप्त) प्रकाशे। चाकष्टि—प्रकाशते। चाकशन्, चाकशकः—प्रकाशकः। चाक्यः (?),

---

वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः।
आपं चैव हलन्तानां यथा वाचा निशा दिशा॥ इति।

भागुरेराचार्यस्यान्यानि व्याकरणसूत्राण्यस्मदीये 'सं० व्याकरण शास्त्र का इतिहास' नाम्नि ग्रन्थे (भाग १, पृष्ठ ९७–९९) द्रष्टव्यानि।

चाकष्टम्, चाकशनम्, चाकशनीयम्, चाकष्टव्यम्, चाकशम्, चाकश्यम्—सप्त प्रकाशे ।

३८ शासु अनुशिष्टौ—अनुशासने । शास्ति—दण्डयति । शास्ता—दण्ड-प्रदाता, अर्हन्तः, चतुर्मुखः, अष्टबाहुः, रक्तशरीरी, द्वादशाक्षः, गजवाहनः, मोहनीरूपो नारायणः, रुद्रपुत्रः, मत्स्यावतारस्य विष्णोः संहारकः ।

३९. चक्षिङ् व्यक्तायां वाचि—कथने ( अनुमोदने ), सन्दर्भे । चष्टे—कथयति । चक्षाणः, चक्षकः, चक्षाः—कथकः, अनुमोदकः । चक्षणम्, चक्षणीयम्—कथने, अनुमोदने । चक्षुस्—नेत्रम् ।

४०. ईर गतौ कम्पने च—ईर्ते—चलति गच्छति । ईरः, ईराणः—गन्ता कम्पिता च । ईरणम्, ईर्यम्, ऐरम्—चलनम् । ईरी—कम्पवान् । ईरिणी—कम्पवती ।

४१. ईड ईळ स्तुतौ—स्तवने । ईट्टे—स्तौति, प्रशंसति । ईडानः, ईडकः—प्रशंसकः । ईडा, ईडनम्, ईड्यम्, ऐड्यम्—चत्वारः प्रशंसायाम् । ईडिकः—(?) । ईडे (?) ईळ्ते—प्रशंसति । ईळा, ईळनम्, ईळनीयम्, ईळ्यम्, ऐळ्यम्—पञ्च प्रशंसायाम् । ईळिः—काष्ठपर्णाभ्यां निर्मितः क्षेत्रप्राकारः ( 'बाड़' इति भाषायाम् ) । ईळिका—(?) ।

४२. ईश ऐश्वर्ये—ईष्टे—शास्ति । ईट्, ईशः, ईशिता, ईशानः, ईश्वरः—पञ्च शासके । ईष्टिः, ईष्टम्, ईशितव्यम्, ईश्यम्, ऐश्यम्, ऐश्वर्यम्—षट् शासने ।

४३. आङः शासु इच्छायाम्—आशास्ते—इच्छति । अशासानः, आशासकः, आशास्ता, शासितवान्—चत्वार इच्छुके । शाष्टिः[1], शाष्टम्, शासितव्यम्, शास्यम्—चत्वार इच्छायाम् ।

४४. आसु उपवेशने—आस्ते—उपविशति । आसीनः, आसकः, आस्ता, आस्तवान्—चत्वार उपवेशके । आस्तिः, आस्तम्, आसनम्, आसनीयम्, आस्तव्यम्—पञ्च आसने । आसनम्—गुदा । आस्यम्—मुखम् ।

४५. वस आच्छादने—वस्ते—आच्छादयति । वसानः, वसकः, वस्तवान्—आच्छादकः । वसनम्, वस्त्रम्, वस्तव्यम्, वसनीयम्, वस्यम्, वास्यम्, वसन्, वस्त्रम्—अष्टौ आच्छादनवस्तुनि । वस्तिः—निवासः । वस्तु—द्रव्यम् ।

४६. कसि गतिशासनयोः—गत्याम् उपवेशने च । कंस्ते—गच्छति, उपविशति । कंसः—एतन्नामा राक्षसः । कांस्यम्—धातुविशेषः । कंसानः, कंसकः,

१. षत्वाद्पूर्वत्वं कथं न ।

कंस्तवान्–उपविष्टः। कंसनम्, कंसनीयम्, कंस्तव्यम्, कंस्तिः, कंस्तम्, कंस्यम्–षट् उपवेशने।

४७. णिसि चुम्बने—निंस्ते–चुम्बति। निंसः, निंस्तवान्, निंसकः, निंसानः–चत्वारश्चुम्बके। निंसम्, निंसनम्, निंसनीयम्, निंस्तव्यम्, निंस्तिः, निंस्तम्, निंस्यम्–सप्त चुम्बने।

४८. णिञ्जि शुद्धौ—निङ्क्ते (?, निङ्क्ते)–शोधयति। निञ्जः, निञ्जकः, निञ्जकवान् (?), निञ्जानः–चत्वारः शोधके। निञ्जा, निञ्जनम्, निञ्जनीयम्, निङ्क्तव्यम् (?, निङ्क्तव्यम्), निञ्ज्यम्, निङ्तिः (?, निङ्क्तिः), निङ्तम् (?, निङ्क्तम्)–सप्त शुद्धौ।

४९. सिञ्जि[1] अव्यक्ते शब्दे—अनुकरणध्वनौ। सिङ्क्ते (? सिङ्क्ते)–ध्वनिं करोति। सिञ्जः, सिञ्जकः, सिक्तवान् (?, सिङ्क्तवान्), सिञ्जानः, सिक्त्वा (?, सिङ्क्त्वा)–पञ्च शब्दितरि। सिञ्जा, सिञ्जनम्, सिञ्जनीयम्, सिक्तव्यम् (?, सिङ्क्तव्यम्), सिक्तिः सिक्तम् (?, सिङ्क्तिः, सिङ्क्तम्)–षट् ध्वनौ। सिञ्जिनी–रज्जुः।

५०. वृजी वर्जने—त्यागे। वृङ्क्ते (?, वृक्ते)–त्यजति। वर्जकः, वर्जानः, वर्जः, वृक्तवान्–चत्वारस्त्याजके। वर्जनम्, वर्जनीयम्, वर्ज्यम्, वृक्तिः, वृक्तम्, वृक्तव्यम्[2]–षट् त्यागे।

५१. पृजी सम्पर्के—संसर्गे। पृङ्क्ते (?, पृक्ते) मिलति। पृक्तः, पृक्तवान्, पृञ्जकः,[3] पृञ्जः, पृञ्जानः (?)–पञ्च यावके, मेलके। पृञ्जा,[3] पृञ्जनम्, पृञ्जनीयम् (?), पृक्तम्, पृक्तव्यम्[2] (?), पृक्तिः–षट् मिश्रणे।

५२. पूञ्[4] प्राणिगर्भविमोचने—प्रसवे। सूते–गर्भमुञ्चति। सविता, सूतः, सूतवान्, सावी, सवानः, सावकः–उत्पादके। सूः, प्रसूः, प्रसूता, सवित्री, –जन्मदात्री। सवः, सावः, सवनम्, सवनीयम्, सव्यम्, साव्यम्, सवितव्यम् सविः–षट् प्रसवे जनने।

---

१. अत्र 'शिजि' इति तालव्यवान् शुद्धः पाठः स्यात्, तथैवोदाहरणेष्वपि तालव्यः शकारोज्ञेयः। कातन्त्रे 'शिजि' इत्येव पठ्यते। पाणिनीयाअपि तथैवामनन्ति। 'अयं स शिङ्क्ते' (ऋ० १।१६४।२९) इत्यादि प्रयोगेष्वयमेवोपलभ्यते।

२. गुणाभावः कथम् ?। ३. अत्रोत्तरत्र च नुमागमः कथम् ?

४. प्रकरणानुरोधात् 'षूङ्' इति शुद्धः पाठः। कातन्त्रेऽपि षूङ् इत्येवोपलभ्यते।

५३. शीङ् स्वप्ने—निद्रायाम् । सर्वेषां जीवानां देहरूपायां गुहायां शेते शिवः—प्राणलिङ्गः । शीतः, शीतवान्, शयिता, शयकः, शायकः, शायी, शयानः—सप्त शयितरि । गिरिशः, गिरिशयः—कैलाशवासी । शीः, शयनम्, शायनम्, शयितव्यम्, शीतम्, शीतिः, शय्या, शय्यम्, शाय्यम्, शायम्—दश निद्रायाम् । शीतम्—हिमम् । शीता—जानकी, लाङ्गलपद्धतिः ।

५४. इङ् अध्ययने—पठने । अधीते—पठति । अध्ययकः, अध्येता, अध्यायकः, अध्यायी, अध्यापकः, अधीयानः, अधीयान्—षट् पाठके । अधीत्, अधीतिः, अधीतम्, अधीतव्यम्, अध्ययनम्, अध्यायः, अध्ययनीयम्—सप्त पठने ।

५५. दीधीङ् दीप्तिदेवनयोः—प्रकाशे क्रीडने च । दीधीते—प्रकाशते । दीधीतवान्, दीधीतः, दीधीयकः[1], दीधीयानः, दीधीता, दीधायकः—षट् प्रकाशके । दीधितः[2], दीधितम् दीधितव्यम्, दीधयनम्, दीधयनीयम्, दीधव्यम् ( ?, दीधय्यम् ), दीधाय्यम्, दीधायम्, दीधयम्—अष्टौ प्रकाशे । स्वरवद् यः कृत्—कृत्संज्ञको यकारः स्वरवद् भवति ।[3]

५६. वेवीङ् वेतनातुल्ये—कर्मकरवद्व्यवहारे । वेवीते—भृतकत्वं करोति ( मजदूरी करता है ) । वेवीतः, वेवीतवान्, वेवयकः, वेवायकः, वेवीयानः, वेवीता—षट् भृतकः । वेवीतिः, वेवीतम्, वेवीतव्यम्, वेवीयनम्, वेवियनम्, वेवय्यम्, वेवाय्यम्, वेवयम्, वेवायम्—नव भृतककर्मणि ।

५७. हुङ्[4], अपनयने—हूते—त्यजति । हूतः हूतवान्, ह्वानः—त्याजकः आह्वयिता च । हूतिः, हूतम्, आह्वानम्—त्यजनम्, आह्वानं च ।

५८. द्विष अप्रीतौ—अहिते । द्वेष्टि, द्विष्टे—मात्सर्यं करोति । द्विषन्, द्विषाणः, द्वेष्टा, द्वेषकः, द्विष्टवान्—पञ्च द्वेषके ( अप्रीतिकर्तरि ) । द्विष्टिः, द्विष्टम्, द्वेषः, द्वेषणम्, द्वेषणीयम्, द्वेष्यम्, द्वैष्यम्, द्वैषम्, द्वेष्टव्यम्—नवाहिते ।

५९. दुह प्रपूरणे—दोहने । ह्रस्वपूर्वयोर्हकारचवर्गयोः कवर्गः—ह्रस्वं

---

१. अत्र बहवोऽपाणिनीयाः प्रयोगा दृश्यन्ते, एवमुत्तरधातावपि ।

२. अत्रोत्तरत्र च ह्रस्वत्वं कथम् ?

३. अनेन यति दीधय्यम्, ण्यति दीधाय्यम्—इत्यत्र अय्—आयौ भवतः । एवम् उत्तरधातौ वेवय्यः वेवाय्य इत्यत्रापि ज्ञेयम् ।

४. अपपाठोऽयं प्रतीयते, तथैवोदाहरणेष्वपि । अत्र हुङ् इति शुद्धः पाठः । कातन्त्रेऽपि हुङ् इत्येव पठ्यते ।

पूर्वं यस्मात् तादृशो हकारस्य चवर्गस्य च कवर्गादेशो भवति । दोग्घि, दुग्धे-दोहनं करोति । दोग्धा, दोग्धवान्, दोहन्, दोहानः, दोहकः, धुक्-षट् दोहन-कर्तरि । दोहनम्, दोहनीयम्, दोग्धव्यम्, दोह्यम्, दौह्यम्, दुग्धम्, दुग्धिः, दोहळम्-अष्टौ दोहनकर्मणि । दोग्ध्री-दोहनकर्त्री ।

६०. दिह उपचये—रूपे । देग्धि, दिग्धे-रूपयति[1] । देग्धा, देहन्, देहकः, दिग्धवान्, धिक्-रूपयितरि । देहः-शरीरम् । देहनम्, देह्यम्, दैह्यम्, दैहम्, दिग्धिः, दिग्धम्, देहनीयम्, देग्धव्यम्-अष्टौ रूपणे ।

६१. लिह आस्वादने—रुच्याम् (?) । लेढि, लीढे-आस्वदयति । लेढा, लेहन्, लेहानः, लेहकः, लिट्, लीढवान्, लीढः-सप्त आस्वादके । लेहनम्, लेह्यम्, लैह्यम्, लैहम्, लीढिः, लीढम्, लीढव्यम्-सप्त आस्वदने ।

६२. ऊर्णुञ् आच्छादने—तनादेरुः[2]—तनादेर्धातोरु-विकरणो भवति ।[2] ऊर्णोति, ऊर्णुते, ऊर्णीते[3]-चयति । ऊर्णः, ऊर्णन्, ऊर्णकः, ऊर्णिता, ऊर्णत-वान् (?), ऊर्णानः-षट् तन्तुवायके । ऊर्णनाभिः-(मकड़ी इति भाषायां प्रसिद्धा) । ऊर्णनम्, ऊर्णनीयम्, ऊर्णितव्यम्, ऊर्णतिः, ऊर्णितम्-पञ्च वयने ।

६३. ष्टूञ्[4] स्तुतौ—प्रशंसायाम् । स्तौति, स्तवीते, स्तुते-प्रशंसति । स्तोता, स्तवन्, स्तवानः, स्तुतः, स्तुतवान्, स्तुतः, स्तुत्, स्तवकः, स्तावकः-नव प्रशंसके । स्तवनम्, स्तवनीयम्, स्तव्यम्, स्ताव्यम्, स्तुतिः, स्तुतम्, स्तोतव्यम्-षट् प्रशंसने ।

६४. ब्रूञ् व्यक्तायां वाचि—शुद्धे वाक्ये । ब्रूञादेरी तिसिमिपु—ब्रूञ् आदीनां धातूनाम् ईकारागमो भवति तिसिमि परतः । ब्रवीति, ब्रूते-

---

१. रूपं करोति निष्पादयति ।

२. अस्य सूत्रस्यात्र कावश्यकतेति न ज्ञायते । सम्भाव्यते ऊर्णुञ् धातौ उकारोऽप्य-नुबन्धः स्यात् काशकृत्स्नमते । तथा सति ऊर्णोति ऊर्णुते रूपसिद्धये उकारविकरणार्थं सूत्रं पठितम् । यथा भ्वादौ शुर्चा चुर्चा ( १।२३० ) इत्यादिषु धातुषु शुच्यति चुच्यतिरूप-प्रसिद्धये दिवादेर्यन् सूत्र पठितम् (पृष्ठ ३१) । अदादौ पाठादुविकरणः कदाचिन्नापि भवति तथासति ऊर्णौति इति रूपम् (अग्रिमा टिप्पणी द्र०) ।

३. अत्र ईकारागमः कथमिति न ज्ञायते । एवमुत्तरधातोः स्तवीते इत्यत्रापि । पाणिनी-यास्तु स्तुधातोः 'तुरुस्तुशम्यमः सार्वधातुके' ( ७।३।९२ ) इत्यनेन विकल्पेन ईडागमं विदधति स्तौति स्तवीति रूपप्रसिद्धये । तादृशेनैव केनचित् काशकृत्स्ननियमेनात्र भवितव्यम् । सत्यप्येवं परस्मैपदे कथमीकारवद् रूपं नोदाहृयतेऽत्रोचारश्च चेति न ज्ञायते ।

४. ष्टुञ् इति कातन्त्रा अन्ये च वैयाकरणाः ।

कथयति । ब्रुवन्, ब्रुवाणः, ब्रुवकः, ब्रवीता, ब्रूतः, ब्रूतवान्, ब्रूयमाणः—सप्त कथके । ब्रूतिः, ब्रूतम्, ब्रूतव्यम्, ब्रुवणम्, ब्रुवणीयम्, ब्रव्यम्, ब्राव्यम्—सप्त कथने ।

६५. [1]हु दानादानयोः—दाने ग्रहणे च । ह्वादेर्द्विः—हु-प्रभृतीनां द्विर्भवति । कवर्गहकारयोश्चवर्गः—कवर्गस्य हकारस्य च चवर्गादेशो भवति । पूर्वोऽभ्यासः—द्विर्भावे पूर्वोऽभ्याससंज्ञो भवति । द्वयमभ्यस्तम्—द्विर्भावे द्वितीयम्[2] अभ्यस्तसंज्ञं भवति । अभ्यासस्य धुटां तृतीयाः प्रथमाः—अभ्यासस्य धुटां (= अन्तस्थानुनासिकवर्जितानां व्यञ्जनानां[3] ) स्थाने तृतीयाः प्रथमाश्च भवन्ति । जुहोति जुहुते[4]—ददाति गृह्णाति च । होता, हवकः, हावकः, हवन्, हावनः, हुतः, हुतवान्—सप्त दातरि ग्रहीतरि च । हवनम्, हवनीयम्, हव्यम्, हाव्यम्, हविस्, हुतः, हुतिः—सप्त दाने आदाने च । आहवः—युद्धम् । हावः—मैथुनं संभ्रमः । हावुः—सर्पः ।

६६. ञिभी[5] भये—उद्वेगे[6] । ह्रस्वोऽभ्यासस्य—अभ्यासस्य ह्रस्वो भवति । बिभेति बिभीते[7]—उद्विजते । भीतः, भीतवान्, भेता, भयकः, भयन्, भयानः, भायी, भायुः—अष्टौ भीरौ । भीः, भीतिः, भीतम्, भीतव्यम्, भयनम्, भयनीयम्, भय्यम्, भाय्यम्, भयम्, भायम्—दश भये ।

६७. ह्री लज्जायाम्—त्रपायाम् । जिह्रेति—त्रपते । ह्रेता, ह्रीतः, ह्रीतवान्, ह्रयन्, ह्रयः, ह्रयकः, ह्रायः—सप्त त्रपमाणे । ह्रीः, ह्रीतिः, ह्रीतम्, ह्रेतव्यम्, ह्रय्यम्, ह्राय्यम्, ह्रयणम्, ह्रयणीयम्—अष्टौ लज्जने ।

६८. पॄ पालनपूरणयोः—रक्षायां भरणे च । अभ्यासस्य यृवर्णस्य[8]

---

१. अत्र 'हु' इत्येव शुद्धः पाठो द्रष्टव्यः, 'जुहुते' इत्यत्र ह्रस्वोकारस्य वृत्तिकृता निर्देशात् । कातन्त्रकारोऽपि 'हु' इत्येव पपाठ । अर्थनिर्देशे च 'दाने' इत्येव निर्दिदेश । पाणिनीयास्तदनुयायिनः केचनार्वाचीना वैयाकरणाश्च 'हु' इत्येवमादीन् पृथग्गणं पेठुः ।

२. 'द्वयम्' इत्यस्य द्वितीयमित्येवात्रार्थः । अयं चार्थः 'ऋ' (२।७२) धातुव्याख्याने 'अभ्यासाद् युरभ्यस्ते' इत्युद्ध्रियमाणे सूत्रे अभ्यस्तशब्दे सप्तमीनिर्देशात् प्रमाणीभवति । पाणिनीयास्तु पूर्वापरोभयस्याभ्यस्तसंज्ञामाहुः ।

३. तथा च कातन्त्रसूत्रम्—धुट् व्यञ्जनानन्तस्थानुनासिकानाम् (२।१।१३) इति ।

४. अत्र, उत्तरधातौ चात्मनेपदोदाहरणं चिन्त्यम् । भृञ्पर्यन्ता एवोभयपदिनः । स्पष्टं चैतत् कातन्त्रधातुपाठे ।

५. 'ञिभी' इति युक्तः पाठः, कातन्त्रेऽपि तथैव दृश्यते ।

६. ओविजी भयचलनयोः (५।११६) । ७. अत्राप्यात्मनेपदं चिन्त्यम् ।

८. अत्र 'ऋवर्णस्य' इत्येव युक्तः पाठः स्यात् ।

इकारम्—अभ्यासस्य ऋ ॠ वर्णस्य इकारो भवति। पिपर्त्ति—रक्षति भरति। पर्ता, पूर्तः, पूर्तवान्, परः, परकः, परन्—षट् रक्षके। परि-शुभम् (?)। पारि-याम (?)। परुष—वितस्तिः। परुत्—गतवर्षः। परारि—आगामिवर्षः। परुषम्—निष्ठुरम्। पुरु—शरीरम्। पुरम्, पुरी—नगरम्। पुरुषः, पूरुषः—मनुष्यः। पुर्यः, पौर्यः, पौरः—नगरवासी। ऋतेरीरूरौ—ऋकारस्य ईर् ऊर् आदेशौ भवतः। पूर्तिः, पूर्तम्, पूरणम्, पूरकम्, पूर्णम्, पूरितम्, पूर्यम्, पूरणीयम्, पूर्तव्यम्, पूरितव्यम्—दश भरणे। पूर्णिमा—शुक्लपक्षस्यान्त्या तिथिः। परा—अन्या। परः—अन्यः। पारम्—तटम्। पार्यम्, परतटे भवम्।

६९. ओहाक् त्यागे—जहाति—त्यजति[1]। जहन्, जहकः, हाता, हायकः, —चत्वारस्त्याजके। हाहाः-गायकः। हाहा—मूर्तिः क्रीडनकम्। हायनः—वर्षं। हायम्—चित्रम्। जहत्, जहनम्, जहनीयम्—त्रयस्त्यागे।

७०. घृ क्षरणदीप्त्योः—नाशे प्रकाशे च। जिघर्ति—नाशयति, प्रकाशते। जघरन्, जघरः, [1] जघर्ता [1], घृतः, घृतवान्, घरः, घारः—सप्त नाशके। घृतिः, घृतम्, घर्तव्यम्, घरणम्, घरणीयम्, घर्यम्, घार्यम्—सप्त नाशने। घर्घरः—शब्दानुकृतिः।

७१. हृ प्रसह्यकरणे—बलात्कारे। जहृति[2]—प्रसहते। जहर्ता, जहरः, जहरकः, जाहरः—चत्वारः प्रसाहके। जहरत्, जहरणम्, जहरणीयम्, जहर्तव्यम्, जहृतिः, जहृतम्—षट् बलात्कारे।

७२. ऋ सृ गतौ—अन्याद्युरभ्यस्ते (?, अभ्यासाद् युरभ्यस्ते)—अभ्यासात् [उत्तरं] 'यु' आगमो भवति अभ्यस्ते परतः। इयर्ति—गच्छति। अरत्, अरकः, अर्ता, ऋतः, ऋतवान्, अरः, आरः, अरकः, अर्यः, आर्यः—दशैते गन्तरि। अरणम्, आरणम्, अर्तव्यम्, अरणीयम्, ऋतिः, ऋतम्, ऋत्—सप्त चलने। आर्यावर्तः—पुण्यभूमिः। आर्या—गौरी। अर्यः—श्रेष्ठी। ऋतुः—फल-प्रदानकालः। अरम्—अर्धम्, शलम्। आरुः—योग्यो वृषभयुग्मः। अरुणः—वेदपुरुषः, सूर्यसारथी, रागः। अरणिः—अग्न्युत्पादको वृक्षः (काष्ठविशेषः), व्यासपत्नी। सिसर्ति—गच्छति। सर्ता, सरन्, सरकः, सृतवान्, सृतः, सरः—षट् गन्तरि। सृत्, सृतिः, सृतम्, सर्तव्यम्, सर्यम्, सार्यम्, सारम्, सरम्,

---

१. अत्र द्वित्वं कथमिति नोक्तं वृत्तिकृता।

२. जिहर्ति इति युक्तः पाठः स्यात् 'अभ्यासस्य ऋवर्णस्य इकारम्' इत्युक्तमतेन (द्र० २१६८ वृत्तिः पृ० १२९)।

सारि, सरणम्, सारणम्, सृत्यम्—द्वादश चलने। सरणिः—मार्गः। सरटः—गृहगोधा। सारणी—पक्षी।

७३. भस भर्त्सनदीप्त्योः—गालिप्रदाने प्रकाशे च। बभस्ति—गालिं ददाति। भसः, भासः, भसकः, भासकः, भस्तः, भस्ता, भसन्, भस्तवान्—अष्टौ गालिप्रदातरि। भस्तिः, भस्तम्, भस्तव्यम्, भसनम्, भसनीयम्, भस्यम्, भास्यम्,—सप्त अपशब्दने निन्दायां च।

७४. कित ज्ञाने—चिकेत्ति, चिकित्ति (?) चिकित्सति—जानाति। केतन्, केतकः, केतः, केत्ता, केत्तवान्, कित्तः, केत्यः, कैत्यः, कैतः, कित्, चिकित्सिन्, चिकित्सकः, चिकित्सुः—चतुर्दश—ज्ञातरि। केतुः—पताका, ग्रहः। केतः—केतक्याः पुष्पम् ('केवड़ा' इति भाषायाम्)। निकेतनम्—गृहम्। केती—ज्ञात्री। केतनम्, केतनीयम्, केत्यम्, कैत्यम्, केतव्यम्, कैतम्, कैतवम्—सप्त ज्ञाने। कितवः—धूर्तः, प्रमत्तः।

७५. तुर त्वरणे—शैघ्र्ये। तुतोर्ति—शैघ्र्यं करोति। तोरन्, तोरकः, तुर्तवान्[१], तुर्तिः, तोर्ता—पञ्च त्वरके। तुरी—कण्डूः। तुरुकः—यौद्धः। तोरणम्—तोरण इत्येव प्रसिद्धम्। तोरम्—स्थूलः। तुर्यम्, तौर्यम्, तौर्यत्रिकम्—त्रयो वाद्यशब्दे।

७६ घिप शब्दे—ध्वनौ। दिघेप्टि—शब्दयति। घिट्, घेपन्, घेप्टा, घेपकः, घिप्टवान्, घिप्टः—पट् शब्दयितरि। धिषणा—बुद्धिः। घिप्टिः, घिप्टम्, घेप्टव्यम्, घेप्यम्, घैप्यम्, घेपणम्, घेपणीयम्—सप्त शब्दने।

७७. धन धान्ये—अन्ने (?)। दधन्ति—धान्यं भवति। दधन्, धनकः, धन्यः, धन्ता, धनाढ्यः—पञ्च भाग्यवति। धनम्, धननम्, धननीयम्, धन्तिः, धन्तम्, धन्तव्यम्, धान्यम्, धानम्—अष्टौ भाग्ये (?)।

७८. जन जनने—प्रसवे। जजन्ति—प्रसूते। जनिता, जनन्, जनितवान्, जन्तः, जन्यः[२], जान्यः, जनकः, जनयिता, जानः[२]—नव उत्पादयितरि। जनकः—एतनामा राजविशेषः। जानकी—सीता। जननी, जनयित्री, जनित्री—

---

१. शैघ्र्यार्थकं लोके प्रसिद्धं 'तुर्त' इति पदम् तुरधातोरेव क्तान्तं शुद्धं रूपं ज्ञेयम्। अयमेव च 'तुरत' इति रूपान्तरं लेभे।

२. जनीं वधूं वहति जन्यो वरः पतिः। (संज्ञायां जन्याः—अष्टा० ४।४।८२)। स एव 'जानः', अपत्योत्पादकः। तस्मादनयोरेव वैवाहिककर्मणि समवेतानां समूहोऽपि राजस्थान-भाषायां 'जान' इत्युच्यते।

त्रयो जन्मदात्र्याम् । जननम् , जननीयम् , जनितव्यम् , जनिः, जन्तिः, जन्तम् , जन्मन्–उत्पादने । जन्तुः–जीवः ।

७९. णिजिर् शौचशोषणयोः[1]—शीले, शुष्कीभावे च । नेनेक्ति नेनिक्ते[2]–दुःखितो भवति, शुष्यति । नेक्ता, निक्तः, निक्तवान् , नेजन् , नेजानः, निजः, नेजनः–षट् शीलयति । नेजनम् , नेक्तव्यम् , नेजनीयम्, नेज्यम्, नैज्यम्, नैजम् , निक्तिः, निक्तम्–अष्टौ शीले ।

८०. विजिर् पृथग्भावे—भिन्नतायाम् । वेवेक्ति, वेविङ्क्ते ( ?, वेविक्ते )–पृथग्भवति । वेक्ता, वेजन् , वेजकः, विक्तवान्–चत्वारः पृथग्भवितरि । विक्तः, विक्तम् , वेक्तव्यम् , वेजनम्, वेजनीयम्, वेज्यम्, वैज्यम् , वैजम् , विक् , विजम्, विजिः–एकादश पृथग्भावे ।

८१. विपृ[3] व्याप्तौ—व्यापने आवरणे । वेवेष्टि, वेवीष्टे ( ?, वेविष्टे ) व्याप्नोति, आवृणोति । विष्णुः–नारायणः । वेष्टा, विष्टवान् , विष्टः, वेपन् , वेपकः–पञ्च व्यापके । वेपः, वेपणम् , वेपणीयम् , वेप्यम् , वैप्यम् , वेष्टव्यम् , विष्टिः, विष्टम्–अष्टौ आवरणे । विषम्–जलम्[4], हालाहलम् । विषयम्–आवरणम् । विषयः–देशः । आविष्टलिङ्गम्[5]–आवृतचिह्नम् ।

८२. डुदाञ् दाने—ददाति, दत्ते–दानं करोति । दाता, दायन् , दायमानः, दापकः–दाता । दानम् , दापनीयम् , दातव्यम् , दायम्–[एते चत्वारो] दाने ।

८३. डुधाञ् डुभृञ् धारणपोषणयोः—सहने रक्षणे च । दधाति धत्ते–सहते । धाता, विधाता–ब्रह्म । धायन् , धायमानः, धायकः–सोढा ( धर्ता ) । धानम् , धायम् , धापनम् , धापनीयम् , धातव्यम्–सहने । बिभर्त्ति, बिभृते–सहते । भर्ता–पोषकः । भृत् , बिभ्राणः, बिभ्रन् , भृतवान् , भृतः, भरकः, भारकः, भारी–अष्टौ पोषके । भरणम् , भरणीयम् , भर्तव्यम् , भृतिः, भृतम्–पञ्च रक्षणे । विश्वम्भरः–विष्णुः । विश्वम्भरा-भूमिः । भारम्–गुरुत्वम् । भार्या–पत्नी । भृत्यः–सेवकः ।

---

१. 'निजिर् शौचपोषणयोः' इति कातन्त्राः ।

२. 'नेनिक्ते' इति साधु । एवमुत्तरसूत्रयोरपि द्रष्टव्यम् ।

३. 'विप्लृ' इति कातन्त्रे पाठः ।

४. जलार्थको विषशब्दो वेदे प्रयुज्यते । द्र० निघण्टुः–१।१२॥ प्राच्यभाषायां या गौः जलमयं पुरीषं करोति सा 'विसैली' इत्युच्यते ।

५. 'आविष्टलिङ्गा जातिर्यल्लिङ्गमुपादाय प्रवर्तते उत्पत्तिप्रभृत्याऽऽविनाशान्न तं लिङ्गं जहाति' इति महाभाष्यवचनम् ( १।२।५२ ) अत्र द्रष्टव्यम् ।

८४. माङ् माने शब्दे च–मापने शब्दे च । मीमांसते–परिमाययति (?) । माता–अम्बा । प्रमाता–मानकर्त्री । मायकः, मापकः, मायमानः, मितवान्–चत्वारः प्रमातरि । मितिः, मितम्, मातव्यम्, मायम्, मानम्, मापनीयम्–षट् मापने । मायाः मायविनी ( ? ) ।

८५. ओहाङ् गतौ—जिहीते–गच्छति । हाता, हायमानः, हायकः, हितः, हितवान्–पञ्च गन्तरि । हितिः हितम्, हेतव्यम्, हायनम्, हायनीयम्, हायम्–षट् गमने ।

[ इति लुग्विकरणोऽदादिः समाप्तः ]

# अथ दिवादि-गणः

## [ यन्-विकरणः ]

१. दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु—क्रीडने, विजये, युद्धे, अस्थैर्ये, प्रशंसायाम्, मदे, स्वप्ने, प्रकाशे, चलने च। दिवादेर्यन्—दिवादिभ्यो धातुभ्यो यन् विकरणो भवति। यनि दीर्घश्च—दिवादौ यनि परे दीर्घो भवति। दीव्यति—क्रीडति। देवः—स्वामी। देवी—स्वामिनी। दीव्यन्—प्रकाशकः। दीव्यती—प्रकाशयित्री। देवनम्, देवनीयम्, देव्यम्—त्रयः क्रीडायाम्। दैवम्, दैवः—अदृष्टम्। दिव्यम्—प्रार्थना। देवता—शक्तिः। दिवा—अहः। दिवसम्—दिनम्। देविका, देविकम्—देवप्रकाशः (?)।

२. षिवु तन्तुसन्ताने—तन्तूनां संयोजने। सीव्यति—तन्तून् संयोजयति। सीव्यन्, सेवः, सेवकः, सेविता, सेवितवान्—पञ्च तन्तुसंयोजके ('दरजी' इति भाषायाम्)। सेवनम्, सेवनीयम्, सेव्यम्, सैव्यम्, सैवम्, सेवा, सेवितव्यम्, सेवितम्—अष्टौ कार्ये। सेवका, सेवन्तिका, सेवन्ति—सेवन्तिपुष्पम्। सेवाला—(?)। सेविनी—क्षीवनम् (छींकना इति भाषायाम्)।

३. स्रिवु गतिशोषणयोः—स्रीव्यति—गच्छति, शुष्यति। स्रीव्यन्, स्रेवः, स्रेवकः, स्रेवितः, स्रेवितवान्, स्रेविता—षट् गन्तरि, शोषितरि। स्रेवणम्, स्रेवणीयम्, स्रेव्यम्, स्रैव्यम्, स्रेवा, स्रेवितव्यम्, स्रेवितम्, स्रेवितिः—अष्टौ चलने शोषणे।

४. ष्ठिवु[1], क्षिवु निरसने—निस्सारणे। ष्टीव्यति—निरस्यति। ष्टीव्यन्, ष्टवः[2], ष्टवकः,[2] ष्टवितः,[2] ष्टवितवान्[2]—पञ्च निरसितरि। ष्टेवनम्, ष्टेवनीयम्, ष्टेवितव्यम्—निरसनम्। क्षीव्यति—निरस्यति। क्षीव्यन्, क्षेवः, क्षेवकः, क्षेवितः, क्षेवितवान्, क्षेविता—षट् निरसितरि। क्षेवणम्, क्षेवणीयम्, क्षेवितव्यम्, क्षेवितम्, क्षेवितिः—पञ्च निरसने।

---

१. 'ष्ठिवु' इति शुद्धः पाठः (तथैवोदाहरणेष्वपि टकारस्थाने ठकारो द्रष्टव्यः)। कातन्त्रेऽपि 'ष्ठिवु' इत्येव पठ्यते।

२. अत्र सर्वत्र पाठाशुद्धिर्वर्तते। 'ष्टेव' इत्येवं सर्वत्र एकारवान् पाठो द्रष्टव्यः।

५. ष्णुसु अदने—भक्षणे । स्नुस्यति–खादति । स्नुस्यत्, स्नोसः, स्नोसकः, स्नोसितः, स्नोसिता, स्नोसितवान्–षट् भक्षितरि । स्नुषा[1]–पुत्रवधूः । स्नोषणम्[1], स्नोषणीयम्[1], स्नोषितव्यम्[1], स्नोषितम्[1], स्नोषितिः[1]–पञ्च खादने ।

६. क्नुसु ह्वरणदीप्त्योः—द्योतने प्रकाशने । क्नुस्यति–द्योतते, प्रकाशते । क्नुस्यन्, क्नोसः, क्नोसकः, क्नोसितः, क्नोसितवान्, क्नोसिता–षट् द्योतके, प्रकाशके । क्नुसिः, क्नुसा, क्नोस्यम्, क्नोसनम्, क्नोसनीयम्, क्नोसितव्यम्, क्नोसितम्, क्नोसितिः–षट् ( ?, अष्टौ ) द्योतने ।

७. नृती गात्रविक्षेपे—नृत्ये । नृत्यति–नर्तनं करोति । नृत्यन्, नृत्तः, नृत्तवान्–त्रयो नर्तके । नृत्तम्, नृत्तिः, नृत्यम्–त्रयो वर्तने ।

८. त्रसी उद्वेगे—घर्मे वेगे । त्रस्यति–उद्विजति । त्रस्यन्, त्रस्यकः, त्रस्तः, त्रस्तवान्–चत्वार उद्वेजितरि । त्रस्तिः, त्रस्तम्, त्रस्तव्यम्, त्रसनम्, त्रसनीयम्, त्रस्यम्, त्रास्यम्–सप्त वेगे । त्रासः, त्रासुः–तुला ।

९. कुथ पूतीभावे—दुर्गन्धे । कुथ्यति–दुर्गन्धयुक्तो भवति । कुथ्यन्, कोथः, कोथिकः, कोथितः, कोथितवान्–पञ्च दुर्गन्धयुक्ते । कुथिः, कुथ्यः, कोथनम्, कोथनीयम्, कोथितव्यम्, कोथिः, कोथितम्– सप्त दुर्गन्धे ।

१०. पुथ हिंसायाम्—मारणे । पुथ्यति–हिनस्ति । पुथ्यन्, पोथिकः, पोथिः, पोथितः, पोथितवान्, पौथ्यम्–षट् घातके । पुथिः, पुथ्या, पोथनम्, पोथनीयम्, पोथितव्यम्, पोथितम्–सप्त हिंसायाम् ।

११. गुध परिवेष्टने—गुध्यति–वेष्टयति । गुध्यन्, गोधः, गोधकः–त्रयो वेष्टके । गोधा, गोधिका–फलविशेषः । गृहगोधिका–सरट । गुध्या, गोधनम्, गोधनीयम्, गोध्यम्, गोधितव्यम्, गुद्धिः, गुद्धम्–सप्त वेष्टने ।

१२. क्षिप प्रेरणे–रक्षणे (?) । क्षिप्यति–रक्षति ( रखता है ?., प्रेरयति ) । क्षिप्यन, क्षेपकः, क्षेप्ता, क्षिप्तः–रक्षकः ( ?, प्रेरयिता ) । आक्षेपकः–शङ्किता । क्षेपः, क्षेपणीयम्, क्षिप्तव्यम्[2], क्षिप्तिः, क्षिप्तम्–पद् रक्षणे ( ?, क्षेपणे ) । क्षेपणी–( नौवाहनदण्डम् )

१३ पुष्प विकसने—पुष्प्यति–विकसति । पुष्प्यन्, पुष्पितम्, पुष्पितवान्, पुष्पितः–चत्वारो विकसितरि । पुष्पकम्–विमानम् । पुष्पम्–कुसुमम् ।

---

१. अत्र पत्वं कथमिति नोक्तं वृत्तिकृता ।
२. गुणाभावः कथमिति नोक्तम् ।

पुष्पिणी–रजस्वला । पुष्पवती–पुष्पयुता लता । पुष्पितम्, पुष्पितव्यम्, पुष्पणम्, पुष्पणीयम्–चत्वारो विकसने ।

१४. तिम ष्टिम ष्टीम आर्द्रभावे—आमे अपक्के (?, सजले) । तिम्यति–आर्द्रीभवति । तिमिः, तिमिङ्गिलः [–मत्स्यविशेषः] । तिम्यन्, तिमिता, तिमितवान्, टेमकः–चत्वारोऽपक्के (?, सजले) । तेमः, तेमनम्, तेमनीयम्, तिमितव्यम्, तिमितम्, तिमितिः–षट् आर्द्रे । स्तिम्यति–आर्द्रं करोति । स्तिम्यन्, स्तिमिता, स्तिमितः, स्तिमितवान्[१]–आर्द्रकर्तरि, चोपके (चुप होने वाले में) । स्तिमितम्, स्तिमितव्यम्[१], स्तिमितिः, स्तिमनीयम्[१]–चत्वार आर्द्रकरणे मौने । स्तीम्नति–स्रवति । स्तीम्यन्, स्तीमिता, [१]स्तीमितवान्, स्तीमितः–चत्वारः स्रावके । स्तीमितव्यम्, स्तीमनम्, स्तीमनीयम्, स्तीमितम्, स्तीमितिः–पञ्च स्रोतसि ।

१५. व्रीड चोदने लज्जायां च—प्रेरणे लज्जने च । व्रीड्यति–प्रेरयति लज्जते । व्रीड्यन्, व्रीडितः, व्रीडितवान्, व्रीडिता, व्रीडकः–पञ्च लज्जके । व्रीडा, व्रीडनम्, व्रीडनीयम्, व्रीडितम्, व्रीडितव्यम्–[पञ्च] लज्जने ।

१६. इष गतौ—इष्यति–गच्छति । इष्यन्, इष्टः, इष्टवान्, एष्टा, एषकः–पञ्च गन्तरि । इष्यम्, एषणम्, एष्टव्यम्, इष्टम्, इष्टिः, एषः, एष्यः, एषणीयम्–अष्टौ गमने ।

१७. षप षह षुह शक्तौ—सामर्थ्ये । सप्यित[२]–गणयति । षट्–संख्या विशेषः । षट्, षपः, षपकः, षप्तः, षप्तवान्, षप्ता–षट् गणके । षपणम्, षप्यम्, षप्तव्यम्–त्रयः शक्तौ । षष्टिः–षट्दशकः ('साठ' इति भाषायाम्) । सह्यति–सहते । सह्यः–एतन्नामाऽद्रिविशेषः । तुराषाट्–इन्द्रः । सह–सहितम् । सह्यन्, सोढा, सहकः, सहितः, सहितवान्–पञ्च सहनशीले । सहनम्, सहनीयम्, सहितव्यम्, सहितम्, सहितिः, सही, साह्यम्, साहम्–अष्टौ सहने । सुह्यति–(तृप्यति, समर्थयति) । सोह्यन्, सोहः, सोहकः, सोढी, सोढा–पञ्च (तर्पके, समर्थे) । सोहनम्, सोहनीयम्, सोह्यम्, सौह्यम्, सौहम्, सोहितव्यम्, सोहितिः, सोहितम्, सोढः, सुण्डी (?)–दश (तर्पणे सामर्थ्ये) ।

---

१. गुणाभावः कथमिति नोक्तम् ।

२. षपादेः षकारस्य सत्वं निर्दिश्यते, उत्तरत्र कृदन्तेषु सर्वत्रैव मूर्धन्यादिरूपाण्येवोदाहरति वृत्तिकारः । किमत्राख्यातरूपेऽपि 'षप्यति' इति रूपं युक्तं स्यात् ?

१८. जृष् झृष्[1] वयोहानौ—वयःक्षये । ऋ ईर्येनि कृति च—ऋकारस्य ईर्भवति यनि कृति च परतः । जीर्यति—जीर्णो भवति । जीर्णः, जीर्णवान्, जरन्, जरठः, जर्ता—पञ्च वृद्धे । जरकः—जरासन्धनामा कृष्णेन हतः पुरुषः । जरा, जरणम्, जरणीयम्, जर्यम्, जारम्, जर्तव्यम्, जर्तम्, जर्तिः, जरिः, जनः—दश वृद्धत्वे । जारः, जार्, जिरिः—( जरयिता ) । कीर्यति—विक्षिपति ( छिड़कता है ) । कीर्णः, कीर्णवान्, किरन्, कर्ता—चत्वारो विक्षेपके । करः—हस्तम् । करभम्—करतलम् । करी—हस्ती । करेणुः—हस्तिनी । करटः—काकः, राक्षसः । कारा—वृक्षमध्यम्, संकरः—मिश्रितः, वर्णसंकरः ।

१९. शो तनूकरणे—लघुत्वे । श्यति—लघु करोति । ओलोपो यनि—ओकारस्य लोपो भवति यनि परतः । शोः, शाता, शितवान्, शितः, शायन्[2], शापकः—तनूकर्तरि । शितिः, शितम्, शापनम्, शापनीयम्, शाप्यम्, शापम्, शैतव्यम् ( ? )—षट् लघुत्वे । शातनम्—( ? ) । शातकुम्भम्—सुवर्णम् ।

२०. छो छेदने—छ्यति—छिनत्ति । छोः, छायः, छायकः, छायन्, छायिता, छितः, छितवान्—सप्त खण्डितरि छेत्तरि । छाया—विश्वकर्मणः पुत्री, शनैश्चरस्य माता छाया देवी, छाया । छायनम्, छायनीयम्, छितिः, छितुः—चत्वारः खण्डने ।

२१. षो अन्तकर्मणि—स्यति—समापयति । सोः—गौरी । सायः, सायिता, सितः, सितवान्, सायन्—पञ्च कर्मसमापके । सायकम्, सायम्—दिवसावसानम् । सायनम्, सायनीयम्, सायितव्यम्—कर्म समापने ।

२२. दो अवखण्डने—द्यति—अवखण्डयति । दाता—ददिता (दानकर्ता) । दायन्, दायकः, दितः, दितवान्—चत्वारोऽवखण्डितरि । दानम्, दापनीयम्, दातव्यम्, दितम्—चत्वारः खण्डने । दितिः—दक्षपुत्री, कश्यपपत्नी, राक्षसमाता ।

२३. राध साध संसिद्धौ—निर्णये । राध्यति—निर्णयति । राद्धा, राधकः, राद्धवान्, राद्धः—चत्वारो निर्णायके । आराध्यः—गुरुः । राधनम्, राधनीयम्, राद्धव्यम्—[त्रयो] निर्णये । साध्यति—निर्णयति । साद्धा, साधन्, साधकः, साद्धः, साधवान् (?)—[पञ्च] निर्णायके । साधनम्, साधम्—द्वौ निर्णये । साध्यम्, साधनीयम्—निर्णेतुं योग्ये । साद्धिः, साद्धम्, साद्धव्यम्—त्रयो भये ।

---

१. झृष इति कातन्त्रपाठः । अन्येऽप्येवमेवाहुः । कलापवृत्तिकारस्तु कृष् इति पठित्वा कीर्यति विक्षिपति इत्यर्थमाह ।

२. इह उत्तरत्र छायन् सायन् दायन् आदिषु यनि ओलोपः कथं न ?

२४. [1]व्यध ताडने—व्यध्यति–ताडयति । व्याधः–हिंसकः । व्याधिः–पीडा । व्यद्धा, व्यद्धः, व्यधकः, व्यधन्,[2] व्यधवान्–पञ्च ताडयितरि । व्यधनम्, व्यधनीयम्, व्यध्यम्, व्याध्यम्, व्याद्धम्, व्याद्धिः–षट् ताडने ।

२५. पुष पुष्टौ—पालने । पुष्यति–पालयति । पोषन्, पोषकः, पोष्टा, पुष्टः–पालयिता । पूषन्–सूर्यः । पुष्यम्–नक्षत्रविशेषः । पुष्यरागः–रत्नविशेषः । पौषः–पुष्ययुक्तः कालः । पौषी–पुष्ययुक्ता रात्रिः । पौषणम्,[3] पौषणीयम्,[3] पुष्टम्, पुष्टिः, पोष्यम्, पौष्यम्, पोषितव्यम्–सप्त पालने ।

२६. शुष शोषणे—शुष्यति–शोषयति । शोष्टा, शोषन्, शोषकः–त्रयः शोषके । शोषणम्, शोषणीयम्, शोषितव्यम्, शुष्कम्, शोष्यम्, शौष्यम्–षट् शुष्कीभावे ।

२७. दुष वैकृत्ये—दुष्कृत्ये । दुष्यति–वैकृत्यं करोति । दोष्टा, दोषन्, दोषकः, दुष्टः, दुष्टवान्–पञ्च दुष्टे । दुष्टम्, दुष्टिः, दोषम्, दोष्यम्, दौष्यम्, दूषणम्, दूष्यम्–चत्वारः ( ?, सप्त ) दूषणे ।

२८. श्लिष आलिङ्गने—श्लिष्यति–आलिङ्गति । श्लेषन्, श्लेषकः, श्लिष्टः, श्लिष्टवान्, श्लेष्टा–पञ्च आलिङ्गके । श्लिष्टम्, श्लिष्टिः, श्लेषितव्यम्, श्लेष्यम्, श्लैष्यम्, श्लेषः, श्लिट्, श्लेषणीयम्–अष्टावालिङ्गने ।

२९. ञिष्विदा[4] गात्रप्रक्षरणे—घर्मजले ( पसीना आने में ) । स्विद्यति–गात्रेभ्यो जलं प्रक्षरति । स्विन्नः, स्विन्नवान्, स्वेदन्, स्वेदकः, स्वेदा–पञ्च स्वेदितरि । स्विन्नः, स्विन्नवान्, स्वेदन्, स्वेदकः, स्वेदितः–पञ्च स्वेदितरि । स्विन्नम्, स्वेदः, स्वेद्यम्, स्वैद्यम्, स्वेदितव्यम्–पञ्च गात्रप्रक्षरणे ।

३०. क्षुध बुभुक्षायाम्—क्षुध्यति–बुभुक्षति । क्षोद्धा, क्षोधकः, क्षुद्धः क्षुद्धवान्–चत्वारः क्षुधिते । क्षुत्, क्षुधा, क्षुद्धम्, क्षुद्धिः, क्षोधितव्यम्, क्षोधनम्, क्षोधनीयम्, क्षोध्यम्, क्षौध्यम्, क्षोधम्–दश बुभुक्षायाम् ।

३१. शुध शौचे—पवने । शुध्यति–शुचिर्भवति । शुद्धः, शुद्धवान्, शोधकः,

---

१. इतः पूर्वं कातन्त्रधातुपाठे 'मृग अन्वेषणे' इति धातुः पठ्यते । कदाचिदत्र पाठो नष्टः स्यात् । अत्र धातुवृत्तिः सायणीया-दिवादिगणान्ता द्रष्टव्या ।

२. इत आरभ्य शत्रन्तरूपनिर्देशे यनन्त (श्यनन्त) रूपाणां स्थाने अनन्त (शबन्त) रूपाणि उदाहरति वृत्तिकारः । तत्कथमिति न विद्मः ।

३. वृद्धिः कथम्, गुण इष्यते ।

४. ष्विदा इति कातन्त्रा अन्ये च वैयाकरणाः ।

शोद्धा—चत्वारो मार्जके शुचिकर्तरि । शुत् , शुधा, शुद्धम् , शुद्धिः, शोधितव्यम् , शोधनम् , शोधनीयम्—सप्त शुचिकर्मणि । शुद्धा-पवित्रा स्त्री ।

३२. षिध संराद्धौ—निश्चये । सिध्यति—निश्चितं भवति । सेद्धा, सेधकः, सिद्धः, सिद्धवान्—चत्वारो निश्चयवति । सित् , सिधा, सिद्धम् , सिद्धिः, सेधनम् , सेधनीयम् , सेध्यम् , सैध्यम् , सैधम्—नव निश्चये । निषेधः, प्रतिषेधः, विप्रतिषेधः—त्रयोऽनृते ? ( निश्चयविपरीते ) ।

३३. रध हिंसायाम्—रध्यति—हिनस्ति । रधम् , रद्धा, रधकः, रद्धः, रद्धवान्—पञ्च घातके । रत् , रधा, रद्धम् , रद्धिः, रधनम् , रधनीयम् , रध्यम् , राध्यम्—अष्टौ हिंसायाम् । राधा—एतन्नाम्नी स्त्री ।

३४. तृप प्रीणने—शान्तीभावे । तृप्यति—शान्तो भवति । तर्सा, तृप्तः, तृप्तवान् , तर्पन् , तर्पकः—पञ्च शान्तभावुके, तृप्ते । तृप् , तृप्तम्, तृप्तिः, तर्पणम् , तर्पणीयम् , तर्प्यम् , तार्प्यम् , तार्पम्—अष्टौ शान्तकरणे ।

३५. दृप प्रहर्षणे विमोचने च—सन्तोषे मुक्तौ च । दृप्यति—संतुष्टो भवति । दृप्ता, दृप्तः, दृप्तवान्—त्रयः सन्तुष्टे । दर्पकः—मन्मथः । दृपदः—सुखम् , राजा[1], देशः । द्रौपदी—[2]द्रुपदपुत्री । दृप्तम् , दृप्तिः, दर्पणम्, दर्पणीयम्, दर्पितव्यम् , दर्पितम् , दर्प्यम् , दार्प्यम्—अष्टा आनन्दे मोचने च ।

३६. मुह वैचित्त्ये—विस्मरणे । मुह्यति—विस्मरति । मूढः, मूढवान् , मोढा, मोहन् , मोहकः—पञ्च विस्मारके । मूढम् , मूढिः, मोहः, मोहनम् , मोहनीयम् , मोह्यम् , मौह्यम् , मुट्—अष्टौ विस्मरणे ।

३७. द्रुह[3] जिघांसायाम्—हिंसने । द्रुह्यति—मारयति । द्रुक् , द्रुग् , द्रुट् , द्रुड् , द्रोही, द्रोहकः, द्रोहन्—सप्त घातके । द्रोहः, द्रोहणम् , द्रोहणीयम्—त्रयो हिंसने ।

३८. ष्णुह उद्गिरणे—वमने । स्नुह्यति—वमति । स्नुक् , स्नुग् , स्नुट् , स्नुड् , स्नोहकः, स्नोही, स्नोहन्—सप्त वामके । स्नुह्दिः—(?) । स्नोहः, स्नोहनम् , स्नोहनीयम्—[ त्रयो ] वमने ।

---

१. राज्ञो नाम द्रुपद इति प्रसिद्धम्, न दृपदः । दक्षिणात्यानां 'दृ' इत्यस्य 'द्रु' रूपोच्चारणात् भ्रान्तो वृत्तिकारः स्यात् । अत एवाग्रेऽप्रासङ्गिकं 'द्रौपदी' पदमप्युदाजहार ।

२. नैतत् पदं दृपधातोः सिद्ध्यति । पूर्वा टिप्पणी द्रष्टव्या ।

३. 'द्रुह' इति शुद्धः पाठः । कातन्त्रेऽप्येवमेव । एवमुत्तरत्रापि द्रुह्यति द्रुक् द्रुग् द्रुट् द्रुड् इति शुद्धः पाठो ज्ञेयः । इहापि उच्चारणदोषाद् 'द्रुह' इत्यस्य 'दृह' इत्यजायत ।

३९. ष्णिह प्रीतौ—स्निह्यति–प्रीतिं करोति। स्निक्, स्निग्, स्निट्, स्निड्, स्नेही, स्नेहकः, स्नेहिता, स्नेहितवान्, स्नेहनीयम्, स्नेहितम्, स्नेहितिः, स्नेहः–प्रीतिः, प्रेम, तैलम्। स्नेहनम्, स्नेहनीयम्, स्नेहितम्, स्नेहितिः, स्नेहितव्यम्, स्नेह्यम्, स्नैह्यम्–सप्त प्रीतौ।

४०. णश अदर्शने—अदृश्यभावे। नश्यति–अदृष्टं भवति। नष्टा, नष्टः, नशन्, नाशकः—चत्वारोऽदर्शके। नष्टम्, नष्टिः, नाशः, नश्यः, नाश्यः, नष्टव्यम्–[ षट् ] अदर्शने।

४१. शमु दमु उपशमे—सहने। शमादेर्दीर्घो यनि–शमादीनां धातूनां दीर्घो भवति यनि परतः। शाम्यति–सहते। शमन्, शमिता, शमितः, शमितवान्, शमी, शमकः–षट् सोढरि। शमनम्, शमनीयम्, शमितव्यम्, शमितिः, शमितम्, शम्यम्, शाम्यम्, शमः–अष्टौ सहने। शामः–श्यामवर्णः। शामा, शामाका–'अरोई' नाम्ना प्रसिद्धम्। शामाकः–धान्यविशेषः। शमनः–यवः। शमी–वृक्षविशेषः ('जण्ड–खेजड़ा' आदिनामभिः प्रसिद्धः)। शम्–सुखम्। शान्तः–शान्तवान्। शान्तिः–शमनम्। दाम्यति–दयते (दयां करोति)। दमी, दमन्, दमिता, दमितः, दान्तः, दमितवान्–षट् दयालौ। दान्तिः, दमनीयम्, दमितम्, दमितव्यम्, दम्यम्–षट् दयायाम्। दमनः–योगिन एकस्य नाम। दामन्–रश्मिः ('लगाम की रस्सी' इति भाषायाम्)।

४२. तमु काङ्क्षायाम्—इच्छायाम्। ताम्यति–इच्छति। तमन्, तान्तः, तमितः, तमितवान्, तमिता, तमकः, तमी, तामः–नव इच्छुके। तमिस्, तमिस्रम्–रात्रिः। तमनम्, तम्यम्, ताम्यम्, तामसम्–पञ्चैषणे।

४३. श्रमु तपसि खेदे च—देहदण्डने दुःखे च। श्राम्यति–कष्टं सहते, दुःखितो भवति। श्रान्तः, श्रान्तवान्, श्रान्ता, श्रमन्, श्रमकः–पञ्च श्रमकर्तरि। श्रमः, श्रान्तिः, श्रान्तम्, श्रान्तव्यम्, श्रमणम्, श्रमणीयम्, श्रम्यम्, श्राम्यम्, श्रामम्–नव तपसि दुःखे च। श्रमणः–तपस्वी।

४४. भ्रमु अनवस्थाने—भ्रमणे। भ्राम्यति–नैकत्र स्थिरो भवति। भ्रमन्, भ्रमकः, भ्रान्तः, भ्रान्ता, भ्रान्तवान्, भ्रमी,–व्रजनशीलः ('घुमक्कड़' इति भाषायाम्)। भ्रमरः–द्विरेफः ('भंवरा' इति भाषायाम्), राक्षसः। भ्रमरा–श्रीशैलमल्लिकार्जुनस्य पत्नी। भ्रमरकः–लघुबालः। भ्रान्तिः, भ्रान्तम्, भ्रान्तव्यम्, भ्रमणम्, भ्रमणीयम्, भ्रमः, भ्रम्यम्, भ्राम्यम्, भ्रामम्–नव भ्रमणे।

४५. क्षमूष् सहने—क्षाम्यति–सहते। क्षमन्, क्षान्तः, क्षान्तवान्, क्षमी, क्षामकः, क्षान्ता–षट् सोढरि, सहनशीले। क्षमा–भूमिः, सहनम्। क्षामम्–सहनम्। क्षान्तिः, क्षान्तम्, क्षमणम्, क्षमणीयम्, क्षन्तव्यम्,–पञ्च सहनकर्मणि।

४६. क्लमु ग्लानौ—क्लाम्यति–ग्लायति। क्लान्तः, क्लान्तवान्, क्लमन्–त्रयो ग्लायके। क्लान्तम्, क्लान्तिः, क्लमनम्, क्लमनीयम्, क्लन्तव्यम्–पञ्च ग्लाने।

४७. मदी हर्षे—माद्यति–हृष्टो भवति। मत्तः, मत्तवान्, मत्ता, मदन्, मादकः–पञ्च सन्तुष्टे[१]। मदनः–मन्मथः। मदनिकः–वरः ( 'दूल्हा' भाषायाम् )। मत्, मदम्, मदनीयम्, मत्तव्यम्, मत्तम्–पञ्च सन्तोषे। मत्तिः–वृक्षः, मदः। मद्यम्–सुरासवम्। मन्मथः–कामः। मादेश्वरः–शिवशरणः। मादी–स्थूलशरीरिणी।

४८. असु क्षेपणे—रक्षणे स्थापने (?)। अस्यति–क्षिपति। असन्, अस्तः, अस्तवान्, अस्ता–चत्वारः क्षेपके। अस्तम्, अस्तिः, अस्तव्यम्, असनम्, असनीयम्, अस्यम्–षट् क्षेपणे रक्षणे।

४९. यसु प्रयत्ने—यस्यति–प्रयतते। यस्तः, यस्तवान्, यसन्, यस्ता, यसकः–पञ्च प्रयतितरि। यस्तम्, यस्तिः, यस्तव्यम्, यस्यम्, यास्यम्, यसम्, यासम्–सप्त प्रयतने।

५०. जसु मोक्षणे—त्यागे। जस्यति–त्यजति। जस्तः, जस्तवान्, जसन्, जस्ता–चत्वारो मोचके ( त्यजके )। जसम्, जासम्, जस्तम्, जस्तिः, जस्तव्यम्, जसनम्, जसनीयम्, जस्यम्, जास्यम्–नव त्यागे।

५१. तसु दसु उपक्षये—रक्षणे स्थापने। तस्यति–रक्षति। तस्तः, तस्तवान्, तस्ता, तसकः, तसन्–पञ्च रक्षके। तसनम्, तसनीयम्, तस्तव्यम्, तस्यम्, तास्यम्, तसम्, तासम्–[ सप्त ] रक्षणे। दस्यति–रक्षति। दस्तः दस्तवान्, दसन्, दसकः, दस्ता–पञ्च रक्षके। दसनम्, दसनीयम्, दस्तव्यम्, दस्तिः, दस्तम्, दसम्, दासम्, दस्यम्, दास्यम्–नव रक्षणे। दसिः–शल्मम्।

५२. वसु स्तम्भे—स्थितौ। वस्यति–तिष्ठति ( खड़ा होता है )। वसन्, वसकः, वस्तम् (?), वस्तवान्, वस्ता–पञ्च स्थितिकर्तरि। वसनम्, वस्तम्, वस्तिः, वसनीयम्, वसम्, वासम्, वस्यम्, वास्यम्–अष्टौ स्तम्भने। वसुः–देव-

---

१. सन्तुष्टः सदा हृष्टो भवति, अतः हर्षेऽर्थे सन्तुष्टशब्दः प्रयुक्तो वृत्तिकारेण।

विशेषः । वासुः—गृहस्य महत् स्तम्भम् । वास्तु—गृहाधिदेवता । वस्तु—द्रव्यम् । वस्ति—गृहम्, तन्यूनाम्ना प्रसिद्धम् । वासुकिः—शेषनागः ।

५३. पुष[1] विभागे—पुष्यति—विभजति । पुट्, पुष्टः, पुष्टवान्, पोषन्, पोपकः—पञ्च विभाजके । पुष्टम्, पुष्टिः, पोषणम्, पोषणीयम्—चत्वारो विभजने ।

५४. प्लुष दाहे—प्लुष्यति—दहति । प्लुट्, प्लोषन्, प्लोपकः, प्लुष्टः, प्लुष्टवान्—पञ्च दाहके । प्लुष्टम्, प्लुष्टिः, प्लोषणम्, प्लोषणीयम्—चत्वारो दहने ।

५५. विश[2] प्रेरणे—विश्यति—सूचयति । विट्, वैश्यः—धनिकः । वेशः, वेशनम्, वेशनीयम्, विष्टिः, विष्टम्—पञ्च सूचने । वेश्या—वारवनिता ।

५६. कुशिर्[3] श्लेपणे—सहने (?) । [ कुश्यति— । ] कोशकः, कोष्टा, कुष्टः, कुष्टवान्—पञ्च समाघातरि (?) । पादकोशी, कोशी—द्वौ (?) । कोशः—कोपः । कोशातकी—शाकविशेषः । कोशलः—देशविशेषः । कुशम्[4]—जलम् । कौशेयम्—वस्त्रविशेषः । कुष्टम्, कुष्टिः, कोशनम्, कोशनीयम्—चत्वारः सहने ।

५७. वुश[5] उत्सर्गे—वोशः—उत्स्रष्टा । वोशी—उत्स्रष्ट्री । वोशुः—(?) । वुष्टः, वुष्टवान्, वुट्, वोषन्, वोष्टा—षट् उत्सर्जके । वुष्टः, वुष्टिः, वोशनम्, वोशनीयम्—[ चत्वारः ] त्यागे ।

५८. मुश[6] खण्डने—छेदने । मुश्यति—छिद्रं करोति । मुट्, मोशन्, मोष्टा, मुष्टः, मोशकः—छेदकः । मुष्टिः—वृक्षः, बद्धाङ्गुलिः । मुष्टम्, मोशनम्, मोशनीयम्—त्रयश्छेदने

---

१. 'प्लुष' इति कातन्त्राः, अन्ये च वैयाकरणाः । पुष इति तु गतम् (३।२५) ।

२. 'विस' इति कातन्त्राः, 'बिस' ओष्ठ्यादिरिति पाणिनीयाः ।

३. 'कुश' इति कातन्त्राः । 'कुस' इति पाणिनीयाः ।

४. कुश, शब्दो जलार्थे वेदे प्रयुज्यते । तथा शाद माधवो नामानुक्रमण्याम्—'क्षोदः क्षीरं रजः काष्ठा अररिन्दरजत्कुशः' इति (ऋग्वेदानुक्रमणी मद्रास-मुद्रिता, तस्यान्ते oxxxvi पृष्ठे १०७ तमपङ्क्तौ) । यास्कीये निघण्टौ उदकनामसु 'कश' इति पाठ्यते (१।१२), तथैव च देवराजेन व्याख्यातम् । अत्र क्वचित् 'शकन्' 'शकम्' च पाठान्तरमुपलभ्यते । नन्नवीरकविरन्यत्रापि वैदिकार्थान् निर्देशति यथा विषशब्दस्योदकार्थत्वम् (द्र० २।८।१७ पृष्ठ १३२) । एतेन यास्कीये निघण्टावपि 'कुश' इत्येव शुद्धः पाठो द्रष्टव्यः ।

५. बुस' इति पाणिनीयाः, 'वुस' इति कातन्त्राः ।

६. 'मुस' इति कातन्त्राः, अन्ये च ।

५९. मसी परिमाणे—इयत्तापरिच्छेदे । मसन्, मस्तः, मस्तवान्, मसकः, मस्ता-पञ्च परिमापके । मासः-पक्षद्वयपरिमितः कालः । मसनम्, मस्तम्, मस्तव्यम्, मसिः, मसनीयम्, मस्यम्, मास्यम्-एते परिमाणे ।

६०. लुट विलोडने—लुट्यति विलोडयति । लुट्, लोटन्, लोटकः, लोटा = चत्वारो विलोडके । लोटनम्, लोटव्यम् ( ? ), लुटम्, लुटिः- एते विलोडने ।

६१. उच समवाये—सम्बन्धे । उच्यति-समवैति । उक्, ओचन्, । ओचकः, उक्तम्, उक्तवान्, ओक्ता-षट् सम्बन्धके ( संबन्धिनि ) । उक्तम्, उक्तिः, ओचनम्, ओचनीयम्-चत्वारः सम्बन्धे ।

६२. भृशु भ्रंशु अधःपतने—नीचैः पतने । भृश्यति-अधः पतति । भर्शन्, भर्शकः, भृष्टः, भृष्टवान्, भर्ष्टा-अधः पतितः । भृशम्, भृष्टिः, भृष्टम्, भर्ष्टव्यम्, भर्शनीयम्, भर्श्यम्, भार्श्यम् = नीचैः पतने । भ्रंश्यति[1]-पतति । भ्रंशन्, भ्रंशकः, भ्रष्टवान्, भ्रष्टा-पञ्च नीचैः पतिते । अपभ्रंशः-विकृतः शब्दः । भ्रंशनम्, भ्रंशनीयम्, भ्रष्टम्, भ्रष्टिः, भ्रष्टव्यम्-अधः पतने ।

६३. कृश तनूकरणे—कार्श्ये । कृश्यति-तनूकरोति । कृशानुः-अग्निः । कर्शन्, कर्शकः, कृष्टः, कृष्टवान्, कर्ष्टा-पञ्च तनूकर्तरि । कृष्टम्, कृष्टिः, कर्शनम्, कर्शनीयम्, कार्श्यम्, कर्शितव्यम्-तनूकरणे ।

६४. ञितृषा[2] पिपासायाम्—तृष्यति-पिपासते । तर्षम्, तर्षकः, तर्ष्टा, तृष्टः, तृष्टवान्-[ पञ्च ] पिपासके । तृष्टा, तृष्टिः, तृष्यम्, तर्षणम्, तर्षणीयम्, तर्षितव्यम्, तर्ष्यम्, तार्ष्यम्-अष्टौ पिपासने ।

६५. तुष हृष तुष्टौ[3]—पोषणे । तुष्यति-आनन्दति । तुष्टः, तुष्टवान्, तोषकः, तोष्टा-चत्वारः संतोषिणि । तोषः, तोष्यम्, तौष्यम्, तुष्टम्, तोष्टव्यम्, तोषणम्, तोषणीयम्-सप्त संतोषे । हृष्यति-हृष्टो भवति । हृष्टः, हृष्टवान्, हर्षकः, हर्ष्टा, हर्षन्-पञ्च संतोषके । हर्षः, हर्षणीयम्, हर्षितव्यम्, हर्ष्यम्, हार्ष्यम्, हृष्टम्, हृष्टिः-सप्त सन्तोषे । रोमहर्षणः-पुलकाङ्कनः ( भयङ्करः ) ।

---

१. इह 'अनुपङ्गस्य लोपः' ( १।६ धातुसूत्रे ) इत्यनेन 'अनुपङ्गलोपोऽनुनासिकानाम्' ( १।३७१ धातुसूत्रे ) इत्यनेन वाऽनुस्वारस्य लोपः प्राप्नोति स कथमत्र न भवतीति वृत्तिकृता नोक्तम् ( पाणिनीया अपि 'भ्रश्यति' इत्येवोदाहरन्ति )। उत्तरत्र कृदन्तेषु क्वचित् लोपो निर्दिश्यते, तदपि विचारणीयम् । २. ञितृषा इति कातन्त्रा अन्ये च वैयाकरणाः ।

३. 'तुष्टौ' इति कातन्त्रा अन्ये च वैयाकरणाः । वृत्तिकारोऽप्युदाहरणार्थनिर्देशे संतोषार्थमेव प्रायेण निर्दिशति ।

६६. कुप क्रुध रुप रोपे—कुप्यति—क्रुद्धो भवति । कुपितः, कुपितवान्, कोपिता, कोपन्, कोपकः—पञ्च क्रुद्धे । कोपः, कोपनम्, कुपितम्, कुपितिः, कुपितव्यम्, कोपनम्, कोप्यम्, कौप्यम्—नव कोपने । कौपम्, कौपुः—कौपीनम्, 'कच्छा' इति प्रसिद्धं वा । क्रुध्यति—कुप्यति । क्रुद्धः, क्रुद्धवान्, क्रोधकः, क्रुत्—चत्वारः कोपितरि । क्रोधिः, क्रोधनः—वर्पविशेषस्य नाम । रुप्यति—रुष्टो भवति । रुष्टः, रुष्टवान्, रोपकः, रोषी—चत्वारो रुष्टे । रुट्, रोपणम्, रोपणीयम्, रोप्यम्, रौप्यम्, रोपः—षट् कोपने ।

६७. डिप[1] क्षेपे—स्थापने । डिप्यति—रक्षति स्थापयति । डेपन्, डेपकः, डिप्तः, डिप्तवान्, डेप्ता—[ पञ्च ] रक्षके । डिप्तिः डिप्तम्, डेप्तव्यम्, डेपनम्, डेपनीयम्, डेप्यम्, डैप्यम्, डेपः, डिप्—नव रक्षणे, स्थापने ।

६८. स्तृप[2] समुच्छ्राये—विस्तारे[3] ( 'फैलाना = पसारना' इति भाषायाम् ) । स्तृप्यति—विस्तारयति । स्तृप्तः, स्तृप्तवान्, स्तर्पन्, स्तर्पकः, स्तर्पः—पञ्च विस्तारके । स्तृप्तिः, स्तृप्तम्, स्तर्पणन्, स्तर्पणीयम्—चत्वारो विस्तरणे ।

६९. गुप व्याकुलत्वे – गुप्यति—व्याकुलो भवति । गुप्तः, गुप्तवान्, गोप्ता, गोपः, गोपकम्—पञ्च व्याकुले । गुप्तिः, गुप्तम्, गुप्तव्यम्, गोपनम्, गोपनीयम्, गोप्यम्—व्याकुलत्वे ।

७०. युप रुप लुप विमोहने—जागरणे[4] । युप्यति—जागर्ति । योपकः, योपः, योप्ता, युप्तः, युप्तवान्—पञ्च जागरूके । युप्तिः, युप्तम्, योप्तव्यम्, योपनम्, योपनीयम्, योप्यम्, यौप्यम्—सप्त जागरणे[5] । [ रुप्यति···। लुप्यति··· ] ।

७१. लुभ गार्ध्ये—अभिकाङ्क्षायाम् । लुभ्यति—अभिकाङ्क्षति । लोभन्, लुब्धः, लुब्धवान्, लोब्धा, लोभकः—पञ्चाभिकाङ्क्षके । लुब्, लुप्, लोभः, लोभनम्, लोभनीयम्, लोब्धव्यम्—षट् महत्त्वाकाङ्क्षायाम् ।

७२. क्षुभ संचलने—कम्पने । क्षुभ्यति—कम्पते । क्षोभन्, क्षोभकः, क्षोब्धा, क्षुब्धः, क्षुब्धवान्—पञ्च संचारिणि कम्पके । क्षुप्, क्षुब्, क्षोभः, क्षोभणम्, क्षोभणीयम्, क्षोभ्यम्—षट् संचलने ।

---

१. 'डिब्बा, डिपो' इति भाषान्तरीयशब्दयोरप्ययमेव मूलधातुः स्यात् ।
२. 'स्तूप' इति कातन्त्रा अन्ये च केचन वैयाकरणाः ।
३. समुच्छ्रायः सम्यगुत्थापनम्, यूपादीनां गर्ते रोहणम् ।
४. विगतं मोहनं यस्मिन् तत्–इति समासेऽर्थोऽयमुपपद्यते ।
५. इतोऽग्रे द्वयोर्धात्वोर्व्याख्यानं नष्टम् ।

७३. णभ तुभ हिंसायाम्—नभ्यति–हिनस्ति। नभस्–आकाशः। तुभ्यति–ताडयति। तोभन्, तोभकः, तुब्धः, तुब्धवान्, तोब्धा–पञ्च कशायाम् ('चाबुक' इति भाषायाम्)। तुब्धिः, तुब्धम्, तोब्धव्यम्, तोभनम्, तोभनीयम्, तोभः, तोभ्यम्, तुप्–अष्टौ ताडनक्रियायाम्।

७४. क्लिदू[1] आर्द्रीभावे—क्लिद्यति–आर्द्रीभवति। क्लेदन्, क्लेदकः, क्लिन्नः, क्लिन्नवान्–चत्वार आर्द्रे। क्लिन्तिः, क्लिन्नम्, क्लेदनम्, क्लेदनीयम्, क्लेद्यम्–आर्द्रीभवने।

७५. ञिमिदा स्नेहने—मेद्यति–स्निह्यति। मेदन्, मेदकः, मिन्नः, मिन्नवान्–[ चत्वारः ] स्नेहके। मिन्नः–आकाशः (?)।

७६. ञिक्ष्विदा मोचने—त्यागे। क्ष्विण्णः, क्ष्विण्णवान्, क्ष्वेदकः–त्रयः त्याजके। क्ष्वेदनम्, क्ष्वेदनीयम्, क्ष्वित्, क्ष्वितिः (?, क्ष्वित्तिः), क्ष्विण्णम्, क्ष्वेत्तव्यम्–षट् मोचने।

७७. रुधु[2] वृद्धौ—रुध्यति–वर्धते। रुत्, रोधकः, रोद्धा, रुद्धः, रुद्धवान्–पञ्च वर्धके। विरोधी–संवत्सरविशेषस्य संज्ञा, शत्रुः। रोधनम्, रोधनीयम्, रोद्धव्यम्, रोध्यम्, रुद्धम्, रुद्धिः–षट् वर्धने।

७८. गृधु अभिकाङ्क्षायाम्–बालाकाङ्क्षायाम् (?)। गृध्यति–बालाकाङ्क्षाविशिष्टो भवति। गृद्धः, गृद्धवान्, गर्धकः, गर्धा, गृध्नुः–पञ्च बालाकाङ्क्षिणि। गर्धनम्, गर्धनीयम्, गृद्धम्, गृद्धिः, गर्धव्यम्, गार्ध्यम्, गर्ध्यम्, गृत्–अष्टौ बालाकाङ्क्षायाम्।

अनुदात्तङानुबन्ध आत्मनेपदम्—अनुदात्तस्वरानुबन्धो ङकारानुबन्धश्च धातुरात्मनेपदं भवति।[3]

स्वरितञानुबन्ध उभयपदम्—स्वरितस्वरानुबन्धो ञकारानुबन्धश्च धातुरुभयपदं भवति।[4]

---

१. 'क्लिन्दू' इति कन्नडलिपिमुद्रितोऽपपाठः व्याख्याने 'क्लिद्यति' आदिपाठदर्शनात्।

२. 'ऋधु' इति कान्तन्त्राः, अन्ये च वैयाकरणाः। अयमेव च युक्तः पाठः। अत्र धातुसूत्रे तद्व्याख्याने च ऋकारस्थाने 'रु' निर्देशो दाक्षिणात्यानाम् ऋकारस्य 'रु' रूपोच्चारणजन्यः प्रतीयते। तज्जन्यश्च रोधकः रोद्धा विरोधी आद्युदाहरणेषु कृतगुणको 'रो' निर्देशो द्रष्टव्यः।

३. एषु त्रिष्वपि सूत्रेषु 'अनुदात्तङानुबन्धः, स्वरितञानुबन्धः, उदात्तानुबन्धः' आदिषु प्रथमयानिर्देशः क्रियते, तथा सत्यर्थनिर्देशो नाञ्जसावकल्पते। कातन्त्रे (३।४।४२–४७) ऽन्येषु च व्याकरणेषु पञ्चम्या निर्देश उपलभ्यते।

४. पाणिनीयाः स्वरितञानुबन्धेभ्यः कर्त्रभिप्राये क्रियाफल एवात्मनेपदं विदधते ( एवं

उदात्तानुबन्धः परस्मैपदम्—उदात्तस्वरानुबन्धो धातुः परस्मैपदं भवति।[1]

७९. पूङ् प्राणिप्रसवे—जनने। सूयते–प्रसूते। सवानः–प्रसवकर्ता। सवनम्–प्रसवः।

८०. दूङ् परितापे—श्रमे। दूयते–श्राम्यति। दूतः, दूतवान्, दूनः, दवः, दाव्यम् (?), दवानः, दवकः–सप्त श्रमिणि। दूतः, दूतिः, दवनम्, दवनीयम्, दव्यम्, दाव्यम्–षट् श्रमे।

८१. दीङ् क्षये—दीयते–क्षयति। दीनः, दयानः–क्षययुक्तः। दीनम्, दयनम्, दयनीयम्–क्षयक्रिया।

८२. धीङ् अनादरे—धयते–अनादरं करोति। धीनः, धयानः–अनादरिता। धीनम्, धीतिः, धयनम्, धयनीयम्–चत्वार अनादरे।

८३. मीङ् हिंसायाम्—मीनः–मत्स्यः। मयानः, मयः–घातकः। मीनम्, मीतिः, मयनम्, मयनीयम्–चत्वारो हिंसायाम्।

८४. रीङ् श्रवणे—रीयते–शृणोति। रीणः, रयाणः–द्वौ श्रोतरि। रीतिः–क्रमः। रयणम्, रयणीयम्–श्रवणम्।

८५. लीङ् श्लेषणे—आलिङ्गने। लीनः, लयानः–आश्लेष्टा। लीतः, लयनम्, लयनीयम्–त्रय आलिङ्गने।

८६. डीङ् विहायसा गतौ—पक्षिगतौ। डीयते–विहायसा गच्छति। डीनः, डयानः–पक्षी। डीतिः, डयनम्, डयनीयम्–त्रयः पक्षिगत्याम्।

८७. व्रीङ् वरणे—आवरणे सामीप्ये। व्रीयते–मिलति आवृणोति। व्रीणः, व्रयाणः–द्वौ मेलके। व्रीतिः, व्रयणम्, व्रयणीयम्–त्रया मेलने आवरणे च।

---

तदनुयायिनश्चान्द्रादयोऽपि)। परन्तु काशकृत्स्ने कातन्त्रे च न तथा वैशिष्ट्यमुपलभ्यते। तथा चोक्तं वर्धमानेन—

> विशेषः पाणिनेरिष्टः सामान्यं सर्ववर्मणः।
> सामान्यमनुगृह्णन्ति तत्राचार्यपरम्परा॥ इति।

अत्र विशेषो गोपीचन्द्रकृतकविकल्पद्रुमस्य दुर्गादासविद्यावागीशकृतायां धातुदीपिकायां (पृष्ठे ८) द्रष्टव्यः।

१. निरनुबन्धेभ्यो भू-आदिभ्यो धातुभ्यः परस्मैपदविधायकं सूत्रं नोक्तं वृत्तिकृता। कातन्त्रे तु 'शेषात् कर्त्तरि परस्मैपदम्' (३।४।४७) इति सूत्रं दृश्यते।

८८. पीङ् पाने । पीनः, पयानः—पायकः । पीतिः, पयनम् , पयनीयम्—त्रयः पानकर्मणि ।

८९. माङ् माने—परिमाणे । मयते—परिमिमीते । माता, मायमानः—परिमापकः । मानम् , मायनम् , मायनीयम्—मानदण्डम् ( मानसाधनम् ) ।

९०. ईङ् गतौ—ईयते—गच्छति । ईनः, अयानः—गमकः । ईः, ईतिः, अयनम्, अयनीयम्—गत्याम् ।

९१. प्रीङ् प्रीतौ—प्रेमणि । प्रीयते—प्रेम करोति । प्रीणः, प्रयाणः—प्रीतिकर्ता । प्रीतिः, प्रयणम् , प्रयणीयम्—त्रयः प्रीतिकर्मणि ।

९२. जनी प्रादुर्भावे—उत्पत्तौ। जायते—उत्पद्यते । जायमानः, जनिता, जनकः—त्रय उत्पादके पितरि । जन् , जानुप् , जनिः, जननम् , जननीयम् , जन्मन्—पट् उत्पत्तिकर्मणि । जननी, जनयित्री—द्वौ मातरि ।

९३. दीपी दीप्तौ—प्रकाशे । दीप्यते—प्रकाशते । दीपानः, दीप्तः, दीप्तवान्—त्रयः प्रकाशितरि । दीप्रः, प्रदीपः, दीपकः—त्रयो महति दीपे । दीपाळिका—लघु दीपम् । दीप्तम् , दीप्तिः, दीपनम् , दीपनीयम् , दीप्यम् , दीप्तम् , दीप्तव्यम्—सप्त प्रकाशने ।

९४. पूरी आप्यायने—पूरणे । पूर्यते—भरति । पूरकः, पूरितः, पूर्तः, पूर्तवान् , पूरितवान्—पञ्च आप्यापके भरके । पूर्तिः, पूर्णम् , पूरणम् , पूरणीयम् , पूर्तव्यम्—पञ्च भरणे आप्यायनकर्मणि ।

९५. जूरी जीर्णे—नाशे । जूर्यते—जीर्यति नश्यति । जूर्णः, जूर्णवान् , जूराणः—त्रयो जीर्णभवितरि । जूरणम् , जूरणीयम् , जूर्यम्—त्रयो नाशे जीर्णभावे ।

९६. तूरी त्वरणहिंसनयोः—शीघ्रतायां हिंसने च । तूर्यते—शैघ्र्यमाचरति । तूराणः, तूरकः—त्वरिता । तूर्णम् , तूरणम् , तूरणीयम् , तूर्यम्—शैघ्र्ये ।

९७. धूरी गूरी घूरी हिंसायाम्—धूर्यते—हिनस्ति । धूराणः, धूरकः, धूर्णः, धूर्णवान्—चत्वारो हिंसके । धूरणम् , धूरणीयम् , धूर्तिः—त्रयो मारणे । धूर्तः—मत्तः ( १ कपटाचारी ) । गूर्यते—ताडयति[1] । गूराणः, गूरः, गूरकः, गूर्णः, गूर्णवान् ,—[पञ्च] ताडके । गूरणम् , गूरणीयम् , गूर्यम् , गूर्तव्यम्—चत्वारस्ताडने । घूर्यते—खटखटा करोति[2] । घूराणः, घूरकः, घूर्णः, घूर्णवान्—खटखटायकः । घूरणम् , घूरणीयम् , घूर्यम् , घूर्ति—खटखटाकरणे ।

---

१. पूर्वमीमांसायामवगोरणाधिकरणे ( ३।४।१० ) 'तस्माद् ब्राह्मणाय नावगुरेत' इति श्रुतिव्याख्याने अवगोरणं वध इत्येके, वधोऽपि ताडनमात्रमित्यन्ये, ताडनार्थं दण्डोद्यमनमात्रमिति खण्डदेवः, अवज्ञामात्रमिति माधवः ।

२. रोषयुक्तेन चक्षुषा दर्शनं भाषायां 'घूरना' क्रियोच्यते ।

९८. शूरी स्तम्भे—स्थिरीभावे। शूर्यते–स्थिरो भवति। शूरः, शूरकः, शूराणः, शूर्ता–स्थाता। शूरणम्, शूरणीयम्, शूर्तव्यम्, शूर्तिः–स्थिरीभावे।

९९. चूरी दाहे—ज्वलने। चूर्यते–ज्वलति। चूरकः, चूरः–ज्वलिता। चूर्णम्, चूर्तिः, चूर्तव्यम्–ज्वलने।

१००. तप ऐश्वर्ये च–ऐश्वर्ये [चाद्] दाहे सन्तापे च। तप्यते–ऐश्वर्ययुक्तो भवति। तप्यः, तप्तः, तप्तवान्, तपकः–धनाढ्यः। तपनः–सूर्यः। तापी–नदी। तप्तम्, तप्तिः, तपनीयम्, तप्यम्–चत्वार ऐश्वर्ये।

१०१. वृतु[1] वरणे—आवरणे। वृत्यते–आवृणोति। वर्तकः, वर्तमानः–आव्रियमाणः। वृत्रम्–शत्रुः। वृत्तिः, वार्ता, वृत्तान्तः–त्रयो वार्तायाम् (वर्तने)।

१०२. क्लिश उपतापे—परिश्रमे। क्लिश्यते–श्रान्तो भवति। क्लेशकः, क्लेशानः, क्लिष्टः, क्लिष्टवान्–श्रमिकः। क्लिष्टम्, क्लिष्टिः, क्लेशः, क्लेशनम्, क्लेशनीयम्, क्लेश्यम्, क्लेष्टव्यम्–सप्त श्रमे।

१०३. कासृ[2] दीप्तौ—प्रकाशे। कास्यते–प्रकाशते। कासानः, कासकः–प्रकाशकः। कासारः–लघुतडागः, पुष्करः ('पोखरा' इति भाषायाम्)। कास्मीरः–काश्मीरः, कुङ्कुमम् ('केसर' इति प्रसिद्धम्)। कासः, कासिः, कासम्, कासनीयम्, कास्यम्–पञ्च प्रकाशने। कासुः–[ताम्र]पणम् ('पैसा' इति भाषायाम्)। कासा–कटिः, स्वयम् (?)। कासिनी–कमलसरोवरः।

१०४. वासृ[3] शब्दे—ध्वनौ। वास्यते–शब्दयति। वासानः, वासकः–शब्दयिता। वासुः–वीणा। वासरः–दिनम्, परिमाणम्। वासना–दुर्वासना, पूर्वकर्मफलम्।

१०५. पद गतौ—भूषणे (?)। पद्यते–भूषणं धारयति (?)। पदानः, पत्तः, पत्तवान्–भूषणधारकः (?)। पदकम्–कण्ठाभरणम्। पतस्यः (?)–नीलमणिः। पदवी–ऐश्वर्यम्। पदम्, पत्, पादः–त्रयश्चरणे। पदलम्–संतोषः। पत्तम्–भगः। पत्तिः–तूलम् (रूई)।

---

१. कातन्त्रीयाः 'तप ऐश्वर्ये वावृतु वर्तने' इति पठन्ति। ये वा-शब्दं 'तप ऐश्वर्ये वा' इत्येवं संबध्नन्ति काशकृत्स्नपाठानुरोधेन तेषां 'वा' पदं समुच्चायकं भवितुमर्हति, न विकल्पार्थकम्।

२. 'काशृ' इति तालव्यशकारं कातन्त्राः पठन्ति, अन्ये च वैयाकरणाः। तेषां मते धातूदाहरणेष्वपि काश्यते काशानः काशक इत्येवमादीनि रूपाणि ज्ञेयानि।

३. 'वाशृ' इति कातन्त्रा अन्ये च वैयाकरणाः। तेषां मते धातूदाहरणेष्वपि वाश्यते वाशान इत्येवमादीनि रूपाणि द्रष्टव्यानि।

१०६. खिद दैन्ये—दीनतायां, दुःखे। खिद्यते–दुःखितो भवति। खेदानः, खेदकः–दुःखी। खित्तिः, खित्तम्, खेदः, खेदनम्, खेदनीयम्, खेत्तव्यम्–दुःखम्।

१०७. विद सत्तायाम्—विद्यते–भवति। वेदानः, वेदकः, वित्तिः, वित्तवान्–चत्वारो भवितरि। वित्तिः, वेदनम्, वेदनीयम्, वेद्यम्, वेत्तव्यम्–पञ्च भवने सत्तायाम्। वित्तम्–द्रव्यम्।

१०८. बुध अवगमने—ज्ञाने। बुध्यते–जानाति। बोधः–वेदपुरुषः। बोधायनः–वेदशाखा[1] (?)। बुत्, बुद्, बोधकः, बुद्धः, बुद्धवान्, बोद्धा, बोधानः–सप्त ज्ञातरि। बोधनम्, बोधनीयम्, बोध्यम्, बोद्धव्यम्, बुद्धिः, बुद्धम्, बौध्यम्–सप्त ज्ञाने।

१०९. युध सम्प्रहारे—विकर्तने। युध्यते–विकृन्तति। योद्धा, योधकः, युद्धः, युद्धवान्–चत्वारो विकर्तके। युद्धम्, युद्धिः, योद्धव्यम्, योधनम्, योधनीयम्, योध्यम्–षट् विकर्तने। अयोध्या–एतन्नाम्नी नगरी।

११०. अनो रुध कामे—अवरोधने[2] (?) अनुरुध्यते–अवरुणद्धि (?)। अनुरोद्धा, अनुरुद्धः, अनुरुद्धवान्, अनुरोधकः–चत्वारोऽवरोधके (?)। अनुरुद्धम्, अनुरुद्धिः, अनुरोधनम्, अनुरोधनीयम्–चत्वारोऽवरोधने (?)।

१११. मन ज्ञाने—मन्यते–जानाति। मन्ता, मनकः, मनानः, मतः, मतवान्–पञ्च ज्ञानिनि। मन्त्रः–देवतानामोच्चारणम्। मनुः–मन्त्रः, देवताभेदः। मनुजः, मनुष्यः, मानवः–त्रयो मनुपुत्रे। मतिः, मतम्–समयः। मननम्, मननीयम्, मन्तव्यम्–मननयोग्यम्। मन्युः–क्रोधः। मान्यः–पूज्यः। मनस्–क्रमः, मनः। उपमन्युः–मुनिः। मनाक्–एकपक्षीयः (?)।

११२. अन प्राणने—चेतने। अन्यते–प्राणिति। अन्यः–परः। अन्ता, अनकः, अतः, अतवान् (?)–चत्वारः प्राणयुक्ते। अन्त्रम्–उदरावयवः ('आँत' इति भाषायाम्)। अति–अधिकम्। अन्तम् (?, अन्नम्)–आहारः। अन्तव्यम्, अननम्, अननीयम्–त्रयः प्राणने। अनिलः–वायुः। अनलः–अग्निः। आन्–उत्तमः पुरुषः।

---

१. बौधायनः कृष्णयजुःशाखाप्रवर्तको मुनिविशेषः, यत्प्रोक्तं बौधायनं कल्पसूत्रं प्रसिद्धम्। पूर्वोत्तरमीमांसायाः कृतकोटिनामधेयं व्याख्यानमप्यनेन कृतमिति प्रपञ्चहृदयकार आह [ पृष्ठ ३९ द्र० ]।

२. ग्रन्थवृत्तिकारस्यार्थनिर्देशोऽत्र चिन्त्यः। अनुपूर्वो रुधिरिच्छार्थे प्रयुज्यते। तथैव चान्ये वैयाकरणा व्याचक्षते। 'इति करोतु भवान् इत्यनुरुध्ये', इत्येवं वाक्यरोधनं ज्ञेयम्।

११३. युज समाधौ—एकाग्रचित्ते। युज्यते–मिलति। योक्ता, योजानः, युक्तः, युक्तवान्–मेलकः। अश्वयुक्–नक्षत्रविशेषः। योजनम्–अध्वपरिमाण-विशेषः। योक्तव्यम्, योजनीयम्, योज्यम्, युक्तिः, युक्तम्–पञ्च मेलने।

११४. सृज विसर्गे—परित्यागे। सृज्यते– त्यजति। स्रष्टा–ब्रह्म। सर्गकः (?)–सृष्टिकर्ता। सर्जः–सिंहः। सर्जनम्, सर्जनीयम्, स्रष्टव्यम् (?) सर्गः, सृष्टम्, सृष्टिः–प्रक्षेपणे (?)। प्रतिसर्गः–नाशः। विसर्गः–अक्षरविशेषः। निसर्गः –निश्चयः। उत्सर्गः–परित्यागः, सामान्यम्। संसर्गः– मेलनम्।

११५. लिश अल्पीभावे—अल्पत्वे। लिशति (?, लिश्यते)–अल्पं भवति। लेष्टा, लेशकः, लिष्टः, लिष्टवान्–चत्वारोऽल्पमात्रके। लेशः, लेश्यः, लिष्टिः, लिष्टम्, लेशनम्, लेशनीयम्, लेष्टव्यम्, लिट्–अल्पे।

११६. शक मृष क्षमायां च—सहनेऽपि[1]। [शक्यति,] शक्यते–सहते। शकः–देशः, कालः। शाकम्–व्यञ्जनम्। शकुन्तः, शकुन्तलः–पक्षी। शाकिनी–राक्षसी। शक्तः, शक्तवान्, शक्ता, शककः–सहनशीलः। शकुनम्–सिद्ध्यसिद्धि-निमित्तम्। शकुनिः–पक्षी। शकनम्, शकनीयम्, शक्यम्, शाक्यम्, शक्तम्–पञ्च सहने। शक्तिः–देवता, वशिष्ठ-पुत्रः। शाक्तेयः–पराशरः। शाक्तम्, शाक्तेयम्–दुर्गामतम्। मृष्यति, मृष्यते–मिथ्या वदति। मृष्टः, मृष्टवान्, मर्षकः, मर्षा, मर्षन्, मर्षाणः–मिथ्यावाची, सहनकर्ता। मृष्टिः, मृष्टम्, मृष्टव्यम् (?), मर्षणम्, मर्षणीयम्–[पञ्च] सहने। मृट्, मृषा–मिथ्या।

११७. ईशुचिर् पूतीभावे—पवने। शुच्यति, शुच्यते–पवते। शोक्ता, शोचकः, शुक्तः, शुक्तवान्, शुक्–पवित्रे। शुक्तिः, शुक्तिका–जलजो द्रव्यविशेषः ('सीप' इति भाषायाम्)। शुचिः–अग्निः, पवित्रम्। शुक्तम्, शोक्तव्यम्, शोचनम्, शोचनीयम्, शोच्यम्, शौचम्, शौच्यम्–सप्त निर्मलीभावे।

११८. णह बन्धने—नह्यति, नह्यते–बध्नाति। नद्, नाद्धा, नाद्धः, नाद्धवान्, नहन्, नहानः, नहतः (?, नहकः)–सप्त बन्धके। उपानद्–पादरक्षकः ('पगरखी,जूता' इति भाषायाम्)। नाद्धम्, नाद्धिः, नहनम्, नहनीयम्, नह्यम्, नाह्यम्, नाहम्, नक्तव्यम्–अष्टौ बन्धने। नक्तम्–रात्रिः। नहुषः–सर्पः, एतन्नामा राजा।

११९. रञ्ज रागे—वर्णे। रज्यति, रज्यते–आलपते गायति। रक्ता, रक्तः, रक्तवान्, रञ्जकः, रागी–विषयी, रक्तवर्णः। रक्तम्–लोहितम्। रजस्–रजः।

१. चात्कोऽर्थः समुच्चीयत इति न ज्ञायते। कातन्त्रपाठे चकारो नास्ति।

रजस्वला–पुष्पवती, ऋतुमती। रङ्गः, रक्तिः, रक्तिमा, रागः–चत्वारो रक्तवर्णे। रङ्गः–नर्तनस्थानम्, रङ्गवल्ली। रजतम्–श्वेतायः ('चांदी' इति भाषायाम्)। रजकः–वस्त्रधावकः। रजनी–रात्रिः। रजम्–धूलिः, पांशुलम्। रजनरिका–अवस्करस्थानम्, (कूड़ा डालने का स्थान)। रजकम्–अग्निचूर्णम् ('बारूद' इति भाषायाम्)।

१२०. शप आक्रोशे—निन्दायाम्। शप्यति, शप्यते–निन्दयति। शपन्, शपानः, शप्तः, शप्तवान्, शप्ता, शपकः–षट् निन्दके। शपनम्[1], शपनीयम्, शप्तव्यम्, शापः, शपथः, शप्तम्, शप्तिः–सप्त निन्दायाम्।

[ इति यन्-विकरणो दिवादिगणः समाप्तः ]

१. शपनं प्रकाशनमित्यपीति भागवृत्तिकारः। द्र० भागवृत्तिसंकलनम् ( अ० १।३।२१, पृष्ठ ७ )।

# अथ स्वादि-गणः

## [ नु-विकरणः ]

१. षुञ् अभिषवे—मथने। स्वादेर्नुविकरणः–षुञ् प्रभृतिभ्यो धातुभ्यः नुविकरणो भवति सार्वधातुके परतः[1]। सुनोति सुनुते–मन्थति। सवन्[2] सवानः सोता, सुतः, सुतवान्, सवकः–पटु मन्थनकर्तरि। सवनम्, सवनीयम्, सोतव्यम्, सुतिः, सुतम्–पञ्च मन्थने। सौता–तारकाविशेषे।

२. षिञ् बन्धने—सिनोति सिनुते–बध्नाति। सयन्, सयानः, सितः, सितवान्, सेता, सयकः–पटु बन्धके। सेतुः–पुल्लिनम् ('बाँध' इति भाषायाम्)। सितम्, सितिः, सयनम्, सयनीयम्, सेतव्यम्–पञ्च सेतौ, बन्धे ('मेंड़' भाषायाम्)। सायम्–दिवावसानम्।

३. धुञ् कम्पने—चलने। धुनोति, धुनुते–कम्पते। धवन्, धवानः, धोता, धुतः, धुतवान्, धवकः–पटु कम्पके। धुतिः, धुतम्, धोतव्यम्, धवनम्, धवनीयम्–पञ्च कम्पने। धवः–आशंका ('खतरा') इति भाषायाम्।

४. दुञ् परितापे—ज्वलने। दुनोति, दुनुते–ज्वलति। दवन्, दवानः, दोता, दवकः, दुतः, दुतवान्–पटु ज्वलितरि। दवः, दावः,–वनाग्निः। दवनम् दवनीयम्, दोतव्यम्, दुतम्, दुतिः–पञ्च ज्वलने।

५. हिञ् गतौ वृद्धौ च—हिनोति हिनुते–गच्छति वर्धते। हेतुः–कारणम्। हयन्, हयानः, हयकः, हितः, हितवान्, हेता–[पटु] गन्तरि। हयः–अश्वः। हायः–तरणिवस्त्रम् ('नौका का पाल' इति भाषायाम्)। हितम्, हितिः, हेतव्यम्, हयनम्, हयनीयम्–पञ्च गमने वृद्धौ च।

६. शिञ् निशाने—श्रवणे (?)। शिनोति शिनुते–शृणोति। शयन्, शयानः, शेता, शितिः, शितवान्–पञ्च श्रावके। शयः–हस्तम्। शेतुः–(?)। शितः–कर्पूरम्। शिता–('चीनी' 'खांड' इति प्रसिद्धं द्रव्यम्)। शितिः–कष्टरेखा।

---

१. कप्रदटीकायामिद 'सार्वधातुके आर्धधातुके च परे' इत्यभिप्रायो व्याख्यातः, स चिन्त्यः। यतो अन् (शप्) आदयो विकरणाः सार्वधातुक एव भवन्ति, नार्धधातुके परतः।

२. दिवादिवदिहापि सर्वत्र शतरि अन्-विकरणो निर्दिश्यते।

७. डुमिञ् प्रक्षेपणे—रक्षणे स्थापने। मिनोति, मिनुते–रक्षति। मितः, मितवान्, मेता, मयन्, मयानः–स्थापकः रक्षकः। मितिः, मितम्, मेतव्यम्, मयनम्, मयनीयम्, मित्–षट् माने (?)।

८. चिञ् चयने—सहभावे[1] (?)। चिनोति चिनुते–सह भवति। चेता, चितः, चितवान्, चयन्, चयानः, चयकः–षट् सह भवितरि। चित्, चयनम्, चयनीयम्, चेतव्यम्, चयः–पञ्च सहभावे। च–समुच्चयेऽव्ययः। सञ्चितम्–पूर्वजन्मफलम्। चितिः–चयनम्। चैत्यवृक्षः–वृक्षविशेषः। चैत्यालयः–श्मशान-गृहम्।

९. स्तृञ् आच्छादने—स्तृणोति, स्तृणुते–आच्छादयति। ऋदनुबन्धाद्[2] ईः (?)—ऋकारनकारानुबन्धात् (?, ऋकारान्तान्नकारान्ताच्च) ई प्रत्ययो भवति–स्त्री। स्तर्ता, स्तृतः, स्तृतवान्, स्तरन्, स्तराणः–पञ्च आच्छादके। स्तरणम्, स्तरणीयम्, स्तर्तव्यम्, स्तृतिः, स्तृतम्–पञ्च विस्तरे।

१०. कृञ् हिंसायाम्—घातने। कृणोति, कृणुते–घातयति। कृतः, कृतवान्–द्वौ घातके। कृत्, कृतम्, कृतिः, कृत्यम्, कृतकम्–पञ्च हिंसायाम्।

११. वृञ् वरणे–आवरणे—वृणोति, वृणुते–आवृतो भवति। वृतः, वृतवान्–द्वौ आच्छाद्यमाने। वृतिः, वृतम्, वर्तिः, वरणम्, वरणीयम्, वरेण्यम्, वर्यम्, वार्यम्–अष्टौ आवरणे। वरणः–दुर्गः। वारणः–हस्ती। वरणा–एतन्नाम्नी नदी। वरुणः–एतन्नामा देवः। वारुणी–जलपाशः, मद्यम्। वारम्–दिवसः।

१२. पृञ् प्रीतौ—प्रेमणि। पृणोति, पृणुते–प्रीतिं करोति। परन्, पराणः, पर्ता, परः, पृतः, पृतवान्–षट् प्रीतिकर्तरि। पृतिः, पृतम्, पृत्, परणम्, परणीयम्, पर्यम्, पार्यम्, पर्तव्यम्–अष्टौ प्रीतौ। परम्परा, परम्परिका–क्रमा-नुसरणम्। परा–परा शक्तिः।

१३. स्मृञ् पालने च—रक्षणे प्रीतौ च। स्मृणोति, स्मृणुते–पालयति। स्मर्ता, स्मरन्, स्मराणः, स्मृतः, स्मृतवान्–पञ्च रक्षके। स्मृत्, स्मृतिः, स्मृतम्,

---

१. 'समुच्चय' पदस्यार्थमनुसृत्यायमर्थोऽयं प्रतिपादितः स्यात् कथञ्चिदृचितता।

२. सूत्रपाठे कलडभाषान्तरे च पाठाशुद्धिः प्रतीयते। अभिप्रायस्त्वस्य ऋकारान्तान्न-कारान्ताच्च प्रातिपदिकात् स्त्रियाम् 'ई'प्रत्ययविधाने वर्तते। यथा स्तृ+ई=स्त्री, कर्तृ+ई=कर्त्री, दण्डिन्+ई=दण्डिनी। उणादौ तु स्त्रीपदं स्त्यायतेर्ड्रट्-प्रत्ययेन साध्यते। तत्र टित्वान्ङीप् भवति।

स्मर्तव्यम्, स्मरणम्, स्मरणीयम्, स्मर्यम्, स्मार्यम्–अष्टौ रक्षणे। स्मरः–प्रेमकर्ता, पालयिता, मन्मथः।

१४. आप्लृन् व्याप्तौ—आप्नोति, आप्नुते–व्याप्तो भवति। आपन्, आपानः, आपकः, आप्तः, आप्तवान्–आप्तः (सत्यवाक्) पुरुषः, हिताकाङ्क्षी। आपनम्, आपनीयम्, आप्तिः, आप्तव्यम्–हितम्।

१५. शक्लृन् शक्तौ—बले। शक्नोति, शक्नुते–बलं दर्शयति। शकन्, शकानः, शक्तः, शक्तवान्– चत्वारो बलवति। शकनम्, शकनीयम्, शक्तव्यम्, शक्यम्, शाक्यम्, शक्तिः–बलम्। शकः–देशः, कालः[1]। शाकम्–व्यञ्जनम् ('सब्जी' इति भाषायाम्)। शाकिनी–भूतः (?, राक्षसी)[1]।

१६. राध साध संसिद्धौ—निर्णये। राध्नोति, राध्नुते–निर्णयति। राधन्, राधानः, साधन्, साधानः–चत्वारो निर्णायके।

१७. तिक, तिग, षिघ, तिक्षु, तीक्षु, चिरि, जिरि, दास, दुहि[2] जिघांसायाम्—तिक्नोति–मारयति। तिक्तः, तिक्तवान्, तेकन्, तेक्ता, तेककः, तिक–घातकः। तिक्मम्–घर्मः। तेकनम्, तेकनीयम्, तिक्तिः, तेक्यम्, तैक्यम्, तेक्तव्यम्–षट् हिंसने। तेकरम्–दमः। तेकुः–प्राणवायोरूर्ध्वगमनम्। तिक्तम्–कटुरसः, शाकविशेषः। तिक्तातकी–शाकविशेषः। तिग्नोति–स्विद्यति। तिग्, तेगन्, तेगकः, तेगः, तेग्यः–स्वेदवान्। तेगुः–प्राणवायोरूर्ध्वगमनम्, वृक्षविशेषः। सिघ्नोति–छिद्रं करोति[3]। सिघ्, सेघन्, सेघः, सेघकः–चत्वारश्छिद्रकर्तरि। सिग्घिः, सिग्घम्, सेग्घव्यम्, सेघ्यम्, सैघ्यम्, सेघनम्, सेघनीयम्–सप्त छिद्रकरणे। तिक्ष्णोति–(दम लेता वा छोड़ता है)[4]। तिक्ष्, तेक्षः,[5] तेक्षन्, तेक्षकः–(दम लगाने वाला)। तिक्ष्णम्, तेक्षणम्, तेक्षणीयम्, तेक्ष्यम्, तैक्षम् (?, तैक्ष्यम्)–पञ्च दमे। तीक्ष्णोति–उपविशति। तीक्षन्, तीक्षकः, तीक्षः–उपवेशकः, तीक्ष्णश्च। तीक्ष्णम्, तीक्षणम्, तीक्षणीयम्–त्रय उपवेशने। चिरिणोति–चिन्तयति। चेरन्, चेरकः, चेरः–दुःखी, चिन्तकः।

---

१. द्र० शक धातौ (३।१६ पृष्ठ १५० )।

२. धृत्युदाहरणानुसारं 'दुह' इत्येव पाठो युक्तः स्यात्। 'दुह' इति कातन्त्रस्य एकस्मिन् कोशे, पाठः, अपरस्मिन् 'द्रु' इत्येव। क्षीरस्वाम्यपि तथैव दुर्गपाठं (कातन्त्रवृत्तिकारपाठं) स्मरति (क्षीर० ५।३३)। सायणस्तु 'द्रुह्' पाठं दुर्गमतं स्मृत्वा 'द्रुनुते' इत्युदाजहार।

३. 'सेंध लगाना' इति भाषायाम्। सेधनं सेधः, तस्यैव 'सेंध' इत्यपभ्रंशः।

४. सन्दिग्धोऽयमर्थः, एवमुत्तरत्रापि।

५. तेक्षादिषु अनुपधाया इकारस्य कथं गुण इति न ज्ञायते।

चेरमः—शिवशरणः। चेरुः—धमनम् (फूंकना)। चिरम्—स्थिरम्। चेरणम्, चेरितव्यम्—त्रयः पीडायाम्। चिरिः—कीटः। चिरन्तनम्—पुरातनम्। जिरिणोति—विकर्तयति। जेरन्, जेरकः, जेरः—त्रयो विकर्तके। जिरिः—क्रिमिः। जेरुः—दुर्गस्य रन्ध्रम्, यतः शस्त्रं (गोला-गोली वा) प्रक्षिप्यते। जेरणम्, जेरणीयम्, जेर्यम्, जैर्यम्, चत्वारो विकर्त्तने। दासनोति—कृन्तति। दासः, दासन्, दासकः—त्रयो विकर्तके। दासनम्, दासनीयम्—द्वौ विकर्तने। द्रुह्नोति—ताडयति। द्रोहन्, द्रोहकः, द्रोही—त्रयः ताडयितरि। द्रुहिणः—ब्रह्मा। द्रोहः, द्रोहणम्, द्रोहणीयम्—त्रयस्ताडने।

१८. ञिधृषा प्रागल्भ्ये—चातुर्ये। धृष्णोति—चतुरो भवति। धर्षन्, धर्षकः, धृष्टः, धृष्टवान्—चतुरः। धर्षणम्, धर्षणीयम्, धृष्टम्, धृष्टिः—चातुर्य-णाकर्षणे (?)।

१९. दम्भ दम्भने—अहंकारे। दम्नोति—अहंकारं दर्शयति। दम्भन्, दम्भकः—दम्भकर्ता। दम्भोलिः—गर्जनम्, स्तनयित्नुः। दम्भः, दम्भनम्, दम्भ-नीयम्—त्रयोऽहंकारे।

२०. रुध वृद्धौ—रुध्नोति—वर्धते। रुद्धः, रुद्धवान्, रोधन्, रोधकः, रोद्धा—पञ्च वर्धके। रोधनम्, रोधनीयम्, रुद्धिः, रुद्धम्, पञ्च गर्वे। रोधस्—अवरोधः।

२१. धिवि तृप् प्रीणने—प्रेमणि। धिन्नोति[1]—प्रीतिं करोति। धेवः, धेवन्, धेवकः—त्रयः प्रेमिणि। धेवनम्, धेवनीयम्, धेव्यम्, धैव्यम्—चत्वारः प्रीतिकर्मणि। तृप्नोति—शान्तो भवति। तर्पन्, तर्पकः, तृप्तः, तृप्तवान्—शमी। तर्पणम्, तर्पणीयम्, तृप्तिः, तृप्तम्, तर्प्तव्यम्—शीतीभावे।

२२. अशूङ् व्याप्तौ—अश्नुते—व्याप्नोति आवृणोति। अशानः अश्या, अष्टः, अष्टवान्, अशकः—व्यापकः, आवरकः। अष्टन्—संख्याविशेषः। अशनिः—मेघगर्जनम् (विद्युत्)। अशुः—प्राणः। आशुः—व्यापकः। अशनम्, अशनीयम्, अष्टिः, अष्टम्—व्याप्तिः।

२३. षिघ आस्कन्दने—शनैर्गमने, अल्पशोषणे। सिघ्नुते—चलति, शुष्यति। सिघ्रुः—वृक्षविशेषः। सेघानः, सिग्धः, सिग्धवान्, सेघकः—चत्वारः—शुष्कभावुके। सिग्धिः, सिग्धम्, सेग्धव्यम्, सेघनम्, सेघनीयम्—चत्वारः शुष्कीभावे।

[ इति नु-विकरणः स्वादिगणः समाप्तः ]

---

१. इदित्त्वात् सन्दिग्धमिदं रूपम्। एवमुत्तरत्रापि कृदन्तेषु। पाणिनीयास्तु 'धिनोति' इत्याहुः, एवम् धेन्वः धेन्वन् इत्यादयोऽपि द्रष्टव्याः।

# अथ तुदादि-गणः

## [ अग्—विकरणः ]

१. तुद व्यथने—दुःखे। तुदादेरग्विकरणः—तुद-प्रभृतिभ्यो धातुभ्योऽग् विकरणो भवति (ककारो गुणनिषेधार्थः[1])। तुदति[2]—दुःखितो भवति। सकृद् बाधितो विधिर्बाधित एव—एक वारं बाधितो निषिद्धो विधिर्बाधित एव तिष्ठति [न पुनः प्रवर्तत इत्यर्थः। तेन कित्त्वेन गुणे बाधिते न स पुनः प्रवर्तते]। तुदन्, तुत्तः, तत्तवान्—त्रयो दुःखिनि। तुत्तम् (?, तुत्थम्)—पाषाणभेदः ('नीला थोथा' इति भाषायाम्)। तोदनम्, तोदनीयम्, तोत्तव्यम्, तोदः, तोद्यम्—पञ्च दुःखे।

२. नुद प्रेरणे—कथने। नुदति—कथयति। नुदन्, नुत्तः, नुत्तवान्, नोदकः—चत्वारः कथयितरि। नुत्तिः, नुत्तम्, नोदः, नोदनम्, नोदनीयम्—पञ्च कथने।

३. दिश अतिसर्जने—निरूपणे। दिशति—निरूपयति। देशिकः, देष्टा, दिशन्, दिष्टः, दिष्टवान्—पञ्च निरूपके। दिक्, दिशा[3]—द्वौ दिशायाम्। दिश्यम्—दिशि भवं वस्तु। देशः—नगरम्, राज्यम्। देशनम्, देशनीयम्, देश्यम्—त्रयो निरूपणे।

४. भ्रस्जो पाके—पचनकर्मणि। अनुषङ्गस्य लोपः[4]—अनुषङ्गस्य लोपो भवति। भ्रजति—पाकं करोति। भ्रजन्, भ्रष्टः, भ्रष्टवान्—त्रयः पक्तरि। भ्रष्टिः, भ्रष्टम्, भ्रजनम्, भ्रजनीयम्—चत्वारः पाके।

---

१. कलापटीकायाम् 'ककारं वृद्धिनिषेधार्थम्' इति पठ्यते सोऽपपाठः, वृद्धेरप्रसक्तत्वात्।

२ इह कातन्त्रा अन्ये च वैयाकरणाः तुदप्रभृतीन् उभयतोभाषानाहुः। कलापटीकायां तु 'तुद णुद दिश भ्रस्ज क्षिप लिख' इति षण्णां परस्मैपदरूपाण्येव निर्दिश्यन्ते, तत्कारणं चिन्त्यम्।

३. भागुरिरपि हलन्तेभ्यः स्त्रियामाप् आह—'आपं चैव हलन्तानां यथा वाचा निशा दिशा' इति। द्रष्टव्यम्—पृ० १२३ टि० ५।

४. पूर्वनिर्दिष्टेन (पृष्ठ ५) 'अनुनासिकोऽनुषङ्गः' इत्यनेन सूत्रेण अनुनासिकानां पञ्चमवर्णानाम् अनुषङ्गसंज्ञा क्रियते। भ्रस्ज-धातौ च न तादृशः कश्चित् पञ्चमो वर्णः। इह

५. क्षिप प्रेरणे—नियमे। क्षिपति–नियमयति। क्षिप्रम्–शीघ्रम्। क्षिप्तः, क्षिप्तवान्, क्षेप्कः, क्षिपन्–चत्वारो नियन्तरि। क्षेपणम्, क्षेपणीयम्, क्षिप्तम्, क्षिप्तिः–चत्वारो नियमने।

६. कृप विलेखने—हलेन रेखाकरणे (खेत जोतने में)। कृषति–विलिखति, कृषन्, कष्टः, कृष्टवान्, कृषिकः, कृषीवलः–पञ्च कर्षके। कृषिः, कृष्टम्, कृष्टिः–त्रयो विलेखने।

७. मुच्लृ मोक्षणे–त्यागे। मुञ्चते, मुञ्चति–त्यजति। लृदनुबन्धान्नुः[1]–लृदनुबन्धानां धातूना 'नुः'[2] आगमो भवति। मुञ्चन्, मुक्तः, मुक्तवान्–त्रयः त्यक्तरि। मोचकः–वृक्षविशेषः, त्यागी। मुक्तम्, मुक्तिः, मोचनम्, मोचनीयम्–चत्वारस्त्यागे।

८. लुप्लृ छेदने—छिद्रकरणे। लुम्पति, लुम्पते–छिद्रयति। लुम्पन्, लुप्तः, लुप्तवान्, लोपकः–चत्वारश्छेदकर्तरि। लुप् लोपः, लोपनम्, लोपनीयम्, लोप्तव्यम्, लुप्तम्, लुप्तिः, लोप्यम्–अष्टौ छिद्रकरणे।

९. विद्लृ लाभे—विन्दति, विन्दते–प्राप्नोति। विन्दन्, वित्तः, वित्तवान्–त्रयः प्रापके। वित्तम्–धनम्। वित्तिः, वेदनम्, वेदनीयम्, वेद्यम्–चत्वारः प्रापणे।

१०. लिप उपदेहे–लेपने। लिम्पति, लिम्पते–लेपयति। लिप्तः, लिप्तवान् लेपकः–त्रय लेपके। लेपनम्, लेपनीयम्, लेप्तव्यम्, लिप्तम्, लिप्तिः–पञ्च लेपने।

११. पिचिर् क्षरणे—सिञ्चने (छिड़कने में)। इरनुबन्धान्नुः[3]—इर्-अनुबन्धानां धातूनां 'नु'[4] आगमो भवति। सिञ्चति, सिञ्चते–क्षरति (छिड़कता

---

तु वृत्तिकारः सकारस्य लोपमिच्छतीति प्रतीयते, तथा रूपोदाहरणात्। अन्ये धातु-वृत्तिकाराः संप्रसारणं विधाय 'भृज्जति भृज्जन्' इत्यादीनि रूपाणि प्रदर्शयन्ति। तस्माद् इहत्या वृत्तिश्चिन्त्या प्रतीयते।

१. कन्नडटीकायाम् 'लृदनुबन्धा नुः' इत्यपपाठः (एवमुत्तरत्रापि द्रष्टव्यः)। पूर्वत्र (पृष्ठे ५) 'इदनुबन्धान्नुः' इत्येव पठ्यते। तदनुसारमिहापि पञ्चम्यन्तः पाठोऽस्माभिः स्वीकृतः।

२. नुन्' इति कन्नडटीकायां पाठः (उत्तरत्र 'इरनुबन्धान्नुः' इत्यादिसूत्रवृत्तावपि 'नुम्' इत्येव निर्दिश्यते)। पूर्वत्र (पृष्ठ ५) इदनुबन्धान्नुः सूत्रव्याख्याने 'नु' इत्येव निर्दिश्यते। पाणिनीयास्तु 'शे मुचादीनाम्' (अष्टा० ७।१।५९) इत्यनेन नुमागमं शासति।

३. द्रष्टव्या एतत्पृष्ठस्था टि० १।

४. द्रष्टव्या एतत्पृष्ठस्था टि० २।

है )। सिक्तः, सिक्तवान्, सेचकः-त्रयः सेचनकर्तरि। सिक्तम्, सिक्तिः, सेचनम्, सेचनीयम्-सेचनकर्मणि।

१२. कृती छेदने—विकर्तने। ईदनुबन्धान्नुः[1]—ईकारानुबधानां धातूनां 'नु'[2] आगमो भवति। कृन्तति, कृन्तते-छेदयति। कृन्तन्, कृत्तः, कृत्तवान्, कृतिकः (?, कृतकः)-चत्वारो विकर्तरि। कृन्तनम् (?), कृन्तनीयम् (?), कृत्तम्, कृत्तिः-चत्वारो विकर्तने।

१३. खिद परिघाते—दुःखे। स्वरितानुबन्धान्नानुः[1]—स्वरितानुबन्धानां 'नु'[2] आगमो भवति। खिन्दति, खिन्दते-दुःखितो भवति। खिन्दन्, खिन्दानः, खेदकः, खेता, खित्तः, खित्तवान्-षट् दुःखिनि। खित्तः, खित्तम्, खेदनम्, खेदनीयम्, खेद्यम्-पञ्च दुःखे।

१४. पिश अवयवे—अङ्गे (?)। पिंशति, पिंशते-अङ्गं निर्माति (?, चूर्णयति)। पिंशन्, पिंशानः, पिष्टः, पिष्टवान्, पेशकः-त्रयोऽङ्गनिर्मातरि (?, पञ्च चूर्णकर्तरि)। पिशितम्-म्लानम् (?, मांसम्)। पेशी-मांसम्। पिशाचः-राक्षसः। पिशाची, पिशाचिका-राक्षसी। पिशुनः-अपकारप्रयुक्तः सूचनकर्ता (चुगली खानेवाला)। पैशुन्यम्-अपकारप्रयुक्तं सूचनम्। पिष्टिः, पिष्टम्-यवादिचूर्णम् ('आटा' इति भाषायाम्)। पेशलम्-शोभनम्।

१५. रिपि (?, रिपी) ऋजी गतौ—रिपति-गच्छति। रिप्तिः। (?, रिप्तः) रिप्तवान्, रेप्ता, रेपकः-गन्ता। रेप्तव्यम्, रेप्यम्, रिप्तम् रिप्तिः, रेपणम्, रेपणीयम्-षट् गमने। ऋषति-गच्छति ऋषिः-ऋषिः (मन्त्रद्रष्टा)। ऋष्टः, ऋष्टवान्-गमकः। अर्षणम्, अर्षणीयम्-ज्ञानम्। आर्षम्, आर्षेयम्, ऋषित्वम्-त्रयस्तपस्यायाम्।

१६. धि धारणे—धियन्, धीयितः,[3] धीयितवान्, धेयिता, धियः, धियकः-[ षट् ] सोढरि। धीयितिः, धीयितम्, धेयितव्यम्, धीयनम्, धीयनीयम्-पञ्च सहने।

१७. क्षि निवासगत्योः—वासे गमने च। क्षियति-निवसति। क्षितिः-भूमिः। क्षयः-गृहम्,[4] नाशः। क्षितः, क्षितवान्, क्षेता, क्षयकः-चत्वारो निवसितरि। क्षयणम्, क्षयणीयम्, क्षेतव्यम्, क्षेयम्, क्षय्यम्-पञ्च निवासे।

---

१. द्रष्टव्या पूर्वपृष्ठस्था टि० १। २. द्रष्टव्या पूर्व पृष्ठस्था टि० २।

३. 'धीयितः' इत्यादिरूपाणि चिन्त्यानि।

४. गृहार्थकः क्षयशब्द आद्युदात्तः। तदुक्तम् 'क्षयो निवासे' (अष्टा० ६।१।२०१)। अन्तोदात्तस्तु नाशार्थकः। गृहवाची प्रायेण वेद एव प्रयुज्यते।

१८. षू प्रेरणे—नियमने । सुवति[1]—नियमयति । सूतः—रुद्रवीर्यः, मत्स्यहा, ऋषिः । सुवन्[2] सूतवान् सुवकः[2]—त्रयः प्रेरके । सुवनम्[3], सुवनीयम्[3], सूतव्यम्, सूतिः—चत्वारः प्रेरणायाम् ।

१९. व्रश्चू छेदने—कर्त्तने । यजां यवराणां ग्यृतः सम्प्रसारणं कानुबन्धे च—यजादीनां धातूनां यवराणाम् [ यथासंख्यम् ] इ उ ऋ सम्प्रसारणं भवति कानुबन्धे प्रत्यये परतः[4] । वृश्चति—कृन्तति । वृश्चिकः—कीटः ( 'बिच्छु' इति भाषायाम् ), राशिविशेषः, दुष्टः पुरुषः । ऊदनुबन्धाद् इड् वा—ऊकारानुबन्धानां धातूनाम् इड् आगमो [वा] भवति[5] । वृश्चितः, वृश्चितवान्[6]—द्वौ दुष्टे । व्रश्चनम्, व्रश्चनीयम्, व्रश्चितव्यम्—त्रयो दुष्टतायाम् ।

२०. ऋछ गतीन्द्रियप्रलयमूर्तिभावेषु—गत्याम्, इन्द्रिये, प्रलये, मूर्तौ, भावे च । ऋच्छति—याति । ऋच्छन्, ऋच्छितः, ऋच्छितवान्—त्रयो गन्तरि । ऋच्छनम्, ऋच्छनीयम्, ऋच्छितव्यम्—त्रयो गत्याम् ।

२१. कृ[7] विक्षेपे—स्थापने (?) । ॠ इर्—धातूनाम् ॠकारस्य इर् भवति । किरति—स्थापयति (?) । किरः—स्थापकः । किरः—वराहः । किरणम्—रश्मिः । इरुरोरीरूरौ—इर् उर् इत्येतयोर् ईर् ऊर् इत्येतौ भवतः । कीर्तः, कीर्तवान्—वर्णयिता । कीर्तिः, कीर्तनम्—वर्णनम् ।

२२. गॄ[8] निगरणे—बहिर्गमने (?) । गिरति—गच्छति (?) निगिलति । गिरिः—पर्वतः । गर्तम्—गुहा । उद्गारः, उद्गरणम्, उद्गिरणम्, उद्गीर्णम्—बहिरागमने ( 'डकार' तथा वमन में ) ।

२३. उछी विपाशे[9]—त्यागे । उच्छति—परित्यजति । उच्छन्, उच्छितः,

---

१. पाणिनीयास्तु उवङादेशं कृत्वा 'सुवति' रूपमाहुः ।

२. अत्रापि वकारागमः कथमिति न ज्ञायते । पूर्वाचार्याणां यण्-व्यवधानसन्धिना कथंचित् संभवति । एतत्सन्धिविषयेऽस्मदीये 'संस्कृत व्याकरण-शास्त्र का इतिहास' नाम्नि ग्रन्थे ( भाग १, पृष्ठ २६-३० द्वि० सं० ) विस्तरेण द्रष्टव्यम् ।

३. गुणाभाव इह कथमिति नोक्तम् ।

४. कधवृत्तौ सूत्रव्याख्याऽस्पष्टा वर्तते ।

५. अनेन क्त विभाषा इट् विधीयत इति न ज्ञायते, तादृशोदाहरणानामभावात् ।

६. पाणिनीयास्तु निष्ठायां 'यस्य विभाषा' ( ७।२।१५ ) इति नियमेन नित्यमिडभावमिच्छन्ति, तथा सति 'वृक्णः वृक्णवान्' इत्येव भवति ।

७. कधवृत्तौ 'कृ' इत्यपपाठः । ८. कधवृत्तौ 'गृ' इत्यपपाठः ।

९. विवासे इति कातन्त्रा अन्ये च ।

उच्छितवान्–त्यागी। उञ्छनम्, उञ्छनीयम्, उञ्छितव्यम्, उञ्छितिः, उञ्छितम्–त्यजनम्।

२४. जर्ज चर्च झर्झ, छर्छ परिभाषणतर्जनयोः—अतिवदने झंकारशब्दे (?) च। जर्जति–अतिवदति। जर्जः, जर्जम्, जर्जकः–त्रयोऽतिभाषिणि। जर्जरः, जर्जरी–द्वौ वाद्यभेदे। जर्जनम्, जर्जनीयम्–अतिभाषणे। चर्चति–शङ्कते। चर्चन्, चर्चकः, चर्चितः, चर्चितवान्–चत्वारः शङ्कितरि। चर्चा–गौरी, शङ्का। चर्चनम्, चर्चनीयम्, चर्चितव्यम्, चर्चितम्–रवणम् (चिल्लाना)। झर्झरति–भयं दर्शयति। झर्झन्, झर्झकः–भयदर्शकः। झर्झनम्, झर्झनीयम्–भयम्। झर्झरः, झर्झरी–द्वौ (गड़बड़ी इति भाषायाम्)। छर्छति–झङ्कारं करोति। छर्छुः, छर्छकः, छर्छन्, छर्छितः, छर्छितवान्–पञ्च झंकारकर्तरि। छर्छनम्, छर्छनीयम्, छर्छितव्यम्–त्रयो झंकारे।

२५. त्वच संवरणे—त्वचनकर्मणि (आच्छादने)। त्वचति–चर्म भवति (संवृणोति)। त्वक्–चर्म। त्वच्–उपर्यवयवः ('छिलका' इति भाषायाम्) त्वक्तिः, त्वक्तम्, त्वचनम्, त्वचनीयम्, त्वक्तव्यम्–पञ्च त्वचनकर्मणि। त्वचन्, त्वचकः, त्वक्तः, त्वक्तवान्–चत्वारस्त्वचयितरि।

२६. ऋच स्तुतौ—ऋचति–स्तौति। ऋक्–वेदः। अर्चन्, अर्चकः, ऋक्तः, ऋक्तवान्–चत्वारः स्तोतरि। अर्चनम्, अर्चनीयम्–द्वौ स्तुतौ।

२७. उब्ज आर्जवे—उब्जति–ऋजु भवति। उब्जः–ऋजुः। उब्जम्, उब्जनीयम्–आर्जवे।

२८. उज्झ उत्सर्गे—सामान्ये (? परित्यागे) उज्झति–सामान्यं भवति (?, परित्यजति)। उज्झकः–सामान्यपुरुषः (?, त्याजकः)। उज्झनम्, उज्झनीयम्–द्वौ सामान्ये (?, परित्यागे)। उज्झनी, उज्झैनी–द्वौ भोजराणगरे।

२९. लुभ विमोहने—दीनतायाम्। लुभति–दीनो भवति। लोभन्, लोभकः, लुब्धः, लुब्धवान्–चत्वारो दीने (लोभयुक्ते)। लुब्धिः, लुब्धम्, लोभनम्, लोभनीयम्–चत्वारो दीनतायाम् (विमोहने)।

३०. रिफ कत्थनयुद्धनिन्दाहिंसादानेषु—कथने, युद्धे, निन्दायां, हिंसायां, ग्रहणे च। रिफति–कथयति। रेफन्, रेफकः–द्वौ कथके। द्विरेफः–भ्रमरः।

३१. तृप तृम्प तृप्तौ—प्रीतीभावे। तृपति–तृप्तो भवति। तृपन्, तृप्तवान्,

तृप्तः, तृपकः—चत्वारस्तृप्ते। तृम्पति—शान्तो भवति। तृम्पन्, तृम्पकः—शान्तः। तृम्पणम्, तृम्पणीयम्—शान्तभावे।

३२. तुप तुम्प तुफ तुम्फ ऋफ ऋम्फ हिंसायाम्—मारणे। तुपति—हिनस्ति। तोपन्, तोपकः, तुप्तः, तुप्तवान्—चत्वारो घातके। तोपुः—वनम्, रक्तवस्त्रम्। तोपनम्, तोपनीयम्, तुप्तिः, तुप्तम्—चत्वारो हनने। तुम्पति—ताडयति। तुम्पन्, तुम्पकः—कशा। तुम्पनम्, तुम्पनीयम्—ताडनम्। तुफति—विकृन्तति। तोफन्, तोफकः—कर्तकः। तोफनम्, तोफनीयम्—द्वौ कर्तने। तुम्फति—भपति। तुम्फन्, तुम्फकः—द्वौ भपके। तुम्फनम्, तुम्फनीयम्—द्वौ भपणे। ऋफति—प्रवेशयति[1]। अर्फन्, अर्फकः—द्वौ प्रवेशके। अर्फणम्, अर्फणीयम्—द्वौ प्रवेशने। ऋम्फति—खटखटा करोति। ऋम्फन्, ऋम्फकः—द्वौ खटखटाकारके। ऋम्फा—पङ्कः ('दलदल' इति भाषायाम्)। ऋम्फणम्, ऋम्फणीयम्—द्वौ खटखटाकरणे।

३३. दृफ दृम्फ मिछ उत्क्लेशे—कष्टे, श्रमे। दृफति—कष्टायते। दर्फन्, दर्फकः—द्वौ कष्टभोक्तरि। दर्फणम्, दर्फणीयम्—द्वौ कष्टे। दृम्फति—कष्टं भुङ्क्ते। दृम्फन्, दृम्फकः—द्वौ कष्टभोक्तरि। दृम्फणम्, दृम्फणीयम्—कष्टे। मिच्छति—। मिच्छन्, मिच्छकः—। मिच्छनम्, मिच्छनीयम्—।

३४. गुफ गुम्फ दृभी ग्रन्थे—सन्दर्भे। गुफति—ग्रथ्नाति। गोफन्, गोफकः—द्वौ ग्रन्थके। गोफनम्, गोफनीयम्—द्वौ ग्रन्थने। गुम्फति—संयोजयति ('गूँथता है' भाषायाम्)। गुम्फः, गुम्फन्, गुम्फकः—संयोजकः। गुम्फनम्, गुम्फनीयम्—द्वौ संमिश्रणे, संयोजने। दृभति—अतिशयेन हसति। दर्भः—कुशः। दर्भलः—तृणविशेषः। दर्भा—वस्तुविशेषः। दर्भन्, दर्भकः—द्वौ हसे। दर्भणम्, दर्भणीयम्—द्वौ अतिहसने।

३५. वृती[2] हिंसायां च—हिंसने ग्रन्थने च। वृतति—हिनस्ति। वृत्रः—एतन्नामाऽसुरः, विरोधी। वार्ताकः—शाकविशेषः ('बैंगन–भण्टा' इत्येवं प्रसिद्धः)। वृत्रः—प्राणिविशेषः ('गिलहरी' इति प्रसिद्धः)।

३६. उभ उम्भ पूरणे—भरणे। उभति—पूरयति। उभौ—द्वौ। उभे—द्वे। उभयम्—द्वयम्। उम्भति—पूरयति भरति। उम्भन्, उम्भः, उम्भकः—त्रयः पूरके। उम्भनम्, उम्भनीयम्—द्वौ भरणे।

---

१. काये छुरिकादिप्रवेशनमिह शेयम्।

२. 'चृती' इति कातन्त्रा अन्ये च वैयाकरणाः। कल्पद्रुमकारस्तु वृती पाठमेव स्वीकृत्य व्याचख्यौ इति 'वार्ताकः वृत्रः' इत्याद्युदाहरणनिर्देशात् स्पष्टमवगम्यते।

३७. शुभ शुम्भ शोभार्थे—शुभति-शोभते। शुभन्, शुभकः—द्वौ शोभके। शुभम्, शोभनम्, शोभनीयम्—त्रयः शोभायाम्। शुम्भति—दीप्यते। शुम्भकः—द्वौ द्योतके। शुम्भः—एतन्नामाऽसुरः। निशुम्भः—एतन्नामाऽसुरः। शुम्भनम्, शुम्भनीयम्—द्वौ द्योतने।

३८. विध विधाने—विधति—विदधाति। विधन्, विधः, विधकः—त्रयो विधायके। विधिः, विधनम्, विधनीयम्, विधानम्—चत्वारो विधाने।

३९. जुड शुन गतौ—जुडति—गच्छति। जोडः, जोडा—( युग्मः—'जोड़ा' इति भाषायां प्रसिद्धः )। जोडुः—द्वौ। जोडनम्—संयोजनम् ( जोड़ना ), प्रबन्धः। शुनति—कृन्तति। शुनः, शुनकः[1]—द्वौ कुक्कुरे। शुनी—कुक्कुरी।

४०. पृड मृड सुखने—सुखे। पृडति—सुखयति। पृडः—सुखी। पृडनम्—सुखम्। मृडति—सुखयति। मृडः—सुखी। मृडनम्—सुखम्।

४१. तृण प्रीणने—चरणे ( भक्षणे )। तृणति—चरति। तृणम्—घासः।

४२. मृण हिंसायाम्—मृणति—छिद्रयति। मृणालम्—कमलमूलम्, बिसम्।

४३. द्रुण गतौ—द्रुणति—गच्छति। द्रोणः—मुनिः, पञ्चकोलणः (?), भ्रमरः। द्रोणी—नौः।

४४. तुण गतौ[2]—तुणति—अङ्कुरितो भवति (उगता है)। तुणा—अङ्कुरितभवनम् ( उगना )। तुणम्—घासः।

४५. तूण[3] पूरणे कौटिल्ये च—भरणे कुटिलत्वे च। तूणति—पूरयति। तूणम्, तूणीरम्—इषुधिः।

४६. पुण शोभे—शोभायमाने। पुणति—शोभते। पुणः—शोभितात्मा। पुण्यम्—सुकृतम्।

४७. मुण प्रतिज्ञाने—प्रतिज्ञायाम्। मुणति—प्रतिजानाति। मोणन्, (?, मुणन्), मोणः, मोणकः—प्रतिज्ञाता। मुणिः, मोणनम्, मोणनीयम्—प्रतिज्ञा।

४८. घुण घूर्ण भ्रमणे—घुणति—भ्राम्यति। घोणन् (?, घुणन्), घोणकः—

---

१. 'शुनकम्' इति कन्नडटीकापाठश्चिन्त्यः।

२. अत्र पाठभ्रंशः। गतिसामान्येऽर्थे सति पूर्वधातुमत्र एव पठेत। कातन्त्रास्तु 'कौटिल्ये' इति पठन्ति। तथैवान्ये वैयाकरणा अपि।

३. धातुरयं कातन्त्रेऽन्यत्र च न पठ्यते।

भ्रमणकर्ता। घुणः—जलोपरि भ्रमणशीलः क्रिमिः[1]। घुणिः, घोणनम्, घोणनीयम्—भ्रमणकर्तृ वस्तु। घूर्णति—भ्रमति। घूर्णन्, घूर्णः, घूर्णितः, घूर्णितवान्—चत्वारः—चक्रवद् भ्रमके। घूर्णनम्, घूर्णनीयम्—चक्रवद् भ्रमणम्।

४९. कुण शब्दोपकरणयोः—शब्दे स्पर्शे च। कुणति—शब्दं करोति। कोणः—महिषः, बाधकसाधनम्।

५० प्रछ ईप्सायाम्[2]—कथने (?, प्रश्ने)। पृच्छति—प्रश्नं करोति, कथयति। पृच्छन्, पृच्छकः, पृष्टः, पृष्टवान्—चत्वारः प्रश्नकर्तरि, कथयितरि। पृच्छम्, पृष्टम्, पृष्टिः—त्रयः कथने।

५१. सृज विसर्गे—उत्पादने। सृजति—उत्पादयति। य्वृणां यवरास्तृचि—इ उ ऋ इत्येतेषां यथासंख्यं, य-व-रा भवन्ति तृचि परतः। स्रष्टा—ब्रह्म। सर्जनम्, सृष्टिः, सर्जनीयम्—सृष्टिनिर्माणम्।

५२. टुमस्जो शुद्धौ—निर्मलीकरणे। मज्जति—निर्मलो भवति। मज्जः, मज्जकः—द्वौ निर्मलभवितरि। मज्जनम्, मज्जनीयम्—द्वौ शुद्धौ। मज्जा—एतन्नामा शारीरो धातुः।

५३. रुजो भङ्गे—कष्टे। रुजति—कष्टं भुङ्क्ते। रोजन्, रोजकः, रुष्टः, रुष्टवान्, रोगी—पञ्च कष्टभोक्तरि। रुक्, रोगः, रुजा, रुष्टम्, रुष्टिः, रोजनम् रोजनीयम्—सप्त कष्टेऽर्थे।

५४. भुजो कौटिल्ये—वक्रतायाम्। भुजति—वक्रो भवति। भुक्, भुष्टः, भुष्टवान्, भोक्ता—चत्वारो वक्रे। भुजम्—स्कन्धः (?)। भुजः, काम्भोजः—द्वौ एतन्नामानौ देशविशेषौ।

५५. छुप स्पृश संस्पर्शे—छुपति—स्पृशति। छोपन्, छोपकः, छुप्तः, छुप्तवान्—[ चत्वारः ] स्पर्शके। छोपनम्, छोपनीयम्, छुप्तम्, छुप्तिः—चत्वारः स्पर्शे। स्पृशति—कम्पते[3]। स्पृक्, स्पर्शकः, स्पृष्टः, स्पृष्टवान्—चत्वारो कम्पके। स्पर्शनः—वायुः। स्पृष्टम्, स्पृष्टिः, स्पर्शनीयम्—त्रयः कम्पने।

५६. रुश रिश हिंसायाम्—रुशति—हिंसयति। रोशन्, रोशकः, रोशी,

१. घुणः—चणकादिषु उत्पद्यमानः क्रिमिविशेषः। भाषायामपि 'घुन' इत्येवोच्यते। 'चने के साथ घुन भी पिस गया' इत्यपि लौकिका भाषन्ते। घुणाक्षरन्यायेऽप्ययमेव क्रिमिरिष्टः।

२. 'ज्ञीप्सायाम्' इति कातन्त्रा अन्ये च वैयाकरणाः।

३. स्पर्शेन वायौ गतिं कम्पनमुपलभ्यैवायमर्थो निर्दिष्टः स्याद् वृत्तिकारेण।

रोष्टा, रुष्टः, रुष्टवान्–षट् घातके। रुट्, रोशः, रोशनम्, रोशनीयम्, रुष्टम्, रुष्टिः, रोष्टव्यम्–सप्त हिंसायाम्। रिशति–ताडयति। रेष्टा, रेशन्, रेशकः, रिष्टः, रिष्टवान्–पञ्च ताडयितरि। रिट्, रेशः, रेशनम्, रेशनीयम्, रेष्टव्यम्–[पञ्च] ताडनकर्मणि।

५७. लिश विछ गतौ—[लिशति–गच्छति।] लिशः–गन्ता। लेशन्, लेशी, लेष्टा, लिष्टः, लिष्टवान्–पञ्च शनैर्गन्तरि। लिट्, लेशः, लेशनम्, लेशनीयम्, लिष्टम्, लिष्टः[1], लेष्टव्यम्–सप्त शनैर्गमने। विच्छति–रुन्धन् गच्छति (रुकता हुआ चलता है)। वेच्छन्, वेच्छकः, विष्टः, विष्टवान्–चत्वारो [रुन्धन्] गन्तरि। वेच्छनम्, वेच्छनीयम्; विट्, विष्टम्, विष्टः[2], वेष्टव्यम्–चत्वारो सावरोधगमने।

५८. विश प्रवेशने—अन्तर्गमने। विशति–प्रविशति। विट्, वैश्यः–द्वौ धनिनि। वेश्या, वेशी–पण्यस्त्री (=वेश्या)। वेश्मन्, निवेशनम्–द्वौ गृहे। विष्टिः[3], विष्टवान्–द्वौ गन्तरि। विष्टम्, विष्टिः, वेशनम्, वेशनीयम्–चत्वारः प्रवेशने। विष्टपम्–लोकः। त्रिविष्टपम्–स्वर्गः।

५९. मृश आमर्शने—विमर्शे विचारे। मृशति–विचारयति। म्रष्टा, मर्षकः, मृष्टः, मृष्टवान्–चत्वारो विचारके। मृट्, मर्शः, मर्शनम्, मर्शनीयम्, मृष्टम्, मृष्टिः, म्रष्टव्यम्–सप्त विचारकर्मणि।

६०. शद्लृ शातने—उपवेशने। शीयति, शीयते[4]–उपविशति।

६१. षद्लृ विशरणे—विकर्तने। सीदति–कृन्तति।

६२. षुर ऐश्वर्यदीप्त्योः—ऐश्वर्ये प्रकाशे च। सुरति–धनिको भवति, प्रकाशते। सुरः–धनवान्, प्रकाशकः। सोरणम्–ऐश्वर्यम्, प्रकाशः, स्फोटकात् विकृतस्य रुधिरस्य प्रस्रवणम्। सुरा–मद्यम्।

६३. कुर शब्दे—ध्वनौ। कुरति–शब्दं करोति। कुरिः–अजा। कुरुः–पर्वतः, देशः, राजा। कौरव्यः, कोरवम्, कौरवी, कोरवी, कोरकम्–चत्वारः

---

१. 'लिष्टिः' इति शुद्धः पाठो द्रष्टव्यः।

२. 'विष्टिः' इति शुद्धः पाठो ज्ञेयः।

३. 'विष्टः' इति शुद्धोऽत्र पाठ ऊह्यः।

४. पाणिनीयाः 'शदेः शितः' इत्यनेन नित्यमात्मनेपदमिच्छन्ति श (=अक्) विकरणे। इह तु परस्मैपदिषु पाठात् परस्मैपदम्, आत्मनेपदोपदेशाच्चात्मने पदं भवतीति मत्वोभयपदमुदाहृतम्।

कलिकायां ( कली में ) अङ्कुरे च । कुरटम्—बीजम् । कोरः—पुत्रः । कोरी—पुत्री, कम्बलावयवः ।

६४. खुर छेदने—खुरति—छिनत्ति । खुरः—[1] ( ? ) । खुराची—यवनः ।

६५. मुर संवरणे—आवेष्टने । मुरति—आवेष्टयति ( लपेटता है ) । मुरः—एतन्नामा असुरः । मुरघ्नः—कर्षकः । मोरः[2]—मयूरः । मोरा—सुखम् । मुरजा—वाद्यविशेषः ( ढोल इत्येवं प्रसिद्धः ? ) । मुध्रिः ( ? )—अवयवः, हस्ताभरणम् ( 'चूड़ी' इति प्रसिद्धम् ) ।

६६. क्षुर विलेखने—क्षौरकर्मणि । क्षुरति—बालान् कृन्तति । क्षुरकः, क्षौरकः, क्षौरी—क्षौरकर्ता नापितः । क्षुरणम्, क्षुरणीयम्, क्षौरम्—त्रयः क्षौरकर्मणि । क्षुरम्, क्षुरिका—त्रयः ( ?, द्वौ ) बालकर्तनसाधने ।

६७. घुर भीमार्थशब्दयोः—भये शब्दे च । घुरति—बिभेति, शब्दयति । घोरी, घोरकः, घोरन्—त्रयो भयप्रदे । घोरम्, घोरणम्, घोरणीयम्—त्रयो भये ।

६८. पुर अग्रगमने—पुरति—अग्रे गच्छति । पुरन्तः—अग्रगामी । पोरः—पुत्रः । पोरी—पुत्री । पुरम्, पुरी—नगरम् । पुरा—पूर्वम् । पुरस्—अग्रतः । पुराणम्—पुरातनम् । पुरातनः—प्राचीनः ।

६९. बृह उद्यमे—उद्योगे । बृहति—उद्योगं करोति । बृहन्, बर्हकः, बृहः—त्रय उद्योगिनि । बृहती—छन्दोविशेषः, महती । बृहतां पतिः बृहस्पतिः—सुरगुरुः । ब्रह्मन्—ब्रह्म ।

७०. तृहु तृंहू स्तृहू हिंसायाम्—तृहति—हिनस्ति । तृट्, तृहः, तृहन्—त्रयो मारके । तर्हि—एवं भवतु । तृहती—मारयित्री । तृंहति—मारयति । तृंहन्, तृंहकः, तृंहः—त्रयो हिंसके । तृंहणम्, तृंहणीयम्—मारणम् । स्तृहति—ताडयति । स्तृहन्, स्तृहकः, स्तृहः, स्तृट्—चत्वारस्ताडके । स्तृहणम्, स्तृहणीयम्—द्वौ ताडने ।

७१. इषु इच्छायाम्—गमादेश्छः—गम-प्रभृतीनामन्त्यस्य मकारस्य छकारादेशो भवति । इच्छति—अभिलषति । इच्छन्, इच्छकः, इट्, एषः—चत्वारोऽभिलाषुके । एष्टव्यम्—अभिलषितव्यम् । इच्छा, एषणम्, एषणीयम्, इष्टम्, इष्टिः—पञ्चाभिलाषायाम् ।

---

१. हिन्दी भाषायां प्रयुज्यमानः शफार्थकः 'खुर' शब्द एतद्धातुनिष्पन्नः साधुशब्दः ।
२. मयूरार्थको लोके प्रसिद्धः 'मोर' शब्दोऽपि साधुशब्दः, न मयूरस्यापभ्रंशरूपः ।

७२. मिष स्पर्धायां वाचि[1]—विवादे । मिषति—विवदते । मेषः—अविः । निमिषन्, निमेषकः—चक्षुर्निमीलकः । उन्मिषन्, उन्मेषकः—चक्षुरुद्घाटकः । अनिमिषाः—देवाः ( सततं जागरूकाः ) ।

७३. क्षिल[2] शैत्यक्रीडनयो[3]:—शीतीभावे, क्रीडने च । क्षिलति—क्रीडति, शीतीकरोति । क्षिलन्, क्षिलकः—शीतीकारकः । क्षिलम्, क्षेलम्, क्षेलनम्, क्षेलनीयम्—शीतीकरणे ।

७४. इल गतौ धारणे च—गत्यां सहने च । इलति सहते । इला—भूमिः । इलन्—गन्ता । एलाकः—एला ( 'इलायची' इति प्रसिद्धा ) । एला—( इलायची ) । एलापत्रः—सर्पः । इलिः—काष्ठनिर्मितम् आवरणम् ( मेढ़ इति भाषायाम् ) । इलिः—मूलकः । इलविला—सूर्यवंश्या राजमहिषी । ऐलेयः[4]—मंगलग्रहः ।

७५. हिल हावकरणे—विषयासक्तौ । हिलति—शृङ्गारं करोति । हेलन्, हेलाकः, हेलिः—रत्यर्थे शृङ्गारकर्ता । हेलनम्, हेलनीयम्, हेला—त्रयः शृङ्गारकरणे । प्रहेला, प्रहेलिका—द्वे 'पहेली' इति भाषायां प्रसिद्धे ।

७६. शिल, षिल उच्छि उञ्छे—चालने ( ? ) । शिलति—कम्पयति । शिला—पाषाणः । शैलः—पर्वतः । शैलेयम्—पर्वतमलम् । सिलति—चर्वति । सेलन्, सेलकः—चर्वकः । सेलुः—चर्विका । सेला—चर्विका । सिली—मण्डूकी । उञ्छति—कम्पयति । उञ्छन्, उञ्छकः—द्वौ कम्पयितरि । उञ्छनम्, उञ्छनीयम्—द्वौ कम्पने । उञ्छः—आरण्यो धान्यविशेषः ।

७७. तिल स्नेहने—स्निग्धीकरणे । तिलति—स्निह्यति । तिलः—स्नेहनद्रव्यविशेषः । तैलम्—तिलविकारः, स्नेहद्रव्यम् । तैलिकः—तिलपीडनयन्त्रम् ( 'घानी' 'कोल्हू' इति भाषायाम् प्रसिद्धम् ) । तिलकः—वृक्षविशेषः, तिलकम् । तेलः वृश्चिकः । तेली, तैली—स्नेहविक्रयी ।

७८. चिल वेष्टने—आच्छादने । चिलति—आच्छादयति । चेलम्—आच्छादनीयं वस्त्रम् । चेलुः—वृश्चिकः ।

७८. चल विलसने—चलति—विलसति । चलन्, चलकः—द्वौ क्रीडितरि । अचला—भूमिः । अचलः—पर्वतः ।

---

१. 'वाचि' इति न पठन्ति कातन्त्राः ।
२. 'किल' इति कातन्त्रा अन्ये च वैयाकरणाः ।
३. 'श्वैत्यक्रीडनयोः' इति पाणिनीयाः ।
४. इलाया अपत्यम् = भूमेरपत्यम् ।

८०. वल[1] भेदने—वलति–भिनत्ति। वलः–वलरामः। वलाहक[2]ः–मेघः। वल्लूलः–शक्तिमान्। वलिः–नैवेद्यम्, देवद्रव्यम्, एतन्नामा चक्रवर्ती।

८१. णिल गहने—अरण्ये[3]। निलति–निर्जनीभवति। निलम्–वनम्। अनिलः–वायुः।

८२. मिल श्लेषणे—सहने (?)। मिलति–धीरो भवति ( धैर्यं दधाति )। मिलन्, मिलितः–त्रयो धीरे। मेलनम्, मेलनीयम्, मेलम्, सम्मेलम्–चत्वारः सहने।

८३. खल[4] विलेखने—छेदने। खलति–छिद्रयति। खलः–मूर्खः। खलपूः–मूर्खयिता[5] (?)।

८४. कुट कौटिल्ये—वक्रतायाम्। कुटति–वक्रो भवति। कुटन्, कुटकः–द्वौ वक्रे। कोटा–(?) कोटरम्–पक्षिनीडम्। कोटिः–शतलक्षमिता संख्या। कुटारः–बृहत्सन्निवेशः ( 'डेरा' इति भाषायाम् )। कुटी = कुटीरम्, ( 'कुटिया' इति भाषायां प्रसिद्धम् )। कुटिलम्–वक्रम्। कुटिला–गङ्गा।

८५. पुट लुठ संश्लेषणे—आलिङ्गने। पुटति–आलिङ्गति। पुटभेदनम्–नगरम्। पुटम्–प्रकाशः। पुटाणम्–भ्रष्टं चणकम्। पोटः–चापल्यम्। पोटा–युवती, वृक्षरन्ध्रम्। लुठति–लोटते। लुठन्, लुठः, लुठकः–त्रयो लोटितरि। लोठु–लोटनम्।

८६. कुच संकोचने—समाप्तौ (?)। कुचति–संकुचितो भवति। कुचः–स्तनम्। कोचा–भीरुः।

८७. व्यच व्याजीकरणे—निमित्ते। व्यचति–निमित्तं भवति। ( व्याजं करोति )। व्यचः, व्युचन्, व्यचकः–त्रयो निमित्तवति। व्यचनम्, व्यचनीयम्–निमित्तम्।

८८. गुज शब्दे—ध्वनौ। गुजति–शब्दं करोति ( 'गूंजता है' इति भाषायाम् )। गुजन्, गोजकः–द्वौ शब्दकर्तरि। गोजा–सरस्वती (?)।

---

१. 'बिल भेदने' इति पाणिनीयाः। 'विल भेदने' इति कातन्त्राः। अत्र दन्त्योष्ठ्य-निर्देशश्चिन्त्यः। २. वारिवाहको वलाहकः। दन्त्योष्ठ्यादिः।

३. अरण्यक्रियायामर्थान्निर्जनी भावे।

४. 'लिख लेखने' इति कातन्त्राः। 'लिख अक्षरविन्यासे' इति पाणिनीयाः।

५. खलपूरित्यस्य खलं पुनाति ( खलिहान को साफ करता है ) इति विग्रहः। तथा सति चिन्त्योऽयमर्थनिर्देशः।

८९. गुड रक्षायाम्—गुडति रक्षति। गुडम्–एतन्नामकं द्रव्यम्। गोडः, गोडकः–द्वौ रक्षके। गोडा–रक्षिका।

९०. डिप पेक्षे—वाक्ये[1] कथने। डिपति–कथयति। डेपः, डेपकः–द्वौ कम्पयितरि। डेपनम्, डेपनीयम्–द्वौ कथने।

९१. चुण चुट छुर छुट त्रुट छेदने—विकर्तने। चुणति–कृन्तति। चुणन्, चोणः, चोणकः–त्रयो विकर्तरि। चोणनम्, चोणनीयम्–द्वौ विकर्तने। चुटति–भ्रमति। चुटः, चोटकः–द्वौ भ्रमके। चोटः–निवासस्थानम्, आघातः। छुरति–कृन्तति। छुरिका[2]–'चाकू' इति प्रसिद्धम्। छुरः[2], छुरकः–द्वौ विकर्तरि। छोरणम्, छोरणीयम्–द्वौ विकर्तने। छुटति–निपातयति (उड़ेलता है)। छुटः, छोटकः–द्वौ निपातयितरि। छोटनम्, छोटनीयम्–द्वौ निपातने। त्रुटति–छिनत्ति (तोड़ता है)। त्रोटकः, त्रुटः–द्वौ छेत्तरि। त्रुटिः, त्रोटनम्, त्रोटनीयम्–त्रयश्छेदने।

९२. स्फुट विकसने—स्फुटति–विकसितो भवति। स्फुटन् स्फुटितः, स्फुटितवान्–त्रयो विकसितरि। स्फुटम्, स्फुटितम्, स्फोटनम्, स्फोटनीयम् चत्वारो विकसने। स्फोटकम्–भक्ष्यविशेषः।

९३. मुट्ट आक्षेपप्रमर्दनयोः—कथने मर्दने च। मुटति–कथयति, मर्दयति। मुट्, मोटः, मोटकः–त्रयः कथके, मर्दके। मोटनम्, मोटनीयम्–द्वौ कथने, मर्दने। मोटः–पङ्गुः। मोटी–पङ्गूः। मोट्टुः–पङ्गुत्वम्।

९४. तुट कलहकर्मणि—तुटति–कलहं करोति। तुट्, तोटः, तोटकः–त्रयः कलहशीले। तोटम्–वनम्। तोटनम्, तोटनीयम्, तुटितम्–त्रयः कलहे।

९५. जुड बन्धने—जुडति–बध्नाति (कसकर बांधता है)। जोडः–बन्धकः। जोडा–ग्रन्थिका। जोडुः–सहभावे। जोडिः–(?)। जोडनम्, जोडनीयम्–बन्धनम्।

९६. कड मदे—अहंकारे। कडति–मदयुक्तो भवति। कडकः–अहंकारी। कडारः–कपिलवर्णः। कडिः–खण्डः। कडः–उदारः। कडा–अग्रम् (?)। काडुः–वनम्। काडः–यानादि।

---

१. सम्भवतो निन्दितं वाक्ये।

२. हिन्दीभाषायां प्रयुक्तः 'छुरी' शब्दः छुरा इत्यस्य ह्रस्वार्थकस्यापभ्रंशः, एवं 'छुरा' इति छुरस्य। न तु क्षुरा क्षुरम् इत्यनयोः।

९७. क्रुड[1] घसने—खादने। क्रुडति—भक्षयति। क्रोडः—प्राणिविशेषः। क्रोडनम्, क्रोडनीयम्—भक्ष्यम्।

९८. कुड बाल्ये—बालभावे। कुडति—क्रीडति। कुडः, कोडः, कोडकः—त्रयः क्रीडके। कुडवम्—प्रग्रगः ('बरामदा' इति भाषायाम्)। कुडम्—वर्तिका ('बत्ती' इति भाषायाम्)। कुडिः—लताया अन्त्यो भागः। कुड्यम्—भित्तिः।

९९. तुड तोडने—खनने[2]। तुडति—खनति। तुडा (!, तुडः), तोडः, तोडकः—त्रयः खनके। तोडुः—प्रस्रवणम्, निस्सरणम्।

१००. घुट प्रतीघाते[3]—घुटति—प्रतिघातयति (बदले में मारता है)। घुटः, घोटः, घोटकः—त्रयः प्रतिघातके, अश्वे। घुटिका—औषधगुटिका। घोटा घोटिका—द्वौ (?) (ओषधिविशेषे)।

१०१. स्थुड थुड वुड वूड[4] संवरणे—वेष्टने। स्थुडति—वेष्टयति। स्थुडः—वेष्टकः। स्थुडनम्, स्थुडनीयम्—वेष्टनम्। थुडति—उपागच्छति, उपयुङ्क्ते। थुडः, थोडकः, थोडः—त्रयः समीपं गन्तरि। थोडनम्, थोडनीयम्—समीपगमनम्। वुडति—प्रथमो भवति। वुडः—प्रथमः, आधारः। वोडः—बुद्धिहीनः। वोडी—बुद्धिरहिता। वुडम्—आरम्भः। वूडति—भ्रमति। वूडः—भ्रमकः। वूडनम्, वूडनीयम्—भ्रमणम्।

१०२. हुड संघाते—हुडति—ताडयति। हुडः, होडः, होडकः—त्रयस्ताडके (संघर्षके)। हुडिः—धूलिकणः। होडनम्, होडनीयम्—द्वौ ताडने।

१०३. स्फुर स्फुरणे—दर्शने, प्रकटीकरणे। स्फुरति—दर्शयति। स्फुरन्, स्फुरः, स्फुरकः—त्रयो दर्शके। स्फुरणम्, स्फुरणीयम्—द्वौ दर्शने।

१०४. स्फुल संचये च—एकत्रकरणे दर्शने च। स्फुलति—संचिनोति। स्फुलन्, स्फुलः, स्फुलकः—त्रयः संचयकर्तरि। स्फुलनम्, स्फुलितम्—द्वौ संचयकरणे।

१०५. णू[5] स्तवने—स्तुतौ। य्वोर्धातोरियुवौ स्वरे—धातोरिकारोकारयोः इय् उव् इत्येतौ भवतः स्वरे परतः। नुवति—स्तौति। नूतः, नूतवान्—द्वौ स्तोतरि। नूः, नूतिः—द्वौ स्तवने। नूतिः—रुग्णः।

---

१. 'क्रूड' इति कातन्त्राः।
२. 'विभजने' इत्यर्थो युक्तः स्यात्। तत्रैव 'तोड़ना' इति हिन्दीभाषायां प्रयुज्यते।
३. 'परिवर्तने' इति कातन्त्राः।
४. 'ब्रुड' इति कातन्त्रा अन्ये च वैयाकरणाः।
५. 'नु' इति कातन्त्राः।

१०६. धू विधूनने—त्वचने (नोचने में)। धुवति—त्वचयति। धूतः, धूतवान्—द्वौ त्वचके। धूतम् धूतिः, धूननम्—त्रयस्त्वचने।

१०७. गू पुरीषोत्सर्गे—मलविसर्जने। गुवति—हदति, मलं विसर्जति। गूथम्[1]—मलम्।

१०८. ध्रु गतिस्थैर्ययोः—गत्यां स्थिरतायां च। ध्रुवति—स्थिरो भवति। ध्रुवः—एतन्नामा राजा। ध्रुवम्—निश्चयः।

१०९. गुरी उद्यमे—उद्योगे। गुरते—उद्योगं करोति। गुरुः—आचार्यः, बृहस्पतिः।

११०. कुङ् शब्दे—कुवते—शब्दं करोति। कुः—भूमिः। कवानः, कवः, कावः—त्रयः शब्दयितरि। कविः, काव्यः—द्वौ शुक्राचार्ये।

१११. प्रीङ्[2] व्यायामे—प्रीतौ[3]। प्रियते—प्रीतिं करोति। प्रियः—प्रीतयिता। प्रिया—प्रीतयित्री। प्रियम्—प्रीतिः।

११२. म्रीङ् प्राणत्यागे—मरणे। म्रियते—मरति[4]। म्रियः, म्रियमाणः—मर्ता।

११३. द्रीङ् आदरणे—आदरे। द्रियते—आदरं करोति। द्रियः, द्रियमाणः—आदरकर्ता।

११४. ध्रीङ् अवस्थाने—ध्रियते—स्थिरो भवति। ध्रियः, ध्रियमाणः—स्थिरः। ध्रीः, ध्रयणम्, ध्रयणीयम्—त्रयः स्थैर्यभावे।

११५. जुषी प्रीतिसेवनयोः—प्रेम्णि, सेवायां च। जुषते प्रीतिं करोति। जुष्टः, जुष्टवान्—प्रेमी। जुष्टम्, जुष्टिः, जुट्, जोषम्, जोषणीयम्, जोष्यम्—षस प्रीतौ।

११६. ओविजी भयचलनयोः—भय कम्पने च। विजयति,[5] विजयते—बिभेति, कम्पते। विजयः—(एतन्नामकः) संवत्सरः, भक्तः। विजया—भङ्गः।

---

१. हिन्दीभाषायां प्रयुज्यमानः पुरीषार्थकः 'गू' शब्द एतद्धातुनिष्पन्न एव।

२. इत आरभ्य चत्वारो धातवः कातन्त्रे पृङ् मृङ् दृङ् धृङ् इत्येवमृकारवन्तः पठ्यन्ते, तथैव चान्यत्रापि। इह तु 'री'वन्तः पठ्यन्ते। ध्रीङ् धातोश्च 'ध्रीः, ध्रयणम्, ध्रयणीयम्' इति कृदन्तरूपाण्यप्युदाह्रियन्ते। तेन धातुस्वरूपे तदीयरूपेषु चेह महान् व्यामोह उत्पद्यते।

३. 'व्यायामे' इत्यस्य कथमयमर्थो निर्दिष्टः कन्नडवृत्तिकृतेति न ज्ञायते। कदाचित् 'प्रीङ्' इत्यस्य 'प्रियः, प्रिया, प्रियम्' रूपाण्युदाहरन् व्यामुग्धः स्यात्।

४. काशकृत्स्नः 'मृ' धातुं भ्वादौ पठति (१।२२४, पृष्ठ ३०) तस्यैतद् रूपम्।

५. अन्ये तु ईकारमनुबन्धं मन्यन्ते, अनुदात्तेत्त्वं च स्मरन्ति। अतस्तेषां मते 'उद्विजते'

११७. ओलजी, ओलस्जी व्रीडायाम्—लजयति[1], लजयते–सेवते। लजानः, लजः—द्वौ सेवके। लाजः–भृष्टं धान्यम्। लजति[2] लजते–व्रीडयति। लजन्, लजानः, लजितः, लजितवान्–चत्वारो व्रीडायुक्ते। लज्जा-व्रीडा।

[ इति अग्-विकरणस्तुदादिगणः समाप्तः ]

---

इति रूपं भवति। कातन्त्रे धातुपाठेऽप्ययमात्मनेभाषः पठ्यते। इह अनिदित्त्वेऽपि अग्विकरणत्वाद् गुणाभावे 'विजियति विजियते' इत्येवं भाव्यम्। तस्मात्चिन्त्यं चक्रवीरव्याख्यानम्। एवमोलजी धातावपि द्रष्टव्यम्।

१. इहाप्यन्ये इकारमनुदात्तमितं च स्मरन्ति। पूर्वपृष्ठस्थाऽन्त्या टिप्पण्यत्राप्यनुसन्धेया।

२. इह ईकारस्याननुबन्धत्वे किं कारणम्? अन्यत्र चेदित्त्वाभावे, इति न ज्ञायते।

# अथ रुधादि-गणः

## [ नम्-विकरणः ]

१. रुधिर् आवरणे—अवरोधे। रुधादेर्नम्—रुधि-प्रभृतीनां धातूनां 'नम्' विकरणो भवति सार्वधातुके परतः। चतुर्थात् तथयोर्धः—वर्गाणां चतुर्थाद-क्षरात् परे तकारथकारयोर्धकारादेशो भवति।[1] रुनम् ध् ति अस्यामवस्थायाम् अनुबन्धलोपे नकारस्य णकारादेशे धकारस्य दकारादेशे 'ति' इत्यस्य 'धि' रूपे 'रुणद्धि' इति रूपं निष्पद्यते। रुणद्धि, रुन्धे—आवृणोति। रुन्धन्, रोधकः—द्वौ आवरके। रोधस्—अवरोधकं वस्तु। रोधनम्, रोधनीयम्—अवरोधनम्।

२. भिदिर् विदारणे—विकर्तने (चीरने में)। भिनत्ति, भिन्ते—विदा-रयति। भिन्दन्, भेदकः, भेदी, भेत्ता—चत्वारो विदारके। भित्, भिदा, भेदनम्, भेदनीयम्, भेदः, भेद्यम्, भेत्तव्यम्—नव विदारणे। भित्तिः—कुड्यम्। भित्तम्—खण्डम्।

३. छिदिर् द्विधाकरणे—एकस्य भागद्वयकरणे। छिनत्ति, छिन्ते—द्विधाक-रोति। छित्, छेत्ता, छेदकः, छेदी, छिन्दन्—पञ्च द्विधाकारके। छित्तिः, छित्तम्, छेत्तव्यम्, छेदनम्, छेदनीयम्, छिदा, छेद्यम्—सप्त द्विधाकरणे।

४. रिचिर् विरेचने—रिक्तीकरणे। रिणक्ति, रिङ्क्ते[2]—रिक्तं करोति। रिञ्चन्, रेचकः, रेक्ता, रेचः, रेची—पञ्च रेचके। रेचनम्, रेचनीयम्, रेच्यम्, रिक्तिः, रिक्तम्, रेक्तव्यम्—षट् विरेचने।

५. विचिर् पृथग्भावे—पार्थक्ये। विनक्ति, विङ्क्ते[3]—पृथग्भवति। विञ्चन्, वेचकः, वेची, वेक्ता, विक्तिः, विक्तवान्, वेकी—सप्त पृथग्भवितरि। विक्तम्, विक्तिः, वेचनम्, वेचनीयम्, वेच्यम्, वेकः—[ षट् ] पृथग्भावे।

६. क्षुदिर् सम्पेषणे—चूर्णने। क्षुणत्ति, क्षुन्ते—चूर्णयति। क्षुन्दन्,

---

१. इतोऽग्रे कर्नाटकटीकायां 'सार्वधातुके परतः' इत्यर्थकः पाठो वर्तते, स चिन्त्यः असार्वधातुकेऽपि धकारादेशस्योपलम्भात्।

२. 'रिङ्ते' इत्यपपाठः कर्नाटकटीकायाम्।

३. 'विङ्ते' इत्यपपाठः कर्नाटकटीकायाम्।

क्षुदानः, क्षोत्ता, क्षोदकः, क्षुत्तः, क्षुत्तवान्–षट् चूर्णके । क्षुत्, क्षोदनम्, क्षोदनीयम्, क्षोत्तव्यम्, क्षुत्तम्, क्षुत्तिः, क्षोद्यम्–सप्त चूर्णने ।

७. युजिर् योगे—मेलने । युनक्ति, युङ्क्ते–मिलति । युञ्जन्, योक्ता, योजकः, योजी ( ?, योगी ), युक्तः, युक्तवान्–षट् मेलके । युक्तम्, युक्तिः, योगः, योग्यम्, यौगिकम्, योज्यम्, योजनीयम्–सप्त मेलने । योजनम्–क्रोशचतुष्टयम् ।

८. उछृदिर् दीप्तिदेवनयोः—प्रकाशे क्रीडने च । छृणत्ति, छृन्ते–प्रकाशयति, क्रीडति । छृत्तः, छृत्तवान्, छर्दन्, छर्दानः, छर्त्ता, छर्दकः–षट् प्रकाशके क्रीडके च । छृत्तिः, छृत्तम्, छर्दनम्, छर्दनीयम्, छर्दिः–पञ्च प्रकाशे । छर्दिः–वमनम् ।

९. उतृदिर् हिंसानादरयोः—हिंसनेऽनादरे च । तृणत्ति, तृन्ते–हिनस्ति, अनादरं करोति । तर्दन्, तर्दानः, तर्दकः–त्रयो घातके अनादरके । तर्दुः–[ हिंसकः ] । तर्दनम्, तर्दनीयम्, तृद्, तृत्तम्, तृत्तिः, तर्त्तव्यम्–षट् मारणे प्रीत्यभावे ।

१०. कृती वेष्टने—कृणत्ति कृन्ते–वेष्टयति, कृन्तति । कृत्तः, कृत्तवान्, कर्त्ता, कृतकः, कृत्–पञ्च विकर्तके । कृत्तिः, कर्तनम्, कर्त्तनीयम्–चत्वारो छेदने । कर्त्तरी–वस्त्रछेदनी ( 'कैंची' इति भाषायाम् ) ।

११. शिषृ[1] विशेषणे—असर्वोपयोगे[2] (बचाने में) । शिनष्टि–शेषयति । शिष्टः, शिष्टवान्, शिष्यः–त्रयः क्रिमिविशेषे ( ? ) । शिष्टिः, शिष्टम्, शेषणम्, चत्वारः शेषणे । शेषः–सर्पः ।

१२. पिषृ[3] संचूर्णने—सम्यक् चूर्णने । पिनष्टि–सम्यक् चूर्णयति । पिष्टः, पिष्टवान्, पेष्टकः–त्रयः संचूर्णके । पिष्टम्, पिष्टिः, पेषणम्, पेषणीयम्, पेष्यम्–पञ्च संचूर्णने ।

१३. भञ्जो आमर्दने—भनक्ति–मर्दयति । भक्तः, भक्तवान्, भाक्[4],

---

१. 'शिष्लृ' इति कातन्त्रा अन्ये च वैयाकरणाः ।

२. विशेषणं गुणान्तराधानमुच्यते । कर्नाटकवृत्तिकारस्तु 'विशेषेण शेषणम्' इत्यर्थं स्वं कृतवानिति प्रतिभाति । गुणान्तराधाने तु विपूर्वोऽयं धातुर्प्रयोक्तव्यः । अर्थनिर्देशादेव च उपसर्गविशेषस्य योगोऽवगन्तव्यः । यथा—इङ् अध्ययने–अधीते ।

३. 'पिष्लृ' इति कातन्त्रा अन्ये च ।

४. भाक् प्रभृतिषु अनुपङ्गलोपः कथमिति न ज्ञायते ।

भजकः, भाजकः–पञ्च मर्दितरि । भञ्जिका, भञ्जा–द्वे मूर्तौ । भङ्गः–कष्टम् । भङ्गी–क्रमः, सिद्धपत्रम् ( ? ) ।

१४. भुज पालनाभ्यवहारयोः—रक्षणे भोजने च । भुनक्ति, भुङ्क्ते[1]–रक्षति, खादति । भुक्, भोक्ता, भोजकः, भुक्तः, भुक्तवान्, भोगी–षड् उपभोक्तरि । भुक्तिः, भुक्तम्, भोगः, भोग्यम्, भोक्तव्यम्, भोजनम्, भोजनीयम्–सप्त रक्षणे भोजने च । काम्भोजः–एतन्नाम नगरम् । भोजः–एतन्नामा राजा । भुजम्–स्कन्धः । ( ? ) ।

१५. तृह हिंसि हिंसायाम्—तृणेढि–हिनस्ति । तृट्, तृढः, तृढवान्–त्रयो हिंसके । तर्हणम्, तर्हणीयम्–द्वौ हिंसने । हिनस्ति–ताडयति । हिंसकः–घातकः । हिंसम्, हिंसनीयम्, हिंसा–त्रयो मारणे ।

१६. उन्दी क्लेदने—कष्टे । उनत्ति–कष्टं भुङ्क्ते । उत्तः, उत्तिः–कष्टभोक्ता । ओदनम्–आहारविशेषः ( तण्डुलविकारः ) । उदकम्–जलम् ।

१७. अञ्जु व्यक्तिम्रक्षणकान्तिगतिषु—स्पष्टीभावे, कोमले, कान्तौ, गतौ च । अनक्ति–स्पष्टीभवति । अक्तः, अक्तवान्, अञ्जकः–त्रयः स्पष्टभवितरि । अक्तिः, अक्तम् अक्तव्यम्–त्रयः स्पष्टीभवने । अञ्जनः–पर्वतः, दिग्गजः । अञ्जनम्–'अञ्जन' इत्येव प्रसिद्धं द्रव्यम् । अञ्जना–दिग्गजः ( ? ), माया । अञ्जनावती–दिग्गजः ( ? ), ज्योतिष्मती लता । निरञ्जनः–भगवान् ( ब्रह्म ) ।

१८. तञ्चु[2] संकोचने—म्लाने । तनक्ति तङ्क्ते[3]–म्लायति । तक्तः, तक्तवान्, तक्ता, तञ्चन्, तञ्चानः, तञ्चकः, ताक्तः–सप्त मायके । तक्तिः, तक्तम्, तञ्चनम्, तञ्चनीयम्, तञ्चम्–पञ्च म्लाने संकोचने ।

१९. ओविजी भयचलनयोः—भये कम्पने च । विनक्ति, विङ्क्ते[4]–बिभेति, कम्पते । विक्तः, विक्तवान्, वेक्ता–त्रयो भीरौ । वेजनम्, वेजनीयम्, वेज्यम्, वेगम् ( ? ), विक्तिः, विक्तम्–षट् भये कम्पने च ।

२०. वृजी वर्जने—त्यागे । वृणक्ति, वृङ्क्ते[5]–त्यजति । वृक्तः, वृक्तवान्, वर्जकः, वर्क्ता–चत्वारस्त्यक्तरि । वर्जनम्, वर्जनीयम्, वर्ज्यम्, वृक्तम्, वृक्तिः, वर्क्तव्यम्–षट् त्यागे । वृजिनम्–पापम् । वर्गः–वर्गः ( पक्षः ) ।

---

१. इहात्मनेपदं कथमिति न व्यक्तीकृतं वृत्तिकारेण । पाणिनीयास्तु 'भुजोऽनवने' ( १।३।६६ ) इत्यनेन पालनातिरिक्तेऽर्थे आत्मनेपदं विदधति ।

२. 'तञ्चू' इति कातन्त्राः ।

३. इत आरभ्य पृचीपर्यन्तम् आत्मनेपदरूपाण्यप्युदाहियन्ते कर्नाटकवृत्तौ । तदुदाहरणं कथमिति न ज्ञायते । ४. 'विङ्क्ते' इत्यपपाठः कर्नाटकलिप्यां मुद्रिते ।

५. 'वृङ्क्ते' इत्यपपाठः कर्नाटकलिप्यां मुद्रिते ।

२१. वृची हिंसायाम्—वृणक्ति, वृङ्क्ते[1]–हिनस्ति । वृक्तः, वृक्तवान्, वर्चनीयम्, वर्च्यम्–पञ्च मारणे । वृकः–श्वापदः ( 'भेड़िया' इति भाषायाम् ) । वर्चस्वी–तेजस्वी ।

२२. पृची सम्पर्के—मेलने । पृणक्ति, पृङ्क्ते[2]–मिलति । पृक्तः, पृक्तवान्, पक्ता, पर्चकः–चत्वारो मेलके । पृक्तिः, पृक्तम्, पर्चनम्, पर्चनीयम्, पर्च्यम्, पक्तव्यम्–षट् मेलने । अपृक्त एकवर्णः प्रत्ययः—एकवर्णः प्रत्ययः धातोरुत्पन्नः स्वार्थं प्रदाय लुप्यते[3] । क्विब्विणौ सर्वधातुभ्यः–सर्वधातुभ्यः क्विप् विण् इत्येतौ प्रत्ययौ भवतः । पाः, दाः, धाः, सोः, छत्, कृत्, जित्,[4] वाक्, भाक्, वात्, गात् ।

२३. ञिइन्धी दीप्तौ—प्रकाशे । इन्धे ( ?, इन्द्धे )–प्रकाशते । अग्नीत्–अग्निप्रज्वालकः । आग्नीध्रम्,[5]–अग्नीधः कार्यम् । इद्धः, इद्धवान्, इन्धकः–प्रकाशकः । इन्धनम्, इन्धनीयम्–प्रकाशनम् । इन्धनम्–प्रज्वालनीयं द्रव्यम् ( 'ईन्धन' इति प्रसिद्धम् ) ।

२४. खिद् दैन्ये—खिन्ते[6]–दीनो भवति ( दुःखी भवति ) । खेदानः, खेत्ता, खेदकः–त्रयो दुःखिनि । खेदः, खेदनम्, खेदनीयम्, खिन्नम्, खित्तिः–षट् दुःखे ।

२५. विद विचारणे—विन्ते[7]–विचारयति । वित्तः, वित्तवान्, वेदकः, वेदी, वेत्ता–पञ्च विचारके । वित्तम्–धनम् । वित्तिः, वेदनम्, वेदनीयम्, वेद्यम्–चत्वारो विचारणे । वेदः–विचारः ।

## [ इति नम्-विकरणो रुधादिगणः समाप्तः ]

---

१. 'विङ्क्ते' इत्यपपाठः कर्नाटकलिप्यां मुद्रिते ।

२. 'पृङ्क्ते' इत्यपपाठः कर्नाटकलिप्यां मुद्रिते ।

३. इयं वृत्तिः कर्नाटकवृत्त्यनुसारिणी वर्तते । सूत्रमिदमपृक्तसंज्ञाया विधायकम्, अपृक्तसंज्ञकस्य लोपविधायकं वेति सन्दिग्धम् । वयन्त्वनुमिनुमो यत् 'अपृक्त एकवर्णः प्रत्ययः' इत्यपृक्तसंज्ञाविधायकम् । यथा 'अपृक्त एकाल्प्रत्ययः' ( अष्टा० १।२।४१ ) इति पाणिनीयं सूत्रम् । अपृक्तस्य लोपविधायकं सूत्रं वृत्तौ नष्टम् । कर्नाटकवृत्तिस्तु लुप्तसूत्रस्य स्यात् ।

४. जित्पर्यन्तानि क्विप उदाहरणानि, उत्तराणि तु विणः । वात् गात् उदाहरणे वद गद धात्वोर्ज्ञेये ।

५. 'अग्नीध्रम्' इत्यपाठः कर्नाटकवृत्तौ । द्र० 'अग्नीधः शरणे रञ् भं च' इति वार्तिकम् ( ४।३।१२० ) ।

६. 'खिन्द्ते' अपपाठः कर्नाटकवृत्तौ । ७. विन्द्ते' अपपाठः कर्नाटकवृत्तौ ।

# अथ तनादि-गणः

## [ उ-विकरणः ]

१. तनु विस्तारे—वर्णने विस्तारे । तनादेरुविकरणः—तनु-प्रभृतिभ्यो धातुभ्य 'उ' विकरणो भवति सार्वधातुके परतः । तनोति, तनुते—सविस्तरं ब्रवीति । तन्वन्, तन्वानः, तन्तः, तन्तवान्, तन्ता—पञ्च, विस्तारके । तनयः—पुत्रः । तन्वी—कन्या । तनुः, तनूः—द्वौ शरीरे । तान्—सः (?) । तानम्, रागभेदः । तानकम्—शस्त्रविद्याभेदः । तन्तिः, तन्त्री—द्वौ तारे । तन्तुः—सूत्रम् । तन्तुवायः—ऊर्णनाभिः, वस्त्रवायकः ( जुलाहा ) । ततम्—तारवाद्यम् । विततम्—चर्मवाद्यम् । तान्तम्—चर्मवाद्यम्, एकान्तम् । ततिः—ऋतुकालः । तातः—पिता । तनिः—दुग्धस्नानम् । तनकम्—अवधिः । तननम्, तननीयम्, तन्यम्, तान्यम्, तन्तव्यम्—पञ्च विस्तरे । तत्, सः, सा—परोक्षवाचकाः । सन्तानः—कल्पवृक्षः । सन्तानम्, सन्ततिः—द्वावपत्ये । तन्त्रम्—आगमशास्त्रम् ।

२. णनु शङ्कायाम्[1]—विचारे । ननोति, ननुते—विचारयति । ननः, नन्तः, नन्तवान्, नन्ता, नान्—पञ्च विचारके । नाना—कुड्मलम् । ननु—प्रश्नार्थकोऽव्ययः । नानुः—कण्ठाभरणम् । नन्यम्, नान्यम्, नन्तिः, नन्तम्, नन्तव्यम्, नननम्, नननीयम्, ननकम्, नानकम्, नानम्—दश विचारणे ।

३. णीनु संबोधने—आमुखीभावे । नीनोति, नीनुते—अभिमुखं करोति । नीन्तः, नीन्तवान्, नीनः, नीन्, नीनुः, नीन्ता—षट् अभिमुखं कर्तरि । नीननम्, नीननीयम्, नीन्तव्यम्, नीन्यम्, नीन्तम्, नीन्तिः—षट् अभिमुखीकरणे ।

४. णूनु निश्चये—नूनोति, नूनुते—निश्चिनोति । नून्तः, नून्तवान्, नूनकः, नून्ता—चत्वारो निश्चेतरि । नूनम्, नूननम्, नूननीयम्, नून्तम्, नून्तिः, नून्तव्यम्, नून्यम्, नौन्यम्—अष्टौ निश्चये । नूना—तैलम् ।

५. षणु दाने—सनोति, सनुते—ददाति । सन्तः, सन्तवान्, सन्ता—त्रयो दातरि । सनकः, सनातनः, सनत्कुमारः, सनत्सुजातः—चत्वारो ब्रह्मणो मानस-

---

१. इत आरभ्य त्रीणि धातुसूत्राणि कातन्त्रे अन्येषु च तन्त्रेषु नोपलभ्यन्ते ।

पुत्रेषु। सन्तम्, सन्तिः, सननम्, सननीयम्, सन्यम्, सान्यम्, सन्तव्यम्, सनम्, सनी, सनुम्, सानम्—एकादश दानक्रियायाम्। सानुः—उपत्यका[1] ('तराई' इति भाषायाम्)। सानी—माता।

६. क्षणु क्षिणु हिंसायाम्—क्षणोति क्षणुते—हिनस्ति। क्षणिकः—घातकः। क्षणः—कालभेदः। क्षिणोति[2] क्षिणुते—ताडयति। क्षिणकः—ताडकः। क्षिणम्—ताडनम्।

७. ऋणु दुर्गतौ—दुर्गत्याम्। ऋणोति, ऋणुते—दुर्गच्छति। ऋणः—ऋणी। ऋणम्—अधमर्णाय प्रत्तं धनम्।

८. तृणु अदने—तृणोति, तृणुते—अत्ति। तृणकः—अत्ता। तृणम्—घासः।

९. घृणु[3] दीप्तौ—प्रकाशे। घृणोति, घृणुते—प्रकाशते। घृणकः—प्रकाशकः घृणः—प्रकाशः। घृणा—करुणा। घृणः—क्रिमी।

१०. चिणु शब्दे[4]—ध्वनौ। चिणोति, चिणुते—ध्वनिं करोति। चिणकः—ध्वनिता। चिण्, चिणी, चिणम्—शब्दः।

११. छिणु वीणारवे—वीणाशब्दे। छिणुति, छिणुते—वीणाशब्दयति। छिणन्, छिणानः, छिणकः—त्रयो वीणावादके। छिण्, छिणनम्, छिणनीयम्, छिणु, छिणि—पञ्च वीणानादे।

१२. घिणु छिङ्कध्वनौ[5]—घिणोति घिणुते—छिङ्कध्वनिं करोति। घिणकः—छिङ्कध्वनिकर्ता। घिण्, घिणः, घेणः—त्रयश्छिङ्कध्वनौ।

१३. घणु घण्टानादे—घणोति, घणुते—घण्टानाद इव ध्वनयति। घणन्, घणानः, घणकः—त्रयो घण्टानादकर्तरि।

१४. डुकृञ् करणे—करोति कुरुते—करति[6]। कुर्वन्, कुर्वाणः, कर्ता—त्रयः

---

१. सानुः—पर्वतश्रृङ्गम्।

२. इत आरभ्य चतुर्षु धातुषु गुणाभावं न सहन्ते पाणिनीयाः। अत्र माधवीया धातुवृत्तिरप्यवलोकनीया।

३. 'घृण' इति कर्नाटकलिप्यां मुद्रितेऽपपाठः, पूर्वोत्तरयोरुकारानुबन्धानां निर्देशात्। कातन्त्रेऽपि 'घृणु' इत्येव पाठः।

४. इत आरभ्य आकरोतेश्चत्वारो धातवः कातन्त्रपाठे अन्यपाठेषु च नोपलभ्यन्ते।

५. पूर्वोत्तरयोर्धात्वोरर्थनिर्देशादिह छिङ्कशब्दः कस्यचिद् वाद्यस्य शब्दविशेषकर्तुर्द्रव्यस्य वा वाचकः स्यात्।

६. कृञ् धातुर्भ्वादिकोऽपि। द्रष्टव्यमिह क्षीरतरङ्गिणी १।६३९; तत्रस्था चास्माकीना टिप्पणी (पृष्ठ १३०, अस्मत्संस्करणे)।

कारके। करी–हस्ती। करिणी, करेणुः–द्वौ हस्तिन्याम्। करः–हस्तम्, रश्मिः। कारुः, कारी, कारकः–त्रयः कर्तरि। करणम्–साधनम्। कारणम्–हेतुः। कृतिः–कर्म। कृतम्–समाप्तम्। कृत्यम्–कर्म। कार्यम्–प्रयोजनम्। कारितम्–निष्पादितं कर्म। कर्मन्–कर्तुः कर्म। आकारणा–आह्वानम्। आकारितम्–आहुतम्। आकृतिः, आकारः–द्वावाकारे। संस्कृतम्–सुरभारती। प्राकृतम्–सुरस्त्रीणां भाषा।

१५. वनु याचने—वनोति वनुते–याचते। वन्वन्, वन्वानः, वन्ता, वनकः–चत्वारो याचके। वननम्, वननीयम्, वन्तव्यम्, वन्तम्, वन्तिः–पञ्च भिक्षणे। वनम्–जलम्[1], अरण्यम्। वन्यम्–आरण्यं फलम्। वानम्–वर्षा। वनी–यानादिः। वानरः–कपिः।

१६. मनु अवबोधने—ज्ञाने। मनोति मनुते–जानाति। मन्वन्, मन्वानः, मन्ता, मनकः, मन्तः, मन्तवान्–षट् ज्ञातरि। मनुः–एतन्नामा पुरुषः, मन्त्रः। मन्त्रः–जपः। मन्त्री[2]–विचारकः। आमन्त्रणम्, आमन्त्रणीयम्–द्वौ अभिमुखीकरणे।

१७. यनु उद्धारे[3]—यनोति यनुते–उद्धरति। यन्वन्, यन्वानः, यनकः, यन्ता–चत्वार उद्धारके। यन्त्रम्[4]–उद्धरणम्। यन्त्रणम्–प्रेरणा। यानम्–वाहनम्।

१८. अनु धारणे—सहने। अनोति अनुते–सहते। अन्वन् अन्वानः, अनकः, अन्ता–चत्वारः सहनकर्तरि। अन्त्रम्–उदरावयवः ('आंत' इति भाषायाम्)।

१९. कनु[5] शोभायाम्—प्रकाशे। कनोति कनुते–प्रकाशते। कन्वन्,

---

१. अयं वैदिकोऽर्थः (निघ० १।१२)। वनस्पतिशब्दे सकारान्तो वनस्शब्दोऽपि जलनामा द्रष्टव्यः।

२. मन्त्रः, मन्त्री, आमन्त्रणम्, आमन्त्रणीयम्, एते शब्दा मन्त्रि गुप्तभाषणे इति चौरादिकस्येति पाणिनीयाः।

३. इत आरभ्य आगणान्ता धातवः कातन्त्रे अन्यपाठेषु च न पठ्यन्ते।

४. यन्त्रम्, यन्त्रणम् एते द्वे यत्रि संकोचने इत्यस्य चौरादिकस्येति पाणिनीयाः।

५. एतस्मादपि धातोः कन्याशब्दः, तदर्थकः कनीनाशब्दश्च ज्ञेयः। कनीनाया एवापत्यम् कानीनः। कनीनाशब्दोऽनार्येषु ईरानादिदेशवासिषु प्रयुक्त आसीत्, यथा कम्बोजवासिषु शवशब्दः (द्र० निरु० २।२॥ महा० पस्पशाह्निकम्)। अत एव पाणिनिना कानीनशब्दसाधुत्वप्रदर्शनाय 'कनीना'शब्दनिर्देशप्रसङ्गे कन्याशब्दो निर्दिष्टः, तस्य च कनीनादेशो विहितः (द्र० कन्यायाः कनीन च। अष्टा० ४।१।११६)। अत्रास्मदीयः 'सं०

कन्वानः, कन्ता, कन्तः, कन्तवान्–पञ्च प्रकाशके। कनकम्–सुवर्णम्। कन्तुः–अवधिः। कन्तिः–प्रकाशिका। कननम्, कननीयम्, कन्यम्, कन्यम्, कान्यम्, कानम्, कनम्–सप्त प्रकाशे।

[ इति उ-विकरणस्तनादिः समाप्तः ]

व्या० शास्त्र का इतिहास' नामा ग्रन्थो द्रष्टव्यः (भाग १, पृष्ठ ११, द्वि० सं)। अत्र पूर्वत्र २८ पृष्ठस्था द्वितीया टिप्पण्यपि द्रष्टव्या।

# अथ क्र्यादि-गणः

## [ ना-विकरणः ]

१. डुक्रीञ् द्रव्यविनिमये—मूल्ये । क्रीणाति–मूल्येन गृह्णाति । न आ ई आत्मनेपदे[1]—नाविकरणस्य आकारस्य ईकारो भवति आत्मनेपदे परतः । क्रीणीते–गृह्णाति । क्रीतः, क्रीतवान्, क्रयन्, क्रयमाणः, क्रेता–पञ्च विक्रेतरि[2] । क्रयः, क्रय्यः, क्रेयम्, क्रेतव्यम्, क्रयणम्, क्रयणीयम्, क्रीतम्, क्रीतिः–अष्टौ मूल्ये ।

२. प्रीञ् तर्पणे कान्तौ च—प्रीते प्रकाशे च । प्रीणाति, प्रीणीते–तर्पयति, प्रकाशते । प्रीतः, पीतवान्–द्वौ तर्पयितरि । प्रीतिः, प्रेमन्–द्वौ प्रेम्णि ।

३. श्रीञ् पाके—श्रीणाति, श्रीणीते–पचति । श्रीतः, श्रीतवान्–द्वौ पाकज्ञे । श्रीः, श्रीतम्, श्रीतिः, श्रयणम्, श्रयणीयम्–पञ्च पाके ।

४. स्कूञ् आच्छादने[3]—आवरणे । स्कूनाति, स्कूनीते–आच्छादयति । स्कूतः स्कूतवान्–द्वौ आच्छादके । स्कूतम्, स्कूतिः–द्वौ आच्छादनसाधने ।

५. षिञ् युञ् बन्धने—सिनाति, सिनीते–बध्नाति । सितः, सितवान्–द्वौ बन्धके । सितम्, सितिः–द्वौ बन्धने । युनाति, युनीते–अवरुणद्धि । युतः, युतवान्–द्वाववरोधके । युतम्, युतिः–अवरोधनम् ।

६. क्नूञ् शब्दे—ध्वनौ । क्नूनाति, क्नूनीते–शब्दं करोति । क्नूतः, क्नूतवान्–द्वौ शब्दकर्तरि । क्नूतम्, क्नूतिः–द्वौ शब्दने ।

७. मीञ् द्रूञ् हिंसायाम्—मीनाति, मीनीते हिनस्ति । क्तक्तवतू निष्ठा–क्तक्तवतू प्रत्ययौ निष्ठासंज्ञकौ भवतः । निष्ठायास्तो नः–निष्ठासंज्ञकयोः क्तक्तवतु-

---

१. इह 'क्र्यादेर्ना' इत्येवं नाविकरणविधायकं सूत्रं न निर्दिष्टं कर्नाटकवृत्तिकृता, यद्वा कोशे लुप्तं स्यात् । 'आत्मनेपदे' इति न सूत्रांशः प्रतीयते । तथा सति 'क्रीणीतः' इत्यादिषु परस्मैपदेषु कथमीकारादेशः स्यात् । तस्मात् सूत्रस्य अर्थतोऽयं निर्देशः प्रतिभाति । सूत्रे 'नः' षष्ठ्येकवचनम्, 'आ' प्रथमैकवचनम् ( स्थानी प्रथमया निर्दिश्यते ) ।

२. अत्र पाठः भ्रष्टः स्यात् । नैव पूर्वोदाहृता विक्रेतरि प्रयुज्यन्तेऽपि तु क्रेतरि । विक्रयेऽर्थे विपूर्वोऽयं धातुः प्रयुज्यते ।

३. 'स्कुञ् आप्लवने' इति कातन्त्राः । 'आप्रवणे' इति पाणिनीयाः ।

प्रत्यययोः तकारस्य नकारो भवति। मीनः[1]–मत्स्यः। मीनवान्–हिंसकः। मीनम्, मयनम्, मयनीयम्–त्रयो हिंसने। द्रूणाति, द्रूणीते–ताडयति। द्रूणः, द्रूणवान्–द्वौ ताडयितरि। द्रोणः–पर्वतः, मुनिः, सस्यविशेषः।

८. पूञ् पवने–उत्पवने प्वादेर्ह्रस्वः–पूञ् प्रभृतीनां ह्रस्वो भवति। पुनाति, पुनीते–पवित्रो भवति। पूतः, पुनीतः, पूतवान्–त्रयो ब्राह्मणे, पवित्रे। पवमानः–वायुः। पविः–वज्रायुधम्। पवित्रम्, पावनम्–द्वौ पावने। पूतिः–पवित्रम्। पवनः–वायुः। पविता–शोभनः, शुद्धः। पवित्री–शोभना, शुद्धा। पावकः–अग्निः।

९. लूञ् छेदने—विकर्तने। लुनाति लुनीते–कृन्तति। लूनः, लूनवान्–द्वौ छेत्तरि। लूतः–ऊर्णनाभिः (मकड़ी इति भाषायाम्)। लावकः–छेदकः। लवित्रम्–कर्तनसाधनम्। लवनम्, लवनीयम्, लव्यम्, लाव्यम्–चत्वारो विकर्तने। लवः–अल्पम्। लावलिः, लवली–लताविशेषः। लवणम्–क्षारम् ('नमक' इति भाषायाम्)। लावणकम्–लावणी (?)।

१०. स्तृञ्[2] (?) आप्रवणे—पूरणे। स्तृणाति, स्तृणीते–पूरयति। स्तृणः, स्तृणवान्–द्वौ पूरयितरि। आस्तरणम्, आस्तरणीयम्, आस्तीर्णम्–त्रयो विष्टरे। स्त्री–नारी।

११. कॄञ् हिंसायाम्—कृणाति, कृणीते[3]–हिनस्ति। कृणः, कृणवान्[4]–द्वौ हिंसके। खरीरम् (?, करीरम्)–(?) [वृक्षविशेषः]। करभः–हस्तस्य मूलप्रदेशः।

१२. वृञ् वरणे—आवरणे। वृणाति, वृणीते[5]–आवरयति। वृणः, वृणवान्[6]–द्वौ आवृते। य्वॄणां यवराः—इ ई उ ऊ ऋ ॠ ऌ ॡ[7] एतेषां स्थाने य व र इत्येते भवन्ति। व्रातः समूहः

---

१. न मत्स्यार्थको मीनशब्दः क्तप्रत्ययान्तः, अपि त्वौणादिको नक्प्रत्ययान्तः। वृत्तिकृदत्र भ्रान्तः।

२. कातन्त्रे धातुपाठेऽन्यत्र च 'स्तृञ् आच्छादने' इति पाठः। परन्त्विहोदाहरणेऽपि 'स्तृणः स्तृणवान्' इत्येव पठ्यते। दीर्घान्तस्य 'स्तीर्णः स्तीर्णवान्' पाठेन भाव्यम्। यद्वोभयत्र पाठाशुद्धिः स्यात्। ३. कन्नडवृत्तौ 'कृणाति कृणीते' इत्यपपाठौ।

४. 'कीर्णः कीर्णवान्' इति शुद्धौ पाठाविहोभौ।

५. कन्नडवृत्तौ 'वृणाति वृणीते' इत्यपपाठौ।

६. इहापि पूर्ववत् 'वीर्णः वीर्णवान्' इति शुद्धौ पाठावूह्यौ।

७. इह 'ऌ ॡ' इत्यनयोः ग्रहणं चिन्त्यम्, सूत्रे तयोरनिर्देशात्।

१३. धूञ् कम्पने—धुनाति धुनीते—कम्पते। धूतः, धूतवान्, धवः, धावकः, धवन्, धवानः, धविता—सप्त कम्पितरि। धवनम्, धवनीयम्—कम्पनम्। अवधूतः—वर्णाश्रमविवर्जितः संन्यासी।

१४. ग्रह उपादने—स्वीकारे (ग्रहणे)। यवराणां य्वृतः य व र एतेषां स्थाने इ उ ऋ इत्येते भवन्ति। गृह्णाति, गृह्णीते—स्वीकरोति (पकड़ता है)। ग्रहादेरीट्—ग्रहप्रभृतीनाम् ईट् आगमो भवति। गृह्णन्, गृहीता (?, ग्रहीता), ग्राहकः—स्वीकर्ता। ग्रहः—नक्रः, भूतः (विषम्), ग्रहणम्। ग्रहणम्—ग्रहण-नाम्ना प्रसिद्धम् (सूर्यचन्द्रयोर्बिम्बाच्छादनम्), स्वीकरणम्। गृहाः पुंसि च भूम्न्येव—गृहशब्दः [दारार्थकः] पुँल्लिङ्गो बहुवचन एव भवति [—गृहाः—दाराः]। गृहीतम्, ग्राह्यम्, ग्राह्यम्, गृहीतव्यम् (?, ग्रहीतव्यम्), ग्रहणीयम्—पञ्च ग्रहणे।

१५. शॄ सॄ हिंसायाम्—मारणे शृणाति, शृणीते—मारयति। शरभः—अष्ट-पात् प्राणिविशेषः, वीरभद्रावतारः। (शृणाति मारयति[1]) शर्वः—अपांपतिः शिवः। शरम्—दर्भः, इषुः। शर्वाणी—हिंसिका, शङ्करी। ॠत ईर्—ॠकारस्य 'ईर्' भवति। शीर्णम्—विकर्तनम्। शरीरम्—देहः। शीर्यम्—विकर्तितुं योग्यम्। शरणम्—ग्रहः (?, गृहः), आश्रयः। शरण्यम्, शरणीयम्—द्वौ रक्षणयोग्ये। शॄदेर्वः—शृ (?, शॄ) प्रभृतिभ्यो 'व' प्रत्ययो भवति—[शर्वः।] सृणाति, सृणीते—अत्ति। सरभः मृगविशेषः ('गैंडा' इति भाषायां प्रसिद्धः)। सर्वः—भक्षकः। सरणम्, सरणीयम्, सर्यम्, सार्यम्, सरीरम्—षट खाद्ये।

१६. पॄ पालनपूरणयोः—रक्षणे भरणे च। पृणाति, पृणीते—पालयति, पूरयति। ॠत ऊर्[2]—ॠकारस्य 'ऊर्' भवति। पूर्तम्, पूर्तिः, पूरणम्, पूरणीयम्, पूर्तव्यम्, पूर्वम्, पूर्णम्—सप्त भरणे (पूरणे)। पूर्तः, पूर्तवान्, पूरः, पूरकः, परः, पराणः—षट् पूरके। परीतः—रक्षकः। विपरीतः—निर्दयः।

---

१. कोष्ठान्तर्गतः पाठो निरर्थकः, पूर्वत्र पठितत्वात्।

२. पूर्वत्र (९।१५ धातुसूत्रव्याख्याने) 'ॠत ईर्' सूत्रं पठ्यते, इह 'ॠत ऊर्' इति। क 'ईर्' भवति क च 'ऊर्' इति नाभ्यां सूत्राभ्यां ज्ञायते। अन्ये वैयाकरणास्त्विह यथायोग्य-मादेशविधानार्थम् 'ॠत ऊर्' आदेशविधायके सूत्रे 'ओष्ठ्यपूर्वस्य' इत्यनेन विशेषयन्ति ॠकारम्, अर्थात् ओष्ठ्यपूर्वकस्य ॠकारस्य 'ऊर्' आदेशो भवति, अन्यत्र च 'ईर्' इति। काशकृत्स्नसूत्रेऽपि तादृशविशेषणेनावश्यं भाव्यम्, वृत्तिकृता सोंऽशः परित्यक्तः स्यात्। इह १।२१ सूत्रव्याख्याने उद्धृते सूत्रे अपि द्रष्टव्ये।

१७. व्ली वॄ[1] वरणे—आवरणे । व्लिनाति[2]—आवरयति । व्लीतः, व्लीतवान्, व्लयन्, व्लयः, व्लायः, व्लायी—षट् आवरके । व्लयनम्, व्लयनीयम्, व्लीतम्, व्लीतः—पञ्च आवरणे । वृणाति—आवेष्टयति । वृतः, वृतवान्,[3] वूरः, वूरकः, वरन्—पञ्च आवेष्टके । वूरणम्, वूरणीयम्, वूर्यम्, वृर्तम्, वूर्तिः, वूर्णम्—षट् आवेष्टने ।

१८. भॄ भर्त्सने—निन्दायाम् । भृणाति—निन्दति । भूर्तः, भूर्तवान्, भूः, भोरकः—चत्वारो निन्दके । भृतम्[4], भृतिः, भूर्णम्, भूरणम्, भूरणीयम्, भूर्यम्—षट् निन्दायाम् । भूरी (? भूरि)—बृद्धम् अधिकम् ।

१९. दॄ विदारणे—विकर्तने (चीरने में) । दृणाति—विदारयति । दूर्तः दूर्तवान्[5]—द्वौ विदारके । दूरम्—विप्रकृष्टम् । दूर्तम्, दूर्तिः, दूरणम्, दूरणीयम्, दूर्यम्[6]—पञ्च विदारणे ।

२०. जॄ वयोहानौ—वृद्धत्वे । जृणाति—जीर्णो भवति । जीर्णः, जीर्णवान्, जरणः—जरिता । जूर्तम्, जूर्तिः, जूरणम्, जूरणीयम्, जूर्यम्,[7] जरा, जरस्—सप्त जीर्णभावे ।

२१. नॄ नये—चलने गतौ । नृणाति—चलति । नरन्, नर्ता, नॄ, नरः—चत्वारो गन्तरि । नरी, नारी—गन्त्री । नर्तव्यम्, नरणम्, नरणीयम्, नर्यम्, नार्यम्, नारम्—षट् गमने ।

२२. गॄ शब्दे—ध्वनौ । गृणाति—शब्दयति । गर्गन् (?), गर्ता—शब्दयिता । गरम्—विषम् । गीर्णम्, गूर्णम्, गूरणीयम्, गूर्यम्, गूरम्—पञ्च शब्दने । आगरम्—सार्वत्रिकः शब्दः ।

---

१. 'व्ली वॄ' इति कातन्त्रीया अन्ये च वैयाकरणाः । उत्तरत्रापि सर्वत्रोदाहरणेषु 'व' ओष्ठ्यस्थाने दन्त्योष्ठ्यो, वकारो द्रष्टव्यः । माधवीयधातुवृत्तौ 'ब्ली' इति पवर्गवान् पाठ मुद्रणदोषजः ।

२. श्रौतसूत्रेषु 'व्लीनाति' इति दीर्घपाठोऽपि दृश्यते (आप० १४, १२, ६; हिर० १०, ६, ६) । एवं चोभयथा पाठदर्शनात् व्लि, व्ली इति द्वौ धातू इह द्रष्टव्यौ । यथा पूञ् पवने इत्यादि धातूनां दीर्घस्वरनिर्देशाद् दीर्घवन्ति रूपाणि ह्रस्वविधानाद् ह्रस्ववन्ति चोभयथा रूपाणि द्रष्टव्यानि ।

३. पूर्ववद्द्विभावपपाठौ ।

४. 'भृतम्' आदि रूपाणां साधुत्वं विचारणीयम् ।

५. ऊत्वं कथम् ? दीर्णः दीर्णवान् इति पाणिनीयाः ।

६. एतेषामपि साधुत्वं चिन्त्यम् ।

७. अनयोः साधुत्वं चिन्त्यम् ।

२३. ज्या वयोहानौ—वृद्धत्वे। ज्यानाति—जीर्णो भवति। ज्यायान्, ज्येष्ठः—द्वौ वृद्धे। ज्या—रज्जुः, प्रत्यञ्चा ('चिल्ला' इति भाषायाम्)। ज्यानम्, ज्यानीयम्—द्वौ प्राचीने जीर्णे।

२४. ऋ गतौ—ऋणाति—गच्छति। ऋतः, ऋतवान्—द्वौ गन्तरि। ऋतम्, ऋतिः—द्वौ गमने। निर्ऋतिः—दिक्पालकः।

२५. री रेषणे—आदाने। रीणाति—आदत्ते। रीतिः (?, रीतः), रीतवान्—द्वौ आदातरि। रीतम्, रीतः—द्वौ आदाने।

२६. ली श्लेषणे—कष्टे। लीनाति—कष्टयते। लीतः, लीतवान्—द्वौ परिश्रमिणि। लीतम्, लीतिः—द्वौ कष्टे।

२७. व्री वरणे—आवरणे व्रीणाति—आच्छादयति। व्रीतः, व्रीतवान्=द्वौ आवारके। व्रीतम्, व्रीतिः—द्वौ आवरणे।

२८. भ्री भरणे—रक्षणे। भ्रीणाति—रक्षति। भ्रीतः, भ्रीतवान्—द्वौ रक्षके। भ्रीतम्, भ्रीतिः—द्वौ रक्षणे।

२९. णभ तुभ क्षिप हिंसायाम्—मारणे। नभ्नाति, नभ्नीते—मारयति। नभस्—आकाशः। नभस्वान्—मेघः। नभोलिप्सुः—शतरुद्रेष्वेकतमः। तुभ्नाति, तुभ्नीते—ताडयति। तुब्धः, तुब्धवान्—द्वौ ताडयितरि। तुब्धम्, तुब्धिः—द्वौ ताडने। क्षिप्नादीनां[1] न नो णः—क्षिप्ना-प्रभृतीनां नकारस्य णकारो न भवति। क्षिप्नाति, क्षिप्नीते—कम्पते चलति। क्षिप्तः, क्षिप्तवान्—द्वौ कम्पके। क्षिप्तम्, क्षिप्तिः—द्वौ कम्पने।

३०. क्षुप गर्वे—क्षुप्नाति, क्षुप्नीते—गर्वति। क्षुपः—सूर्यवंशस्य एको राजा।

३१. ज्ञा अवबोधने—ज्ञाने। ज्ञाजनोर्जा—ज्ञा॰ जन इत्येतयोः 'जा' [आदेशो] भवति। जानाति, जानीते—अवबुध्यति। जातः, जायमानः—अवबोधकः, उत्पन्नः। ज्ञाता—अवबोद्धा। ज्ञानम्, ज्ञेयम्—द्वौ ज्ञातुं योग्ये। ज्ञातव्यम्—ज्ञातुं योग्यम्।

३२. बन्ध बन्धने—बध्नाति बध्नीते—निगृह्णाति। बद्धः, बद्धवान्, बन्धकः—त्रयो निग्रहीतरि। बन्धनम्, बन्धनीयम्, बद्धम्, बद्धिः, बन्धनम्, बन्धः—सप्त निग्रहणे।

---

१. श्नाविकरणेन निर्देशः। तुलना कार्या 'क्षुभ्नादिषु च' (८।४।३९) इति पाणिनीयेन सूत्रेण सह।

३३. श्रन्थ विमोचनप्रतिहर्षणयोः—मुक्तौ दुःखे (?) च। श्रथ्नाति श्रथ्नीते—मुञ्चति दुःख्यति। श्रन्थकः, श्रन्थानः—द्वौ बन्धके, दुःखिनि। श्रन्थम्, श्रन्थनीयम्—द्वौ बन्धने।

३४. मन्थ विलोडने—मन्थने। प्रकर्षेण मथ्नातीति प्रमथः[1]—शिवगणः। मदा मथ्नातीति मन्मथः—कामः। मथनम् मथनीयम्—मन्थनकर्मणि।

३५. ग्रन्थ सन्दर्भे—संयोजने। ग्रथ्नाति—संयोजयति। ग्रन्थिकः[2]—संयोगः। ग्रन्थः—पद्यम्। ग्रन्थिः—संयोजिका ('गाँठ' इति भाषायां प्रसिद्धा)।

३६. कुथ संक्लेषे—दुःखे। कुथ्नाति—दुःख्यति। कुथः, कोथम्, कोथकः—दुःखी। कोथनम्, कोथनीयम्—द्वौ दुःखे।

३७. मृद क्षोदे—मर्दने। मृद्नाति—क्षोदयति। मर्दन्, मर्दकः—द्वौ क्षोदके। मृत्, मर्दनम्, मर्दनीयम्—त्रयो क्षोदने (मर्दने)।

३८. गुध रोषे—कोपे। गुध्नाति—रुष्यति, कुप्यति। गोधन्, गोधकः—द्वौ कोपके। गोधनम्, गोधनीयम्—द्वो कोपने। गोधा, गोधिका—द्वौ सरटि। गौधेरः—सरट्।

३९. कुष निष्कर्षे—बहिष्कारे। कुष्यति—बहिः करोति (पृथक् करोति)। कोषन्, कोपकः, कुष्टः, कुष्टवान्—चत्वारो बहिष्कर्तरि। कुष्ठम्—[रोगविशेषः। कुष्ठी—] कुष्ठरोगवान्। कोष्ठम्—गृहाभ्यन्तरभागः (कमरा इति भाषायाम्)। प्रकोष्ठः—हस्तावयवः (कोहनी इति प्रसिद्धः)।

४०. क्षुभ संचलने—कम्पने। क्षुभ्नाति—कम्पते। क्षोभन्, क्षोभकः—द्वौ कम्पितरि। क्षोभः, क्षोभा, क्षुब्धम्, क्षुब्धिः—चत्वारो कम्पने।

४१. क्लिश विबाधने—कष्टे। क्लिश्नाति—दुःख्यति। क्लेशन्, क्लेशकः—कष्टं प्राप्तः। क्लिष्टम्, क्लिष्टिः, क्लेशः, क्लेशनम्, क्लेशनीयम्—पञ्च कष्टे।

४२. अश भोजने—अदने। अश्नाति—अत्ति। अश्यन्, अशकः—द्वौ भोजके। अशनम्, अशनीयम्, अष्टम्, अष्टिः—चत्वारो भक्षणे। समष्टिः—शोभनं भोजनम्। अष्टन्, अष्टकम्—अष्ट संख्या।

४३. उध्रस उञ्छे—एकैकश आदाने निर्धारणे। उध्रस्नाति—निर्धारयति।

१. सर्वत्र नकारलोपः कथमिति नोक्तं वृत्तिकृता।

२. ग्रन्थमधीते वेद वा सोऽपि ग्रन्थिकः।

भ्रष्नन्, भ्रषकः—निर्धारयिता। भ्रष्टिः, भ्रषणम्, भ्रषणीयम्—त्रयः निर्धारणे। भ्रष्टतण्डुलमारः—निर्धारिततण्डुलविक्रेता (?)।

४४. इप आभीक्ष्ण्ये—निरन्तरं दर्शने। इष्णाति—निरन्तरं पश्यति। इष्टः, इष्टवान्, एषकः—निरन्तरं द्रष्टा। इष्टम्, इष्टिः, एषणम्, एषणीयम्—नैरन्तर्येण दर्शने।

४५. विष विप्रयोगे—पार्थक्ये। विष्णाति—पृथग् भवति। विष्टः, विष्टवान्, वेषकः—त्रयः पृथक्कर्तरि। विषम्—गरलम्, जलम्। वेषः, वेषणम्, वेषणीयम्—त्रयः पृथग्भावे।

४६. प्रुष प्लुष स्नेहसेचनपूरणेषु—तैलक्रियायां, संघर्षे, भरणे च। प्रुष्णाति—स्निग्धो भवति, संघर्षति, भरति। प्रोषकः, प्रुष्टः, प्रुष्टवान्—त्रयः स्नेहके, संघर्षके, भारके च। प्रुष्टम्[1]—पृष्ठभागः[1]। प्रुष्टिः, प्रोषणम्, प्रोषणीयम्—स्नेहने। प्लुष्णाति—संघर्षति। प्लुष्टः, प्लुष्टवान्, प्लोषकः—त्रयः संघर्षके। प्लुष्टम्, प्लुष्टिः, प्लोषणम्, प्लोषणीयम्—चत्वारः संघर्षणे।

४७. पुष पुष्टौ—रक्षणे। पुष्णाति—रक्षति। पुष्टः, पुष्टवान्, पोषकः—चत्वारः रक्षके। पुष्टम्, पुष्टिः, पोषणम्, पोषणीयम्—चत्वारो रक्षणे। पूषन्—सूर्यः।

४८. मुष स्तेये—चौर्ये। मुष्णाति—चोरयति। मूषिकः—उंदरः[2]। मूषा—(?) (सुवर्णादीनां द्रवीकरणपात्रम्)। मुष्टिः—बद्धाङ्गुलिहस्तः। मुष्टम्, मोषः, मोषणम्, मोषणीयम्—चत्वारश्चौर्ये। मुष्णतां पतये नमः (यजुः० १६।२१) चोराणां नायकाय नमस्कारः।

४९. खव पूतिप्रादुर्भावे—दुर्गन्धे। खव्नाति—दुर्गन्धयुक्तो भवति। खौनीतः (द्विवचनम्), खौनन्ति (बहुवचनम्)। खौनन्, खवकः—द्वौ दुर्गन्धयुक्ते। खवनम्, खवनीयम्—द्वौ दुर्गन्धीभावे।

## [ इति ना-विकरणः क्र्यादिः समाप्तः ]

---

१. दाक्षिणात्याः पृष्ठशब्दं प्रुष्टध्वनिसदृशमुच्चारयन्ति किं तन्निमित्तकोऽयमपशब्द उत साधुशब्दः स्वतन्त्र इति विचारणीयम्।

२. साधुशब्दोऽयं कोशेषु निदर्शितत्वात्।

# अथ चुरादिगणः

## [ इन्-विकरणः[1] ]

१. चुर स्तेये—मोषणे ( चौर्ये )। चुरादेरिन् स्वार्थे—चुरप्रभृतिभ्यो धातुभ्यः 'इन्' विकरणो[1] भवति स्वार्थे। चोरयति—मुष्णाति। चोरः, चौर्यम्—द्वौ चुरायाम्।

[ हिंसार्थाः ] सर्वे हिंसार्थाश्चुरादौ परस्मैपदिनो ज्ञेयाः[2]।

२. चिति स्मृत्याम्—चिन्तयति—स्मरति। चिन्तन्, चिन्तकः—स्मर्ता।

३. यत्रि संकोचने—यन्त्रयति—संकुचति (गोपयति)। यन्त्रकः—संकोचकः ( गोपकः )। यन्त्रः, यन्त्रणम्, यन्त्रणीयम्—संकोचनम् ( गोपनम् )।

४. तत्रि[3] दर्शनीये—तन्त्रयति—दर्शयति। तन्त्रकः—दर्शकः। तन्त्रम्, तन्त्रणम्, तन्त्रणीयम्—त्रयो दर्शने।

५. अत्रि जीवने—अन्त्रयति—जीवति। अन्त्रकः—जीवकः। अन्त्रम्—शरीरैकदेशः ( आँत इति भाषायाम् )। अन्त्रणम्, अन्त्रणीयम्—जीवनम्।

६. कत्रि उपाये—चातुर्ये। कन्त्रयति—चतुरो भवति। कन्त्रकः—चतुरः। कन्त्रणम्, कन्त्रणीयम्—द्वौ चातुर्ये।

७. जत्रि सूचने—जन्त्रयति—सूचयति। जन्त्रकः सूचकः। जन्त्रम्, जन्त्रणम्, जन्त्रणीयम्—सूचना।

---

१. अयम् 'इन्' न विकरणः, अपितु स्वार्थिकः प्रत्ययः इति पाणिनीयाः प्राहुः। चुरधातावुदाहृतेन सूत्रेणापि तथैव प्रतीयते, तथापि कर्नाटकटीकानुसारमयं निर्देशः कृतः।

२. कर्नाटकटीकायां 'सर्वे…ज्ञेयाः, पाठः सूत्ररूपेणोदाहृत्य व्याख्यातः। वस्तुतोऽयं वृत्तिपाठः। अत एवानिर्दिष्टमपि सूत्रमस्माभिरूहित्वा [ ] कोष्ठके निर्दिष्टः। पाणिनीयाः 'हन्त्यर्थाः' ( क्षीरतरङ्गिणी १०।१६९ ) इत्येवं सूत्रं पेठुः। कातन्त्रीया अपि उत्तरत्र 'घट संघाते' इत्यनन्तरं 'हन्त्यर्थाश्च' इति सूत्रं पठन्ति। कर्नाटकवृत्तिकारोऽपि तथैव ( द्र० सूत्र-संख्या १५७ ) पुनरिमामेवानुपूर्वीमुद्धार। एतेनेह पाठोऽप्रासङ्गिक इति स्पष्टं प्रतिभाति। अत एवास्माभिरिह सूत्रसंख्या न निर्दिष्टा।

३. इमं धातुं कातन्त्रीयाः पाणिनीयाश्चेह न पेठुः। अग्रे 'तत्रि कुटुम्बधारणे' इत्येवं पठन्ति। कन्नडवृत्तिकारोऽपि तत्र पठिष्यति।

८. तित्रि आम्लकरणे—अम्लीभावे। तिन्त्रयति—अम्लीभवति। तिन्त्रकः—अम्लः। तित्रिणी—तिन्तिडीका ( इमली इति भाषायाम् )।

९. स्फुट परिहासे[१]—हास्ये। स्फुट्यति[२]—हसति। स्फोटन्—हसिता। स्फोटा—हसनम्।

१०. लक्ष दर्शनाङ्कनयोः—दर्शने च। लक्षयति—पश्यति, चिह्नयति। लक्षेर्मीमन्मनाः—लक्षेर्धातोः मी मन् मन इत्येते प्रत्यया भवन्ति। लक्ष्मीः—क्षीरसागरकन्या। लक्ष्मन्—चिह्नम्। लक्ष्मणः—एतन्नामा पुरुषः ( राम-भ्राता )। लक्षम्—शतसहस्रम्। लक्षणम्—चिह्नम्। लक्षणीयम्—परिचयनीयम् ( पहचानना चाहिए )। लक्ष्यम्—लक्ष्यम्। लक्षितम्—परिचितम्। लक्षयितव्यम्—परिचयनीयम्। अलक्ष्मीः—दारिद्र्यम्।

११. भक्ष अदने—भक्षयति—अत्ति। भक्षन्, भक्षकः—द्वौ अत्तरि। भक्षितम्, भक्षणम्, भक्षणीयम्, भक्ष्यम्—चत्वारः खाद्ये पदार्थे।

१२. कुक्ष अवकाशे—कुक्षयति—अवकाशमुत्पादयति ( रिक्तीकरोति )। कुक्षिः—उदरम्।

१३. कुडि अनृतभाषणे—असत्यवदने। कुण्डयति—मिथ्यावदति। कुण्डः—जारजः पुत्रः। कुण्डम्—कूपः, अग्निकुण्डम्, मृत्पात्रम् ( कूंडा इति भाषायाम् )। कुण्डा—गुदद्वारम्। कुण्डिका—कमण्डलुः। कुण्डलम्—कर्णाभरणम्। कुण्डली—सर्पः। कुण्डलिनी—जीवाधारशक्तिः।

१४. लड उपसेवायाम्—कार्यान्त्ये। लडयति[३]—कार्यं समापयति। लडन्, लडः, लडकः—त्रयः कार्यसमापके। लाडः—नगरम्। लाडुः—यवनः। लाडी—लाडी (?)।

१५. मिद तिल स्नेह स्नेहने—मेदयति—स्निह्यति। मेदिनी—पृथिवी। मेदस्—मेधा ( ?; शारीरो धातुविशेषः )। मेदुरम्—मृदु। मेदिः—संघर्षणम् ( टकराना )। मिदुः—शनैः। मिद्या—गन्तव्यस्थानम् ( 'मञ्जिल' इति लोके )। तैल्यति—स्निह्यति। तिलः—धान्यम्। तिलकः—चिह्नम्। तैलम्—तिलानां स्नेहः।

---

१. स्फडि परिहासे इति कातन्त्राः। स्फुटि इति दुर्गं इति क्षीरस्वामी (क्षीरत० १०१४)। स्फुडि इति पाणिनीयाः। इहापि स्फुटि इति शुद्धः पाठः स्यात्। तथोदाहरणे 'स्फुण्टयति, स्फोण्टन्, स्फोण्टा' इत्येवं पाठो द्रष्टव्यः।

२. अत्र पूर्वा प्रथमा टिप्पणी द्रष्टव्या।

३. 'लाडयति' इति पाणिनीयाः।

तैलिकः–तैलोत्पादकः (तेली इति भाषायाम्)। स्नेहयति–मेदयति। स्नेहः–तैलम्।

१६. जल अपवारणे—तृषानाशने। जलयति[1]–तृषां शमयति। जलम्–पानीयम्। जलकम्–स्नानम्। जालम्–आनायः (मत्स्यादीनां निग्राहकः)। जालकारः–मत्स्यहा (मछुआ इति भाषायाम्)। जालः–वृक्षः। जालिः–अवलम्बनम्। जलूकः–(?) (जौंक इति भाषायां प्रसिद्धः क्षुद्रप्राणी)।

१७. ओलडि उत्क्षेपे—ओलण्डयति –[ उत्क्षिपति ]। ओलण्डः–उत्क्षेपकः ]।

१८. पीड अवगाहने—बलात्कारे। पीडयति–बलात् पीडां ददाति। पीडन्, पीडकः–द्वौ पीडादातरि। पीडा, पीडनम्, पीडनीयम्–त्रयो बलात्कारे।

१९. णथ अवस्कन्दने[2]–कम्पने (?)। नथादेरिनि दीर्घः–नथ प्रभृतीनां दीर्घो भवति इनि परतः। नाथयति–कम्पते। नाथः–कम्पकः। नथनम्, नथनीयम्–द्वौ कम्पने।

२०. श्रन्थ[3] प्रतिहर्षे—श्रमे। श्रन्थयति–श्राम्यति (थकता है)। श्रन्थः, श्रन्थकः–द्वौ श्रमके (थकने वाले में)। श्रन्थनम्, श्रन्थनीयम्–द्वौ श्रमे (थकने में)।

२१. बध संयमने—निश्चये (?)। बाधयति–निश्चिनोति। बद्धम्, बद्धिः–द्वौ निश्चितीकरणे।

२२. पृ पूरणे—भरणे। पूरयति–भरति। पूरितः, पूर्णः–द्वौ पूरयितरि। पूरणम्, पूरणीयम्–द्वौ–भरणे (पूरणे)।

२३. ऊर्ज बलप्राणनयोः—बले चैतन्ये च। ऊर्जयति–बलयति (बलयुक्तं करोति)। ऊर्जितः, अर्जितवान्, उर्जस्वी–त्रयो बलवति। ऊर्क्, ऊर्जितम्, ऊर्जन्, ऊर्जनम्, ऊर्जनीयम्, ऊर्जस्–षट् शक्तौ।

२४. चुट छुट कुट कुठ छेदने—विदारणे। चोटयति–विदारयति। चोटन्, चोटकः–विदारकः। चोटनम्, चोटनीयम्–विदारणम् विभजनम्। पञ्चोटी–प्रावारः ('ओढनी' इति भाषायाम्)। चोटिका–महती कोथली। चोटुः–एका वितस्ता (?)। चोटिः–सन्धानम् (?)। छोटयति विभजति।

---

१. 'जालयति' इति पाणिनीयाः।

२. 'नट अवस्यन्दने' इति कातन्त्रीया अन्ये च वैयाकरणाः।

३. 'श्रथ' इति कातन्त्रीया अन्ये च।

छोटन्, छोटकः—द्वौ विभक्तरि। छोटनम्, छोटनीयम्—विभजनम्। कोट्यति—मध्यतः पोलयति ('खोखला करता है' इति भाषायाम्)। कोटन्, कोटकः—सारहीनः। कोटनम्, कोटनीयम्—सारवर्जितम्। कोटरम्—पक्षिनीडम्। कोटीरम्—(?)। कोटिः—शतलक्षम्। कोटा—दुर्गा। कुटी—कुटीरः। कुटिला—गङ्गा। कुटिलः—(घुंघराले बाल)। कोठयति—विकर्तयति। कोठन्, कोठकः—द्वौ विकर्तके। कोठनम्, कोठनीयम्—द्वौ विकर्तने। कुठारः—परशुः।

२५. पुट्ट चुट्ट अल्पीभावे—अल्पतायाम्। पुट्टयति—अल्पं भवति लघयति। पुट्टः—लघुः। पुट्टी—लघ्वी। पुट्टनम्—('पुड़िया' इति भाषायाम्)। पुट्टा—उदरम्। चुट्टयति—वेष्टयति। चुट्टकः—वेष्टकः।* चुट्टः—समीपगमनम्। चुट्टः—बन्धुः। चुट्टा—नीचैरवतरणम्।

२६. मुट मुट्ट संचूर्णने—मोटयति—चूर्णयति। मोटः—चूर्णयिता। मोटी—चूर्णयित्री। मोट्टः—अङ्गहीनः। मोटनम्, मोटनीयम्—चूर्णनम्। मुट्टयति—स्पृशति। मुट्टः—स्पर्शकः। मुट्टुः—सूतिका। मुट्टनम्—स्पर्शनम्।

२७. स्मिट्ट[1] अट्ट पुट्ट अनादरे—स्मेटयति[1]—अनादरयति। स्मेटन्[1], स्मेटकः[1], स्मेटः[1]—त्रयोऽनादरके। स्मेटनम्, स्मेटनीयम्—द्वौ अनादरे। अट्टयति—अस्वादु भवति। अट्टम्—अस्वादु-भवनम्। पुट्टयति—रोचते। पुट्टम्—शाकम्।

२८. घट्ट, छुट्ट चलने—कम्पने। घट्टयति—कम्पते। घट्टः—मेघः। घट्टनम्, घट्टनीयम्—कूपोपरि परितो निर्मितं स्थलम्। छुट्टयति—क्षुभ्यति। छट्टः,[2] छट्टा,[2] छट्टिः[2], छटिः[2]—कूपं परितो भित्तिः।

२९. छद संवरणे—आच्छादने। छादयति—संवृणोति। छदन्, छादकः—द्वौ संवारके। छदः—लघुः (?, आवरकः)। छदन्—कपटम्। छत्रकम्—राज्ञः श्वेतं छत्रम्। छात्रः—शिष्यः। आच्छादनम्, आच्छादनीयम्—द्वौ संवरणे। छत्रम्—क्षेत्रम् (?), वर्षातपनिवारकम्। छत्रिका—शाकविशेषः (अहिच्छत्रिका ?)।

३०. शठ श्वठ संस्कारगत्योः—अनृतभाषणे गतौ च। शाठयति—वचनं विघातयति। शठन्, शठकः—वचनविघातकः। शठा, शठनम्, शठनीयम्,

---

१. वृत्तौ 'स्मेटयति स्मेटन् स्मेटकः' इत्यादीनामुदाहरणानां दर्शनात् 'स्मिट' इत्येवं धातुः स्यादित्यनुमीयते। परन्तु कातन्त्रे 'स्मिट्ट' इत्येव दर्शनात् वृत्तिपाठो भ्रष्टः स्यादित्यनुमीयते। कोऽत्र शुद्धः पाठ इति न शक्यते वक्तुम्।

२. इह 'छुट्टः, छुट्टा, छुट्टिः, छुटिः' इति शुद्धाः पाठा ज्ञेयाः।

शाठ्यम्—चत्वारोऽनृते। श्वाठयति—अपराध्यति ( गलती करता है )। श्वठन्, श्वठकः—द्वावपराधके। श्वठनम्, श्वठनीयम्, श्वाठ्यम्, श्वठा—चत्वारोऽपराधने।

३१. खट्ट संवरणे—आवेष्टने ( लपेटने में )। खट्टयति—संवृणोति। खट्टः, खट्टन्, खट्टकः—त्रय आवेष्टके। खट्टनम्, खट्टनीयम्—आवेष्टनम्।

३२. षट्ट तुजि पिजि पिसि हिंसाबलदान[1]निकेतनेषु—मारणे, बले, दाने, निवासे च। सट्टयति—विदारयति। सटा (?, सट्टा)—विदीर्णो भागः। तुञ्जयति—बलवान् भवति। तुञ्जा—शक्तिः। पिञ्जयति—ददाति। पिञ्जारः—(?)। पिञ्जारी—दण्डिकोर्ध्वाच्छादनम्। पिंसयति—निवसति। पिंसा—छाया।

३३. शुल्क वल्क भाषणे—वचने। शुल्कयति—वदति। शौल्किकः—शुल्कशालायाः करस्य संग्राहकः (चुंगी उगाहने वाला)। शुल्कम्—शुल्कशाला-करः, मांसम्। वल्कयति—परिदधाति। वल्कलम्—वृक्षत्वक्।

३४. श्वर्त छपि पथि गतौ—श्वर्तयति—गच्छति। श्वर्तन्, श्वर्तकः, श्वर्तः—त्रयो गन्तरि। श्वर्तनम्, श्वर्तनीयम्—द्वौ गमने। छम्पयति—कूर्दते। छम्पन्, छम्पः, छम्पकः—त्रयः कूर्दके। छम्पनम्, छम्पनीयम्—कूर्दनम्। छम्पा—सम्पा-फलम्,[2] वृक्षः। पन्थयति—गच्छति। पान्थः, पथिकः,[3] पन्थन्—त्रयो गन्तरि ( पथिके )। पन्थनम्, पन्थनीयम्—द्वौ गमने। पथिन्[3]—मार्गः।

३५. क्षपि पपि कपि चपि सपि क्षान्तौ[4]—सहने। क्षम्पयति—सहते। क्षम्पन्, क्षम्पः, क्षम्पकः—त्रयः सोढरि। क्षपनम्, क्षपनीयम्—द्वौ सहने। क्षम्पा, क्षपा[5]—रात्रिः। पम्पयति—सहते। पम्पः, पम्पकः, पम्पन्—त्रयः सहनशीले। पम्पा—विरूपाक्षक्षेत्रम्। कम्पयति—भयेन कम्पते। कम्पा—क्षेत्रावरणम् (मेंड़ इति भाषायाम्)। कम्पिलम्—रामेश्वरक्षेत्रम्। कम्पम्—महापक्षम् ( बड़ा पंख )। चम्पयति—रक्षति। चम्पा—रामेश्वरक्षेत्रम्। चम्पकः—वृक्षविशेषः ('चम्पा' इत्येव लोके प्रसिद्धः)। सम्पयति—फलति। सम्पा—वृक्षः।

---

१. 'हिंसादाननिकेतनेषु' इति कातन्त्राः। क्षीरस्वामी तु हिंसाबलादाननिकेतनेषु (क्षीरत १०।१७) इति पपाठ। तत्र 'आदान' इति छेदो ज्ञेयः। कर्नाटकवृत्तिकारस्त्वत्र यथाक्रममर्थनिर्देशमाह। तत्र प्रमाणं मृग्यम्।

२. द्र० उत्तरसूत्रवृत्तौ 'सम्पा' पदम्।

३. 'पथिकः, पथिन्' इत्यनयोरनुनासिकलोपः कथमिति नोक्तं वृत्तिकृता। वस्तुत एतौ पथधातोः प्रयोगौ, न पन्थयतेः। पाणिनीयास्तु 'पन्थानं गच्छति पथिकः' इति तद्धितान्तमाहुः।

४. 'कान्तौ' इति कातन्त्रपाठः, स च प्रामादिकः प्रतीयते।

५. अनुनासिकलोपः कथमिति नोक्तम्।

३६. पिछि पुछ पछ पिछ कुट्टने—विभागे । पिच्छयति—रागयुक्तो भवति ( रंगीन होता है )। पिच्छम्—मयूरपिच्छम् । पुच्छयति—विभजति । पुच्छम्—'पूंछ' इति प्रसिद्धम् । पुच्छी—योनिः । पच्छयति—रजति । पच्छा—हरितः । पच्छी—(?) । पिच्छयति—तक्षति ( जमता है )। पिच्छा—तक्षनम् । पिच्छिलम्—पङ्कयुक्तस्थानम् ।

३७. तट तड आघाते—छिद्रकरणे । ताटयति—छिद्रयति । तटाकः—तडागः ( 'तालाब' इति प्रसिद्धः )। तटिनी—तटयुक्ता । तडित्—विद्युत् । तडित्वान्—मेघः । तटम्—तीरम् । तटतटा—जलधारा । ताटङ्कम्—कर्णाभरणम् । ताटकः—तण्डुकः (?) । ताटकी—एतन्नाम्नी [ राक्षसी ]। ताटिः, ताटः—द्वौ तालवृक्षे । ताडयति—घर्षयति । तडः, तडिः—पङ्कजं कन्दम् (?)। तडादः—नद्या बन्धः । तडी-नदी । तडः—अलसः । तडा—बन्धनम् । ताडः, ताडकः—कशा ( चाबुक )। ताडुः—रज्जुः । ताडा—तालवृक्षः ।

३८. खड खडि कड कडि भेदे—पृथक्करणे । खाडयति—पृथग्भवति । खडन्, खडकः—पृथग्भविता । खड्गम्—असिः । खाडा, खाडी—युद्धम् । खडितम्, खडनम्, खडनीयम्, खडम्, खाडम्—पञ्च पृथग्भवने । खण्डयति—त्रोटयति । खण्डितम्, खण्डम्, खण्डनीयम्, खण्डः—चत्वारस्त्रोटने । खण्डेयम्—असिः । काडयति—भिनत्ति । कडन्, कडकः—द्वौ भेदके । कडम्—उदारः (?) । कडिः—अर्धम् । काडः—अरण्यवासी । काडी—अरण्यवासिनी । काडुः—आरण्यकः आरण्यः । कण्डयति—पचते ( छानता है )। कण्डम्—मांसम् । कण्डिः—स्तम्भः । काण्डः—परिच्छेदः, तीरम्, जलम् । कण्ड—अरे इत्यर्थे निपातः । कडः (?)—आर्तनादः ।

३९. णष्क धष्क[1] पशिः पश नाशे—नष्कयति—नश्यति । नष्कन्, नष्ककः—नाशी । नष्कम्, नष्कणम्, नष्कणीयम्—त्रयो नाशने । धष्कयति—भर्त्सयति । धष्कन्, धष्ककः—भर्त्सकः । धष्कम्, धष्कणम्, धष्कणीयम्—त्रयो भर्त्सने । पंशयति—त्रोटयति । पंशन्, पंशकः—त्रोटकः । पंशम्, पंशनम्, पंशनीयम्—त्रयः त्रोटने । पांशुः—धूलिः । पांशुला—वेश्या । पांशा—(?) । पांशालः—विकर्तनसाधनम् । पाशयति—नानाप्रकारकेषु देशेषु कष्टं भुङ्क्ते । पशुः—जीवः । पाशः—रज्जुः, इन्द्रियम् । पशिः—आमम् ( कच्चा )। पाशी—वरुणः । पशम्—हंसः ।

१. 'नक्क धक्क' इति कातन्त्रीयाः । 'णक्क धक्क' इति पाणिनीयाः । काशकृत्स्नपाठेऽपपाठः प्रतीयते, तथैव रूपाण्यपि ।

४०. चक्क चुक्क[१] व्यथने—चक्कयति-व्यथयति । चक्कम्, चक्ककः-व्यथकः । चक्का-भागः । चक्कुलिः-भक्ष्यविशेषः ('पूरी' इति भाषायाम्) । चक्कुः-( ? ) । चुक्कयति-निगूढं पश्यति (झांकता है) । चुक्कनम्, चुक्ककः-निगूढं पश्यकः[२] (झांकनेवाला) । चुक्का-बिन्दुः । चुक्कम्-बिन्दुः । चुक्किः-बिन्दुः ।

४१. पुस्त आदरानादरयोः—पुस्तयति-हितं भवति । पुस्तम्, पुस्तकम्-द्वौ ग्रन्थे । पुस्तिः-अहणीम् ।

४२. मस्तु धारणे—सहने । मस्तयति-सहते । मस्तम्, मस्तकम्-द्वौ शिरसि । मस्तुः-मदः । मास्ती-मद्यवती ।

४३. गुस्त गन्धे—गुस्तयति-गन्धयति । गुस्ता-वृक्षविशेषः ।

४४. बिस्त जलोत्सारणे—जलप्रक्षेपणे । बिस्तयति-जलं प्रक्षिपति । बिस्तः-जलप्रक्षेपकः ।

४५. कस्त आमोदने—गन्धने, अस्वीभावे[३] । कस्तयति-अस्वीभवति । कस्तूरी-एतन्नामकं गन्धद्रव्यम् ।

४६. अस्त नाशने—अस्तयति-नाशयति । अस्तम्-निकृष्टम् ।

४७. हस्त आदाने—दाने ग्रहणे च । हस्तयति-ददाति आदत्ते च । हस्तः-करः । हस्ती-करी ।

४८. खिस्त मर्यादायाम्—खिस्तयति-नियमितो भवति । खिस्तुः-नियमः ।

४९. रस्त सामग्रीवृद्धौ—द्रव्यसम्पदायाम् । रस्तयति-द्रव्यं संगृह्णाति । रस्तुः[४]-द्रव्यसम्पत्तिः ।

५०. दस्त विकारे—दस्तयति-विकारो जायते । दस्तुः[५]-विकारः ।

५१. क्षाल शौचे—शुद्धौ । क्षालयति—शोधयति । क्षालकः-शोधकः । क्षालनम्-शोधनम् ।

---

१. 'चक्क चुक्क' कातन्त्रीयाः पाणिनीयाश्च । काशकृत्स्नेऽपपाठः प्रतीयते, सर्वेत्र तद्वत्वापि ।

२. कर्दमः पश्यकः भवति इति प्रयोगदर्शनात् (तै० आ० १।८।८) ।

३. आमगन्धामोदने—गन्धने, अत्र ईषदर्थे ईषदामोदने—अस्वीभावे ।

४. 'रस्त' इति 'रस्तः' पदस्यापभ्रंशः स्यात् ।

५. अतिसारार्थे प्रयुज्यमानः 'दस्त' शब्द एतद्धातुमूलकः साधुशब्द एव ।

५२. तल प्रतिष्ठायाम्—वपने। ताल्यति–वपति ( सस्यम् )। अतलः, वितलः, सुतलः, महातलः, रसातलः, तलातलः, पातालः–सप्ताधोलोकाः। तळम्–अधोभागः। ताळम्–वाद्योपकरणम्, तालवृक्षः। ताला–पुष्पविशेषः। ताली, तालीयम्–द्वौ तालफले।

५३. घुषिर् विशब्दे—घोषयति–विशेषेण ( उच्चैः ) शब्दयति। घोषन्, घोषकः–विशब्दयिता। घुष्टिः, घोषः, घोषणम्, घोषणीयम्–चत्वार उच्चैःशब्दने, घोषणायाम्।

५४. तुल उन्माने—तोलयति–उन्मानं करोति। तुला–उन्मानसाधनी ( तराजू इति प्रसिद्धा ), उड्डयनशीलः कश्चित् क्रिमिः। तूलः–कार्पासः, आवेशः[1]। तोळः–वृकः। तोलुः–स्कन्धादवरो हस्तभागः, बाहुः। तुल्यम्, तुलनम्, तुलनीयम्–त्रयः तोलने।

५५. दूल[2] उत्क्षेपे—दोलयति–उत्क्षिपति। दोलन्, दोलकः–द्वावुत्क्षेपके। दोलनम्, दोलनीयम्–द्वा उत्क्षेपणे। दोला–'झूला' इति भाषायाम्। आन्दोलम्–शिविका ( डोली )।

५६. पृथु[3] प्रक्षेपणे—पर्थयति–प्रकटयति। पार्थः–अर्जुनः, राजा। पार्थिवः–राजा। पृथुः–वैन्यो राजा। पृथुकालः–हिमालयात् पौर्वकालिकं यवनद्वीपम्। पृथ्वी, पृथिवी–द्वौ भूम्याम्। पृथक्–विभागः। पर्थनम्, पर्थनीयम्–द्वौ प्राकट्ये।

५७. सम्ब बुल संबन्धे[4]—निपातने ( ? ) ( उड़ेलने में )। सम्बयति–निपातयति (उड़ेलता है)। सम्बः, सम्बन्, सम्बकः–त्रयो निपातके। सम्बनम्, संबनीयम्–द्वौ निपातने। बोळयति–मुण्डयति। बोळः–मुण्डः। बोळुः–मुण्डनम्। बोळी–विधवा।

५८. पूप समुच्छ्राये—उद्धारे। सूपयति–उद्धरति उद्गृह्णाति। सूपकः–उद्ग्राहकः। सूपम्–पाकशास्त्रम्, दाल इत्येवं प्रसिद्धम्।

५९. मूल प्रतिरोहणे—मूलोत्पत्तौ ( जड़ निकलने में )। मूलयति–प्रतिरोहति। मूलम्–'जड़' इति प्रसिद्धम्। मूलकम्–मूलीनाम शाकम्। मूली–

---

१. आवेशार्थे हिन्दीभाषायामपि प्रयुज्यते—'छोटी सी बात को तूल दे दिया'।

२. 'दुल' इति कातन्त्रा अन्ये च।

३. 'प्रथ' इति कातन्त्रीयाः, पर्थ इति क्षीरस्वामी ( क्षीरत० १०।१९ )।

४. शम्ब संबन्धे, षम्ब च, कुलनिमज्जने इति कातन्त्रीयाः।

एतन्नाम्नैव प्रसिद्धं द्रव्यम् । मूळः–कर्णहीनः । मूळी–कर्णहीना स्त्री । मूळुः–कर्णहीनता । मूळा–कर्णहीना । मोळः–मार्जारः । उत्पारमूळा—( ? ) ।

६०. क्षजि कृच्छ्रजीवने—सकष्टे प्राणधारणे । क्षञ्जयति–दुःखेन जीवति । क्षञ्जः, क्षञ्जकः–द्वौ दुःखिनि । क्षञ्जनम् , क्षञ्जनीयम्–द्वौ सकष्टे जीवने ।

६१. सान्त्व सामप्रयोगे—शमने । सान्त्वयति–शाम्यति । सान्त्वन्, सान्त्वकः–द्वौ शान्तरि । सान्त्वनम् , सान्त्वनीयम्–द्वौ शमने ।

६२. मान पूजायाम्—श्रेष्ठतायाम् । मानयति–श्रेष्ठो ज्येष्ठो वा भवति । मानी, मानकः, मान्यः–त्रयो ज्येष्ठे श्रेष्ठे । माननम् , माननीयम्-द्वौ ज्येष्ठतायाम् । मानिनी–पतिव्रता ।

६३. चुद संचोदने—प्रेरणे । चोदयति–प्रेरयति । चोदन्–चोदकः–द्वौ प्ररके । चोदनम् , चोदनीयम्–द्वौ प्रेरणायाम् ।

६४. कल पिल डीप विल क्षेपे—गत्याम् । कलयति–गच्छति । कालः–यमः, काळः । काली–कलस्य पर्वतस्य पुत्री । कलिः–तिष्ययुगः, पापम् , ज्ञानम्[1] । कलकलः–कलकलध्वनिः । कलकलम्[2]–मिश्रणम् । कलिका, उत्कलिका–उदाहरण-गद्य-भेदः । कालम् , कालिमम्–कृष्णवर्णम् । कालकालः–महाकालः शिवः । कलम् , कलनम् , कलनीयम्–गतिः । पेल[ य ]ति–शरणं गृह्णाति आप्नोति वा । पेलन् , पेलकः–द्वौ शरणग्रहीतरि । पेलनम् , पेलनीयम्–द्वौ शरणग्रहणे । डीपयति–कूर्दते । डीपन् , डीपकः–द्वौ कूर्दितरि । डीपनम् , डीपनीयम्–द्वौ कूर्दने । वेलयति–त्वरयति । वेलन् , वेलकः–द्वौ त्वरितरि । वेला, वेलनम् , वेलनीयम्–त्रयस्त्वरणे ।

६५. कुडि जसि पुल रक्षणे—पालने । कुण्डयति–रक्षति । कुण्डम्–रक्षकम् । जंसयति–पालयति । जंसः–पालकः । पालयति–रक्षति । पालकः–रक्षकः । पालः, पालनम् , पालनीयम्–त्रयः पालने ।

६६. श्लिप श्लेषणे—श्लिपयति ( ?, श्लेपयति )–मिलति[3] । श्लेपकः–मेलकः । श्लिष्टम् , श्लिष्टिः, श्लेपः, श्लेपणम् , श्लेपणीयम्–पञ्च मेलने ।

---

१. अत्र 'अज्ञानम्' इति शुद्धः पाठः स्यात् ।

२. अत्र संभवतः 'कललम्' इति शुद्धः पाठः स्यात् । द्र०—एकरात्रोपितं कललं भवति ( निरुक्त अ० १४।६ ) ।

३. अत्र सर्वत्र संपीडनार्थः ( दबाना ) कर्नाटकवृत्तौ निर्दिष्टः ।

६७. लूष भ्रूष बर्ह हिंसायाम्—मारणे। लूषयति–मारयति। लूषकः–घातकः। लूषणम्, लूषणीयम्। द्वौ घातने। भ्रूषयति–ताडयति। भ्रूषकः–ताडकः। भ्रूषणम्, भ्रूषणीयम्–द्वौ ताडनकर्मणि। बर्हयति–लुञ्चयति (नोचता है)। बर्हिः–मयूरः। बर्हम्–मयूरपक्षम्।

६८. शुक्ल सर्जने—त्यागे। शुक्लयति–त्यजति। शुक्लः–रजतम्। शुक्लम्–वीर्यम्।

६९. ज्ञप ज्ञेये—ज्ञाने। ज्ञापयति[1]–जानाति। ज्ञप्तः–ज्ञाता। ज्ञपनम्, ज्ञप्तिः, ज्ञापकम्–श्रयः स्मारके।

७०. ज्ञीस विवेके—ज्ञीसयति–विवेकी भवति। ज्ञीसकः–विवेकी। ज्ञीसनम्–विवेकः।

७१. यम रम परिवेष्टने[2]—आवरणे। यमयति–आवृणोति। यमी–यतिः। यमलम्–युगमम्। रमयति–आत्मानमावेष्टयति। रामः–एतन्नामा पुरुषः।

७२. चप कल्कने—चूर्णने। चापयति–चूर्णयति। चपलः–चञ्चलः। चपला–विद्युत्। चापम्–धनुः।

७३. नाय हेतौ—कारणे। नाययति–हेतुर्भवति। नायः, नायकः—हेतुः, कर्ता। नायनम्, नायनीयम्–कारणम्।

७४. व्यय क्षये—नाशे। व्यययति–व्ययं करोति। व्ययः–द्रव्योपयोगः।

७५. स्फुट धुधि हिंसायाम्। स्फोटयति–हिंसयति। स्फोटम्–महारोगः। धुन्धयति–दुःखयति। धुन्धम्–दुःखम्।

७६. पुण पिडि संघाते—सहभावे। पूणयति–साहाय्यं करोति। पुणम्[3]–तीरम्। पिण्डयति–संघातयति। पिण्डम्–सङ्घातम्।

७७. पुंस अभिमर्दने—अभिभवे। पुंसयति–मर्दयति। पुंसः, पुंसकः–द्वौ पुरुषे। नपुंसम्, नपुंसकम्–द्वौ पण्डे नपुंसके।

७८. टकि बन्धने—कीलने। टङ्कयति–कीलयति। टङ्कः–कीलम्, सुवर्णमुद्रा, रजतमुद्रा।

---

१. कातन्त्रा अन्ये च वैयाकरणाः 'ज्ञप' धातोः मानुबन्धत्वं मित्वं बोधत्वा 'ज्ञपयति' रूपमाहुः।
२. 'परिवेषणे' इति कातन्त्रा अन्ये च वैयाकरणाः।
३. पूना = पुणें (महाराष्ट्रभाषायाम्) नगरनाम किं नद्यास्तीरवर्तित्वात्।

७९. धूश, धूस कान्तीकरणे—प्रकाशे। धूशयति–प्रकाशयति। धूशः-प्रकाशकः। धूशनम्, धूशनीयम्–द्वौ प्रकाशे। धूसयति–समीपं भवति। धूलिधूसरः–स्वशरीरे धूलि प्रक्षेपकः[1]। धूसनम्, धूसनीयम्–धूलिप्रक्षेपणे।

८०. टीकृ बन्धने—प्रचारे (?) टीकयति–प्रचारयति (?)। टीककः–प्रकारकः (?) टीका–प्रचारः (?)।

८१. चुण[2] संकोचे—पूरणे। चूणयति–पूरयति। चुणकः–पूरकः। चुणनम्, चुणनीयम्–समापने।

८२. पूज पूजायाम्—अर्हणे। पूजयति–अर्हयति। पूजकः, पूजारी, पूजाकारः–त्रयः पूजके।

८३. अर्क ईड स्तुतौ—प्रशंसने। अर्कयति–प्रशंसति। अर्कः–सूर्यः, मुनिः, वृक्षविशेषः। ईडयति–प्रशंसति। ईडकः, ईडनम्, ईडनीयम्–त्रयः प्रशंसायाम्।

८४. शुठ आलस्ये—शोठयति–अलसो भवति। शुठः, शोठकः, शोठन्–अलसः। शोठनम्, शोठनीयम्–आलस्ये।

८५. शुठि शोषे—शुष्कीभावे। शुण्ठयति–शोषयति। शुण्ठः–मूर्खः। शुण्ठनम्, शुण्ठनीयम्–द्वौ निरर्थकवचने। शुण्ठी–'सौंठ' नाम्ना प्रसिद्धं द्रव्यम्।

८६. जुड व्यभिचारे—जोडयति–व्यभिचरति। जोडः–व्यभिचारी। जोडा–व्यभिचारिणी। जोड्डः–साहाय्यम्। जोडी, जोडनम्–उपायः।

८७. जूल रक्षणे–जोलयति–रक्षति। जोलः–'मक्का' नाम्ना प्रसिद्धं धान्यम्।

८८. चूर्ण प्रेरणे[3]—चूर्णयति–प्रेरयति। चूर्णितः–प्रेरितः। चूर्णम्–'चूना' इति प्रसिद्धम्।

८९. गर्ज कलकलध्वनौ—गर्जति–कलकलं ध्वनति। गर्जन्, गर्जकः, गर्जितः–त्रयः शब्दयितरि। गर्जनम्, गर्जनीयम्–द्वौ शब्दने।

---

१. धूलिधूसरः—धूलिना लिप्त इत्यर्थः।

२. 'चूण' इति कातन्त्रीयाः। वृत्तिकारोऽपि चूणयति इति दीर्घत्वमुदाहरति, परन्तु 'चुणकः चुणनम् चुणनीयम्' इत्यत्र ह्रस्वत्वमेव निदर्शयति। 'चुण' इति पाठे गुणः कथं न, इत्यपि नोक्तम्।

३. कातन्त्रे 'जुड चूर्ण प्रेरणे' इति पाठः। काशकृत्स्ने पठितः 'जुड व्यभिचारे' इति तत्र न पठ्यते।

९०. मार्ज शुद्धौ—मार्जयति–शोधयति। मार्जन्, मार्जकः–शोधकः। सम्मार्जनम्–लेपनम्। सम्मार्जनी–लेपनकर्त्री ( बुहारी-झाडू इति नाम्ना प्रसिद्धमपि )।

९१. पचि विस्तारे—पञ्चयति–विस्तारयति। पञ्चन्–संख्या। पञ्ची–(?)। पञ्चमः–अन्त्यवर्णः[1]। विपञ्ची–वीणा, गृहबहिर्वेदिः। पञ्चास्यः–शिवः, सिंहः। पञ्चकम्–अश्वकण्ठम्। पञ्चनम्, पञ्चनीयम्–विस्तारः।

९२. रिचि विस्तारे[2]—रिञ्चयति–विस्तारयति। विरञ्चः–ब्रह्मा।

९३. तिज निशातने—प्रभावे। तेजयति–प्रभावयति। तेजस्वी–प्रभावजनकः। तेजस्–प्रभावः।

९४. कृत संशब्दे—वर्णने। कीर्तयति–वर्णयति। कीर्तन्, कीर्तकः= द्वौ वर्णके। कीर्तनम्, कीर्तनीयम्, कीर्तिः–त्रयो वर्णने।

९५. कुबि छादने—कुम्बयति–आच्छादयति ( ओढ़ता है )। कुम्बन्, कुम्बकः–द्वावाच्छादके। कुम्बनम्, कुम्बनीयम्–द्वावाच्छादने।

९६. वृधु वर्धने[3]—वर्धयति–एधते (?)। वर्धकिः–तक्षकः। वर्धनम्–एधनम् (?)।

९७. लुबि तुबि अर्दने—प्रापणे (?)। लुम्बयति–प्राप्नोति। लुम्बन्, लुम्बकः–द्वौ प्रापके। लुम्बनम्, लुम्बनीयम्–द्वौ–प्रापणे। तुम्बयति–कथयति। तुम्बरः–गन्धर्वः। तुम्बा–द्रोणः (?)। तुम्बिका–शाकविशेषः ( गोल लौकी इति भाषायाम् )। तुम्बुः–तटाकफलवृत्तम् (?)। तुम्बिः–भ्रमरः।

९८. ह्रप व्यक्तायां वाचि—शोभने वाक्ये। ह्रापयति–शोभनं वदति। ह्रपन्, ह्रपकः–साधु वक्ता। ह्रपनम् ह्रपनीयम्–साधु भाषणे।

९९. म्लेच्छ चुटि छेदने—छिद्रकरणे (?)। म्लेच्छयति[4]–छिद्रयति।

---

१. तुलनीयम्–चत्वारो वर्णाः, निषादः पञ्चमः। निरुक्त ३।८॥

२. पूर्वो धातुरपि विस्तारे पठ्यते। इहाऽपि स एवार्थः। उभौ सह कथं नैव पठितौ? यद्वा 'रिचि च' इत्येव कथं नोक्तम्? कातन्त्रीया इमं धातुं न पठन्ति। तस्मादर्थाद्यर्थनिर्देशे सन्देह एव।

३. 'वर्ध छेदनपूरणयोः'। 'प्राङ्नाभिवर्धनात् पुंसः' ( मनु २।२९ ) इति मनुवचने छेदनार्थ एव दृश्यते। वर्धकिप्रयोगेऽपि स एवार्थोऽभिप्रेतः। अतः काशकृत्स्नपाठे लेखकप्रमादात् पाठो भ्रष्टः स्यात्, यद्वा वर्धनशब्दस्य छेदन एवात्रार्थो ग्रहीतव्यः।

४. कातन्त्रपाठे 'म्लेच्छ च' 'चुडि छेदने' इति पठ्यते। चाद् 'व्यक्तायां वाचि' इत्यनुकृष्यते। म्लेच्छोऽव्यक्तवाग् इति सार्वलौकिकोऽर्थः। तस्मात् कातन्त्रपाठोऽपि दूषित एव।

म्लेच्छः—यवनः। म्लेच्छनम्, म्लेच्छनीयम्—द्वौ छिद्रकर्तरि। चुण्टयति—विदारयति, रिङ्गति। चुण्टः—रिङ्गकः। चुण्टनम्, चुण्टनीयम्—निशामनम् (तीक्ष्णीकरणम् = धार लगाना)।

१००. म्लक्ष म्रक्ष क्षरणस्निग्धार्थे—नाशने। म्लक्षयति—नाशयति[1]। म्लक्षः—नाशकः। म्लक्षणम्—नाशनम्। म्रक्षयति—नाशयति। म्रक्षः—नाशकः। म्रक्षणम्—नाशकम्।

१०१. इल प्रेरणे—एलयति—प्रेरयति। एलापत्रः—चित्रवर्णः सर्पः। एलाकः—सर्पविशेषः। इला—भूमिः।

१०२. लुण्ट स्तेये—लुण्टयति—चोरयति। लुण्टः, लुण्टन्, लुण्टकः, लुण्टाकः—चत्वारश्चोरे। लुण्टनम्, लुण्टनीयम्—द्वौ चोरणे।

१०३. छर्द वमने—छर्दयति—वमति। छर्दन्, छर्दकः—द्वौ वमके। छर्दिः, छर्दनम्, छर्दनीयम्—त्रयो वमने।

१०४. शूर्प माने—शूर्पयति—मापयति[2]। शूर्पकः—मापकः। शूर्पम्—(धान्यादिनिष्पावसाधनम्)। शूर्पणखी—एतन्नाम्नी राक्षसी।

१०५. गुडि वेष्टने—गुण्डयति—वेष्टयति। अमरगुण्डम्—देवानां परिभ्रमणम्। चन्द्रगुण्डम्—चन्द्रमसः परिभ्रमणम्। गुण्डी—गर्तः। गुण्डुः—शिलाशिखरम्। गुण्डारम्—(?)।

१०६. बल भृतौ—रक्षणे। बालयति—रक्षति। बाला—कन्या। बालकः—कुमारः। बालकी[3]—कन्या। बलम्—त्रलम्, सैन्यम्, वीर्यम्।

१०७. गर्ध अभिकाङ्क्षायाम्—गर्धयति—गृध्यति अभिकांक्षति। गर्धः—गर्धकः—अभिलाषुकः। गर्धनम्—अभिकाङ्क्षा लोभः।

१०८. पूर्व निकेतने—गृहे। पूर्वयति—निकेतयति। पूर्वः—निकेतकः।

---

१. कलकवृत्तेः हिन्दी-अनुवादकर्त्रा 'म्लक्षः' इत्यस्य 'मिटानेवाला (रबर)' इत्यनुवादः प्रदर्शितः। यधत्र लिखितपाठस्य नाशनमेवाभिप्रेतं स्यात् तर्हि प्राचीनकाले अपपाठम्रक्षणाय प्रयुज्यमानः पीतगोदन्ती द्रव्यो (हड़ताल) म्राक्षः। अयमेव लिखितपाठम्रक्षणाय प्रयुज्यमानो गोदन्तीद्रव्यवाचको 'हड़ताल' शब्दो लक्षणया क्रियमाणकार्यावरोधनार्थे लोके प्रायेण प्रयुज्यते—'आज हड़ताल है'।

२. हिन्दी-अनुवादकर्त्राऽत्र 'मान' शब्दः पूजार्थे गृहीतः। यद्वा कलकवृत्तिकृता तथैव व्याख्यातः स्याद् भ्रान्त्या। वस्तुतस्तु शूर्पशब्दः परिमाणवाची। तस्मात् मानमिह परिमाणमभिप्रेतम्।

३. पाणिनीयमतानुसारं 'बालिका' इति साधु।

९०. मार्ज शुद्धौ—मार्जयति–शोधयति। मार्जन्, मार्जकः–शोधकः। सम्मार्जनम्–लेपनम्। सम्मार्जनी–लेपनकर्त्री (बुहारी-झाड़ू इति नाम्ना प्रसिद्धमपि)।

९१. पचि विस्तारे—पञ्चयति–विस्तारयति। पञ्चन्–संख्या। पञ्ची–(?)। पञ्चमः–अन्त्यवर्णः[1]। विपञ्ची–वीणा, गृहबर्हिर्वेदिः। पञ्चास्यः–शिवः, सिंहः। पञ्चकम्–अश्वकण्ठम्। पञ्चनम्, पञ्चनीयम्–विस्तारः।

९२. रिचि विस्तारे[2]—रिञ्चयति–विस्तारयति। विरञ्चः–ब्रह्मा।

९३. तिज निशातने—प्रभावे। तेजयति–प्रभावयति। तेजस्वी–प्रभावजनकः। तेजस्–प्रभावः।

९४. कृत संशब्दे—वर्णने। कीर्तयति–वर्णयति। कीर्तन्, कीर्तकः = द्वौ वर्णके। कीर्तनम्, कीर्तनीयम्, कीर्तिः–त्रयो वर्णने।

९५. कुबि छादने—कुम्बयति–आच्छादयति (ओढ़ता है)। कुम्बन्, कुम्बकः–द्वावाच्छादके। कुम्बनम्, कुम्बनीयम्–द्वावाच्छादने।

९६. वृधु वर्धने[3]—वर्धयति–एधते (?)। वर्धकिः–तक्षकः। वर्धनम्–एधनम् (?)।

९७. लुबि तुबि अर्दने—प्रापणे (?)। लुम्बयति–प्राप्नोति। लुम्बन्, लुम्बकः–द्वौ प्रापके। लुम्बनम्, लुम्बनीयम्–द्वौ–प्रापणे। तुम्बयति–कथयति। तुम्बरः–गन्धर्वः। तुम्बा–द्रोणः (?)। तुम्बिका–शाकविशेषः (गोल लौकी इति भाषायाम्)। तुम्बुः–तटाकफलवृत्तम् (?)। तुम्बिः–भ्रमरः।

९८. ह्रप व्यक्तायां वाचि—शोभने वाक्ये। ह्रापयति–शोभनं वदति। ह्रपन्, ह्रपकः–साधु वक्ता। ह्रपनम् ह्रपनीयम्–साधु भाषणे।

९९. म्लेच्छ चुटि छेदने—छिद्रकरणे (?)। म्लेच्छयति[4]–छिद्रयति।

---

१. तुलनीयम्–चत्वारो वर्णाः, निषादः पञ्चमः। निरुक्त ३।८॥

२. पूर्वो धातुरपि विस्तारे पठ्यते। इहाऽपि स एवार्थः। उभौ सह कथं नैव पठितौ? यद्वा 'रिचि च' इत्येव कथं नोक्तम्? कातन्त्रीया इमं धातुं न पठन्ति। तस्मादपीहाऽर्थनिर्देशे सन्देह एव।

३. 'वर्ध छेदनपूरणयोः'। 'प्राङ्नाभिवर्धनात् पुंसः' (मनु २।२९) इति मनुवचने छेदनार्थ एव दृश्यते। वर्धकिप्रयोगेऽपि स एवार्थोऽभिप्रेतः। अतः काशकृत्स्नपाठे लेखकप्रमादात् पाठो भ्रष्टः स्यात्, यद्वा वर्धनशब्दस्य छेदन एवात्रार्थो ग्रहीतव्यः।

४. कातन्त्रपाठे 'म्लेच्छ च' 'लुडि छेदने' इति पठ्यते। चाद् 'व्यक्तायां वाचि' इत्यनुकृष्यते। म्लेच्छोऽव्यक्तवाग् इति सार्वलौकिकोऽर्थः। तस्मात् कातन्त्रपाठोऽपि दूषित एव।

म्लेच्छः—यवनः। म्लेच्छनम्, म्लेच्छनीयम्—द्वौ छिद्रकर्तरि। चुण्टयति—विदारयति, रिङ्गति। चुण्टः—रिङ्गकः। चुण्टनम्, चुण्टनीयम्—निशामनम् (तीक्ष्णीकरणम् = धार लगाना)।

१००. म्लक्ष म्रक्ष क्षरणस्निग्धार्थे—नाशने। म्लक्षयति—नाशयति[1]। म्लक्षः—नाशकः। म्लक्षणम्—नाशनम्। म्रक्षयति—नाशयति। म्रक्षः—नाशकः। म्रक्षणम्—नाशकम्।

१०१. इल प्रेरणे—एलयति—प्रेरयति। एलापत्रः—चित्रवर्णः सर्पः। एलाकः—सर्पविशेषः। इला—भूमिः।

१०२. लुण्ट स्तेये—लुण्टयति—चोरयति। लुण्टः, लुण्टन्, लुण्टकः, लुण्टाकः—चत्वारश्चोरे। लुण्टनम्, लुण्टनीयम्—द्वौ चोरणे।

१०३. छर्द वमने—छर्दयति—वमति। छर्दन्, छर्दकः—द्वौ वमके। छर्दिः, छर्दनम्, छर्दनीयम्—त्रयो वमने।

१०४. शूर्प माने—शूर्पयति—मापयति[2]। शूर्पकः—मापकः। शूर्पम्—(धान्यादिनिष्पावसाधनम्)। शूर्पणखी—एतन्नाम्नी राक्षसी।

१०५. गुडि वेष्टने—गुण्डयति—वेष्टयति। अमरगुण्डम्—देवानां परिभ्रमणम्। चन्द्रगुण्डम्—चन्द्रमसः परिभ्रमणम्। गुण्डी—गर्तः। गुण्डुः—शिलाशिखरम्। गुण्डारम्—(?)।

१०६. वल भृतौ—रक्षणे। वालयति—रक्षति। वाला—कन्या। वालकः—कुमारः। वालकी[3]—कन्या। वलम्—बलम्, सैन्यम्, वीर्यम्।

१०७. गर्ध अभिकाङ्क्षायाम्—गर्धयति—गृध्यति अभिकांक्षति। गर्धः—गर्धकः—अभिलाषुकः। गर्धनम्—अभिकाङ्क्षा लोभः।

१०८. पूर्व निकेतने—गृहे। पूर्वयति—निकेतयति। पूर्वः—निकेतकः।

---

१. कल्पद्रुवृत्तेः हिन्दी-अनुवादकर्त्रा 'म्लक्षः' इत्यस्य 'मिटानेवाला (रबर)' इत्यनुवादः प्रदर्शितः। यदत्र लिखितपाठस्य नाशनमेवाभिप्रेतं स्यात् तर्हि प्राचीनकाले अपपाठम्रक्षणाय प्रयुज्यमानः पीतगोदन्ती द्रव्यो (हड़ताल) ग्राह्यः। अयमेव लिखितपाठम्रक्षणाय प्रयुज्यमानो गोदन्तीद्रव्यवाचको 'हड़ताल' शब्दो लक्षणया क्रियमाणकार्यावरोधनार्थे लोके प्रायेण प्रयुज्यते—'आज हड़ताल है'।

२. हिन्दी-अनुवादकर्त्राऽत्र 'मान' शब्दः पूजार्थे गृहीतः। यद्वा कल्पद्रुवृत्तिकृता तथैव व्याख्यातः स्याद् भ्रान्त्या। वस्तुतस्तु शूर्पशब्दः परिमाणवाची। तस्मात् मानमिह परिमाणमभिप्रेतम्।

३. पाणिनीयमतानुसारं 'बालिका' इति साधु।

१०९. रुप रोपे—रोपयति—कुप्यति । रोपकः—कोपकः । रोपणम्, रोपणीयम्—द्वौ क्रोधे ।

११०. मडि भूषायाम्—भूषणे । [ मण्डयति—भूषयति ।] मण्डूकः—भेकः । मण्डाशिरः । तिलमण्डिका—तिलैर्निर्मितो भक्ष्यविशेषः । मण्डी—जानोरधः-शरीरावयवः । मण्डुः—ऋषिः । माण्डव्यः—मण्डुपुत्रः । मण्डोदरी—रावणपत्नी । मण्डनम्, मण्डनीयम्—द्वावाभरणे ।

१११. अण दाने—आणयति—ददाति ।[1] अणन्, अणकः—द्वौ दानिनि । अणनम्, अणनीयम्—द्वौ दाने ।

११२. भडि कल्याणे—शुभे । भण्डयति—शुभं भवति । भण्डारम्—सुवर्ण-कोशः, हरिद्राचूर्णम् ।

११३. वज मार्गणसंस्कारे—शरनिर्माणे । वाजयति—इषुं निर्मिमीते । वजनम्, वाजकः—द्वौ तीरनिर्माणकर्तरि । वाजम्—तीरम्, इषुः । वजा—सस्यविशेषः ।

११४. घुप उत्सर्गे—सामान्ये (?) । घोषयति—सामान्यं भवति (?) । घोषः—गोशाला ।

११५. जस[1] हिंसायाम्—जासयति—हिनस्ति । जसकः—घातकः । जसनम्, जसनीयम्—द्वौ हिंसने ।

११६. तत्रि कुटुम्बधारणे—तन्त्रयति—कुटुम्बं पोषयति । तन्त्रकः—कुटुम्बपोषकः । तन्त्रणम्—कुटुम्बधारणम् ।

११७. मत्रि गुप्तभाषणे—मन्त्रयति, रहसि वदति । मन्त्री—सचिवः । मन्त्रणम्—विचारणा ।

११८. वस्त गन्ध अर्दने—प्रेरणे । वस्तयति—प्रेरयति । वस्तकः, वस्तन्—द्वौ प्रेरणे । वस्तु, वस्तुकम्—द्वौ प्रेरणायाम् । गन्धयति—दुर्गन्धमायाति । गन्धन्, गन्धी—द्वौ परिमले । गन्ध्यम्, गन्धनीयम्, गन्धनम्, गन्धः—परिमलम् । गन्धकम्—द्रव्यविशेष एतन्नाम्नैव प्रसिद्धः । सुगन्धिः—पुष्पविशेषः । गन्धा—(?) ।

११९. हिष्क हिक्क हिंसायाम्—पीडायाम् । हिष्कयति—पीडयति । हिष्का—पीडा । हिक्कयति—कष्टयति । हिक्का—कष्टम् ।

१२०. निष्क परिमाणे—निष्कयति—परिमापयति । निष्कम्—एतन्नामकं परिमाणम् ।

---

१. जस धातुरग्रे चुरादौ ( ९ । १५३ ) ताडनार्थे पठिष्यते । अतोऽत्रापपाठः प्रतीयते । कातन्त्रे तु 'जज हिंसायाम्' इति पठ्यते ।

१२१. लल ईप्सायाम्—लालयति–इच्छति । लालनम्, लालनीयम्–इच्छा । ललना–स्त्री । ललितम्–कोमलम्, रागः, आगमः । लाला मुखस्थं जलम् । लालः—राक्षसः । लालि–( गड्डी ? ) ।

१२२. चित सन्देहे—संशये । चेतयति–शङ्कते । चित्तम्–क्रमः । चितिः–ज्ञानम् ।

१२३. दंशि दशने—दंशयति–दशति । दंशन्, दंशकः–द्वौ कर्तके (काटने वाले में) । दष्टम्, दष्टिः, दशनम्, दंशनीयम्–चत्वारो दशनक्रियायाम् ।

१२४. दश[1] दर्शने—दाशयते[2]–दर्शयति । दाशः–धीवरः ( मछुआ ) । दशा–अवस्था ।

१२५. कुण[3] संकोचे—पूरणे । कुणयते[3]—समापयति । कुणिः–[ एतन्नामाऽऽचार्यः ] ।

१२६. डप डिप संघाते—सहभावे । डापयते–सहयोगी भवति । डपन्, डपकः–द्वौ सहगन्तरि । डेपयति–शृङ्गारयति । डेपन्, डेपकः–द्वौ शृङ्गारके । डेपनम्, डेपनीयम्–द्वौ शृङ्गारे ।

१२७. तूण पूरणे—भरणे । तूणयते–भरति । तूणीरम्–तूणीरनाम्नैव प्रसिद्धम् यत्रेषवः रक्ष्यन्ते तद् ।

१२८. तर्ज भर्त्स संतर्जने—भये । तर्जयते–भीषयते । तर्जन्, तर्जकः–द्वौ भयप्रदे । तर्जनम्, तर्जनीयम्–द्वौ भये । भर्त्सयते–निन्दति । भर्त्सन्, भर्त्सकः–द्वौ निन्दके । भर्त्सनम्, भर्त्सनीयम्–द्वौ निन्दायाम् ।

१२९. भ्रूण आशायाम्—इच्छायाम् । भ्रूणयति[4]–इच्छति । भ्रूणन्, भ्रूणकः, भ्रूणः–त्रय इच्छुके । भ्रूणनम्, भ्रूणनीयम्–द्वौ इच्छायाम् ।

---

१. 'दसि दर्शने च' इति कातन्त्रीयाः ।

२. इतोत्तरत्र च कतिपयधातुरूपेषु परस्मैपदक्रमे आत्मनेपदनिर्देशः कथमिति न जानीमो वयम् । काशकृत्स्नधातुपाठानुसारं तु 'तत्रि कुटुम्बधारणे' (९ । १२२) इत्यारभ्य आत्मनेपदिनः पठ्यन्ते । तदनुसारं तन्त्रि-धातोरारभ्य परस्मैपदोदाहरणं चिन्त्यमिति प्रतीयते ।

३. 'कूण' इति कातन्त्रीयाः । तथा सति कूणयति कूणिः इत्युदाहरणं द्रष्टव्यं । कुणयति इत्यत्र गुणाभावः कथमिति न व्यक्तीकृतं वृत्तिकृता ।

४. इत आरभ्य कतिपयधातुरूपेषु परस्मैपदमुदाह्रियते तच्चिन्त्यम् ।

१३०. यक्ष पूजायाम्—श्रेष्ठ्ये। यक्षयति—श्रेष्ठो भवति। यक्षः—(श्रेष्ठः)[1]। यक्षिणी—( श्रेष्ठा )।

१३१. शठ श्लाघायाम्—श्रेष्ठ्ये (?, प्रशंसायाम्)। शाठयति—श्रेष्ठो भवति। शठन्, शठकः, शठः—श्रेष्ठः पुरुषः, मिथ्याभाषकः। शठा, शठनम्, शठनीयम्—त्रयो मिथ्या[ भाषणे ]।

१३२. श्यम[2] वितर्के—विवादे। श्यामयति—विवदते। श्यामलः—कृष्णः, रक्तवर्णश्च। श्यामला—चञ्चगौरी (?)। श्यामा—श्यामवर्णा। श्यामः—श्यामवर्णकः।

१३३. गुरी[3] उद्यमने—उद्योगे। गूरयते—उद्योगं करोति, प्रयतते। गुरुः—उद्योगी। गुर्वी—उद्योगिनी।

१३४. शम लक्ष आलोचने—विचारणे। शमयते—विचारयति। शामाकः (?)—विचारकः। शामा—कृष्णवर्णा, शाकविशेषः। लक्षयते—अङ्कयति। लक्षितः—चिह्नितः। लक्षम्—शतसहस्रम्, लक्ष्यम्, ध्येयम्, चिह्नम्। लक्षणम्—चिह्नम्। लक्षिकः—लक्ष्यकर्ता। लाक्षा—'लाख' नाम्ना प्रसिद्धं द्रव्यम्।

१३५. कुत्स अवक्षेपे—निन्दायाम्। कुत्सयते—निन्दयति। कुत्सन्, कुत्सकः—द्वौ निन्दके। कुत्सनम्, कुत्सनीयम्, कुत्सितम्, कुत्सा—चत्वारो निन्दायाम्।

१३६. भल आमण्डने—स्वीकारे। भालयति (?)—स्वीकरोति ( पसन्द करता है )। भलनः, भालकः—द्वौ स्वीकर्तरि। भली, भला, भलला—त्रयः स्वीकारे। भालः—फालः ( शस्त्रविशेषः ? )

१३७. कूट प्रमादे[4]—वञ्चने। कूटयते—वञ्चयते। कूटः—शृङ्गम्। कालकूटः—विषम्। कूटस्थः—परमात्मा।

१३८. वञ्चु प्रलम्भने—वञ्चयते—प्रलम्भयति। वञ्चकः, वञ्चानः वञ्चन्—त्रयः प्रलम्भने। वञ्चनम्, वञ्चनीयम्—द्वौ प्रलम्भने। परिवञ्चन्—परिवञ्चना।

---

१. इह हिन्दी-अनुवादकर्त्रा यक्षः-गाडरी करने वाला, यक्षिणी-गारदी दिखाने वाली' इत्यर्थो निर्दिष्टः स न ज्ञायते।

२. 'स्यम' इति कातन्त्रीयाः।

३. 'गूरी' इति अन्ये वैयाकरणाः कातन्त्रीयाश्च। इह वृत्तौ तु 'गूरयते' इत्यत्र दीर्घत्वमुकारस्य, 'गुरुः' 'गुर्वी' इत्यत्र ह्रस्वत्वम्, उभयथा दृश्यते तत्कथम्?

४. 'अप्रसादे' इति कातन्त्रीयः।

१३९. धृपु शक्तिसम्बन्धे—वञ्चनया ग्रहणे।[1] धृष्टुः, धृष्टः, धर्षकः, धर्षाणः—चत्वारो वञ्चके। धृष्टिः, धर्षणम्, धर्षणीयम्, धर्षः—परिवञ्चनया-ग्रहणे।

१४०. मद तृप्तियोगे—मादयते—तृप्तो भवति। मत्तः, मदी, मदानः—तृप्तः। मदम्—तृप्तम्।

१४१. दिवु परिकूजने—गाने। देवयते—गायति। देवता—शक्तिः। देवनम्, देवनीयम्—द्वौ गाने।

१४२. गॄ विज्ञाने[2]—वैभवे। गरयति—वैभवयुतो भवति। गरागः—वैभवी। गारणम्—वैभवम्।

१४३. विद वेतना[3]ख्याननिवासेषु—भृतौ, नाम्नि, निवासे च। वेदयति (?)—भृतिं करोति। वेदानः—भृतिः। वेदकः—प्रसिद्धः। वेदी—निवसिता। वेदनम्, वेदनीयम्—द्वौ भृतौ।

१४४. मन स्तम्भे—स्थित्याम्। मानयति—उत्तिष्ठते। मनानः—उत्थायकः। मनस्—क्रमः। मननम्—स्मरणम्। मननीयम्—स्मर्तुं योग्यम्।

१४५. युजु[4] जुगुप्सायाम्—घृणायाम्। योजयते—घृणां करोति। यजोः (?, चजोः) कगौ—चकारजकारयोः ककारगकारौ भवतः। योगी—योगयुक्तः। योजनम्—अध्वपरिमाणविशेषः।

१४६. कुस्म कुस्मयने—कुत्सिते हास्ये। कुस्मयते—निन्दितं हसति। कुस्मानः, कुस्मकः—द्वौ निन्दितहासके। कुस्मम्, कुस्मनम्, कुस्मनीयम्, कुस्मितम्—चत्वारो निन्दितहसने।

१४७. चर्च अध्ययने—चर्चयति—पठति। चर्चन्, चर्चकः—पाठकः। चर्चनम्, चर्चनीयम्—द्वौ पाठे। चर्चा चर्चिका—द्वौ विचारणायाम्।

१४८. बुक्क भषणे—निन्दायाम्। बुक्कयति—निन्दति। बुक्कन्, बुक्कः—द्वौ निन्दके। बुक्कनम्, बुक्कनीयम्—द्वौ निन्दायाम्।

१४९. शब्द उपसर्गादाविष्कारे—प्रादिभ्यः प्रभवे। विशब्दयति—ध्वन-

---

१. आख्यातोदाहरणं नास्ति वृत्तौ।

२. 'निगरणे' इति कातन्त्रीयाः।

३. 'वेदनाख्यान०' इति कातन्त्रीयाः।

४. 'युः' इत्येव कातन्त्रीयाः पठन्ति। तेनानुमीयते यु जु इति द्वौ धातू काशकृत्स्नमते। वृत्तिकारस्य युजु एकीकृत्य व्याख्यानं प्रामादिकं स्यात्।

यति । विशब्दन्, विशब्दितः—अतिभापकः । विशब्दः, विशब्दनम्, विशब्द-नीयम्—त्रयो भूरिध्वनौ ।

१५०. कण निमीलने—दृष्टिमान्द्ये । काणयते—न पश्यति । काणः—एकाक्षिः । कणिः—दैवशक्त्या दर्शनम् । कणनम्, कणनीयम्—द्वौ दृष्टिमान्द्ये । काणिः—मुद्राविशेषः । कणा—अरेऽर्थे । काणिका—कप्प कर (?) ।

१५१. जभि नाशे—ताडने । जम्भयति—ताडयति । जम्भः—राक्षसः । जम्भा—वृक्षः । जम्भे—ताडयति (?) । जम्भनम्, जम्भनीयम्—द्वौ ताडने ।

१५२. सूद आश्रये—सूदयति—आश्रितो भवति । सूदः—आश्रितः ।

१५३. जस ताडने—जासयति—ताडयति । जस्यति[1]—ताडयति । जासः, जसः, जसकः, जसन्—चत्वारस्ताडके । जसनम्, जसनीयम्—द्वौ ताडनक्रियायाम् ।

१५४. पप पश बन्धे—पापयति—बध्नाति । पापः—पाशः । पाशयति—आवेष्टयति । पाशः—बन्धनकर्त्री रज्जुः ।

१५५. अम रोगे—पीडायाम् । आमयति—पीडयति । आमन्—उदर-पीडा । आमयम्—पीडा ।

१५६. चट स्फुट भेदे—विभागे । चाटयति—विभजति । चाटः—सूपः । चटकः—पक्षिविशेषः । चाटका (?, चटका)—चटकस्य स्त्री । चाटुः—अतिभाषी । स्फोटयति—विभजति । स्फुटम्—विभजनम् ।

१५७. घट संघाते—सहभावे संग्रामे । घाटयति—सह भवति, युध्यते वा । घटः—पात्रम्, एकादशो राशिः (कुम्भः) ।

१५८. सर्वे हिंसार्थाश्चुरादौ परस्मैपदिनो ज्ञेयाः ।[2]

१५९. तर्द हिंसायाम्—तर्दयति—हिंसयति । तर्दुः—हिंसकः ।

१६०. दिवु अर्दने—वृद्धौ । देवयति—वर्धयति । देवनम्—वर्धनम् ।

१६१. अर्ज प्रतियत्ने—द्रव्योपार्जने । अर्जयति—उपार्जयति । अर्जुनः—एतन्नामा पुरुषः । अर्जनम्, आर्जनम्, अर्जनीयम्, आर्जनीयम्, अर्जितम्—पञ्चोपार्जने ।

---

१. किं णिजभावपक्षं द्योतयितुमिच्छति वृत्तिकारः ? ।

२. कर्नाटकवृत्तौ कस्यचिद् गणसूत्रस्य वृत्तिरेव सूत्रत्वेन पठित्वा कर्नाटकभाषायां व्याख्यायते । कातन्त्रीयास्तत्र 'हन्त्यर्थाश्च' इति गणसूत्रं पठन्ति । कर्नाटकवृत्तिकारः पूर्वत्र चुरधात्वनन्तरमपीमामानुपूर्वी पपाठ ।

१६२. घुषिर् विशब्दे—ध्वनौ । घोषयति–घोषणां करोति । घोषा–उच्चैर्वदनम् ।

१६३. बुब्ब चिब्ब बुम्ब भुम्भ आभण्टे—गर्जने । बुब्बयति–गर्जति । बुब्बा–गर्जनम् । बुब्बोकः–गर्जकः । चिब्बयति–उच्चैर्धनति । चिब्बोकः–उच्चैर्ध्वनिता । बुम्बयति–गायति । बुम्बालः–गायकः–रागालापकः । भुम्भयति–मुखेन ध्वनति । भुम्भकः–मुखेन ध्वनिता । भुम्भूः–मुखेन ध्वननम् ।

१६४. आङः क्रन्द सातत्ये—आक्रन्दयति–निरन्तरं भवति । आक्रन्दः–नैरन्तर्येण भविता । आक्रन्दनम्–नैरन्तर्येण भवनम् ।

१६५. लश शिलायोगे[1]—पाषाणयोगे । लाशयति–पाषाणं श्लिष्यति । लाशकः–पाषाणस्य योजको विभाजको वा । लशुनम्–रसोनम् ।

१६६. भूष अलङ्कारे—भूषयति–अलङ्करोति । भूषणम्, भूट्, भूषा, भूषणीयम्–चत्वारः शृङ्गारे ।

१६७. मोक्ष असने—त्यागे । मोक्षयति–त्यजति । मोक्षुः–यतिः । मोक्षः–मुक्तिः ।

१६८. अर्ह पूजायाम्—योग्ये । अर्हयति–योग्यो भवति । अर्हन्–नाभिराज्ञो मेरुदेव्याः पुत्रः । अर्हणम्, अर्हम्, अर्हणीयम्–त्रयो योग्यतायाम् ।

१६९. ज्ञा नियोजने—प्रेरणायाम् । ज्ञापयति–प्रेरयति । ज्ञपकम्, ज्ञापकम्–द्वौ स्मारके ।

१७०. शृधु प्रहसने—किञ्चिद्धसने । शर्धयति–स्मयते । शर्धकः–स्मायकः । शर्धनम्–स्मयनम् ।

१७१. भजे विश्राणने–दाने । भाजयति–ददाति । भाक्–दाता । अन्यत्र–भजते–सेवते, भाजकः–सेवकः ।

१७२. यत खेदनिम्राच्छादनेषु[2]—दुःखे, छायायाम्, आच्छादने च । यातयति दुःखितो भवति । यातकः–दुःखी । यातना–दुःखम् ।

---

१. कातन्त्रीया अन्ये च 'लस शिल्पयोगे' इति पठन्ति । कर्नाटककर्तृसम्मता 'शिल्पयोगे' इत्येव 'शिलायोगे' इत्येवं पठित्वा तथा व्याख्यातः स्यात् । यद्वा ततः पूर्वमेव लेखकप्रमादात् पाठो भ्रष्टः स्यात् ।

२. 'निकारोपस्कारयोः' इति कातन्त्रा अन्ये च वैयाकरणाः ।

१७३. [ निरश्च प्रतिदाने[1]—] निरः परो यतिः प्रतिदानधनधान्यविषयात्यतिहारार्थे चुरादौ वर्तते[1]—निरःपरो यतधातुरादाने, धने, धान्ये, विषये, अतिक्रमे च चुरादौ वर्तते। निर्यातयति—धनं धान्यं वा गृह्णाति, उपभुङ्क्ते। निर्यातः—प्रतिग्राहकः। निर्यातनम्—मूल्यम्।

१७४. वस स्नेहनच्छेदावहरणेषु[2]—स्नेहने, छेदने वर्तने च। वासयति—स्निह्यति। वसुः—देवजातिः। वासुः—त्रुटितः। वासना—कर्तनम्।

१७५. चर असंशये—निश्चये। चारयति—निश्चिनोति। चरादन्तिन्—चरधातोः 'अन्तिन्' प्रत्ययो भवति। चरन्ती[3]—देशान्तरवासी।

१७६. च्यव[4] हसने—च्यावयति—हसति। च्यवनः—मुनिः [ एतन्नामा ]।

१७७. भू क्लृप अव अवकल्पने[5]—कल्पनायाम्। भावयति—कल्पयति—कल्पनां करोति। भावना—कल्पना। कल्पयति—भावयति। कल्पना—भावना। आवयति—निरूपयति। अवना—निरूपणम्।

१७८. रक लक आस्वादने—रुच्याम्। राकयति—आस्वदते। राका—पूर्णिमा। लाकयति—आच्छादयति। लाका—कम्बलम्।

१७९. अञ्जु विशेषणे—अञ्जयति—श्रेष्ठो ( विशिष्टो ) भवति। अञ्जनम्—विशिष्टम्।

१८०. लिगि वैचित्र्ये[6]—ज्ञाने। लिङ्गयति—विचित्रणं करोति (ज्ञापयति) लिङ्गम्—विचित्रम्। स्त्रीपुम्नपुंसकलिङ्गे विचित्रीकरोति—स्त्रीलिङ्ग—पुँल्लिङ्ग—नपुंसकलिङ्गप्रत्ययभेदेन धातुर्बहुप्रकारो भवति (?)।

---

१. सूत्रमिदं कातन्त्रानुसारमिहोपन्यस्तम्। कर्नाटकवृत्तौ सूत्ररूपेण निर्दिष्टा वृत्तिरस्यैव वर्तते। तत्र किञ्चित् पाठाशुद्धिर्वर्तते 'प्रतिदाने' पदेन पृथग्भाव्यम्, तस्य चाग्रिमोऽर्थो ज्ञेयः। अस्य संस्कृतपाठस्य कर्नाटकव्याख्या तु भ्रष्टा वर्तते, तथापि तस्या यथाशब्दं संस्कृतरूपान्तरमत्र उपस्थापितम्।

२. '०च्छेदावहननेषु' इति कातन्त्राः। वृत्तौ 'कर्तनम्' (=काटना) इत्यर्थो निर्दिष्टः। न 'अवहनने' इत्यस्य संभवति न 'अवहरणे' इत्यस्य।

३. नान्तमिदं प्रातिपदिकम्। चरन् इत्यस्य स्त्रीलिङ्गे 'चरन्ती' इति तु रूपान्तरं ज्ञेयम्।

४. 'च्यु हसने' इति कातन्त्रीयाः।

५. 'अवकल्पने' इत्यत्रावपाठः प्रामादिकः तस्य धातुरूपेण पृथक् स्वीकृतत्वात् वृत्तौ च 'कल्पनायाम्' इत्येव व्याख्यातत्वात्। कातन्त्रीयास्तु 'अव' इति पृथग्धातुं न पठन्ति तेषाम् 'अव' इत्युपसर्ग एव। अपि च 'अवकल्कने' इति कातन्त्रीयाणामन्येषां च पाठो ज्ञेयः।

६. 'चित्रीकरणे' इति कातन्त्रीया अन्ये च।

१८१. मुद संसर्गे—मोदयति–मिलति। मोदकम्–एतन्नामकं खाद्यम्।

१८२. त्रस धारणे[1]—त्रासयति–सहते। त्रासुः–तुला ( तराजू )।

१८३. उद्ध्रस उञ्छे[2]—उञ्छने। ध्रासयति[3]–उञ्छीयते। ध्रसन्, ध्रसकः, ध्रासः = त्रय उञ्छयितरि। ध्रसनम्, ध्रसनीयम्–द्वा उञ्छने।

१८४. मुच प्रमोचने[4]—त्यागे। मोचयति–त्यजति। मोचकः–वृक्षविशेषः।

१८५. ग्रस ग्रहणे—ग्रसयति[5]–गृह्णाति। ग्रासः–ग्रहणम्।

१८६. पुष धारणे—सहने। पोषयति–सहते। पोषणम्–सहनम्।

१८७. दळ विदारणे—दाळयति–विदारयति। दलः–( द्वयोः समयोरेकतरो भागः )।

१८८. पट पुट लुट तुजि पिजि लुजि भजि[6] लघि त्रसि पिशि कुसि दशि कुशि घट घटि बृहि बृह बल्ह गुप धूप विछ चीवृ पुथ ( १, पुथृ ) लोछ ( १, लोचृ ) लाछ णद कुप तर्क वृतु वृधु भाषार्थाः—पाटयति–शब्दयति। पटुः–धीरः। पटोली–शाकविशेषः ( चचींड़ा )। पटलः–सन्धिः। पटः–वस्त्रम् ( = दुपट्टा )। द्विपटी–( दो दुपट्टे )। पटिकम्–औषधम्। पाटवम्–धीरत्वम्। पटली–कुलम्। पटीरः–चन्दनम्। पटनम्, पटनीयम्, पट्यम्, पाट्यम्–चत्वारः शब्दे। पोटयति–सामान्यं भवति। पोटा–समानता[7]। पुटम्–रागः। पोटनम्, पोटनीयम्, पोट्यम्, पौट्यम्–चत्वारः सामान्ये। लोटयति–पदा ताडयति। लोटुः, लोटनम्, लोटनीयम्, लोट्यम्, लौट्यम्–पदा ताडनम्। तुञ्जयति–निन्दति। तुञ्जकः–निन्दकः। तुञ्जनम्, तुञ्जनीयम्–निन्दा। तञ्जयति–? तञ्जकः–? तञ्जनम्, तञ्जनीयम् ?। पिञ्जयति–हिक्कति। पिञ्जारः–हिक्का ( 'हिचकी' इति भाषायाम् )। पिञ्जरी–उपरिस्था ग्रन्थिः। पिञ्जनम्, पिञ्जनीयम्–हिक्कनम्। लुञ्जयति–आकर्षति। लुञ्जकः–आकर्षकः।

---

१. 'वारणे' इति कातन्त्रीयाः। २. 'उञ्छे' इति कातन्त्रीया अन्ये च।

३. इह आख्याते कृदन्तेषु च रूपेषु धातुसंनियोगेन पठित उद्उपसर्गः कथं न प्रयुक्त इति न ज्ञायते।

४. अस्माद्धातोरग्रे कातन्त्रपाठे 'आस्वदः सकर्मकात्' इति गणसूत्रं पठ्यते। इदं सूत्रमिह काशकृत्स्नवृत्तौ स्वद धातोः ( ९।१९१ ) अनन्तरं पठ्यते। परन्तु तत्र स्वदधातुसम्बन्धेनैव व्याख्यायते। ५. 'ग्रासयति' इति युक्तः पाठः स्यात्।

६. वृत्तावयं धातुर्न व्याख्यातः। ७. पोटा एकत्वारं प्रसूता। काशिका ३।१।

लुञ्जनम्, लुञ्जनीयम्–आकर्षणम् । लङ्घयति–कूर्दते । लङ्घकः–कूर्दकः । लङ्घनम्, लङ्घनीयम्, लङ्घ्यम्–त्रयः कूर्दने । त्रंसयति–बिभेति । त्रंसः, त्रंसकः–द्वौ भेतरि । त्रंसम्, त्रंसनम्, त्रंसनीयम्–भयम् । पिंशयति–? पिंशः, पिंशकः–? पिंशनम्, पिंशनीयम्–? । कुंसयति-रोदिति । कुंसः, कुंसकः–रोदकः । दंशयति–कृन्तति । दंशकः–दंशः । उपदंशकः–शुक्तम् ('अचार' इति भाषायाम्) दंष्ट्रा–दशनम् । दंशनम्, दंशनीयम्–द्वौ कर्तने । कुंशयति–? कुंशः, कुंशकः–? कुंशनम्, कुंशनीयम् ? । घाटयति–अल्पी भवति । घटना–घटना, कुलम् । घटिका–घटी । घटः–देहः । घटकः–घटम् । घटनम्, घटनीयम् घट्यम्, घाट्यम्, उद्घाटः–पञ्च घटनायाम् । घण्टयति–कथयति । घण्टा–घण्टा इत्येव प्रसिद्धम् । देवघण्टा–मन्दिरस्था घण्टा । क्षुद्रघण्टिका–नूपुरम् । घटनम्, घटनीयम्–द्वौ कथने । बृंहयति–वर्धते । बृंहणम्–वर्धनम् । ब्रहयति[1]–अधिकं भवति । ब्रह्म[1]–ब्रह्म । बल्हयति–दृढो भवति । बल्हः–नगरम् । बाल्हीकः–अश्वः, घोटकः । गोपयति, गोपायति–रक्षति । गोपः–रक्षकः । गोपनम्, गोपनीयम्–रक्षणम् । धूपयति, धूपायति–परिमलयति । धूपः–'धूप' इत्येव नाम्ना प्रसिद्धं द्रव्यम् । विच्छयति–? विच्छकः–? विच्छा ? चीवयति–पीडयति । चीवरः–पक्षी । पोथयति–अतिशब्दयति । पोथः–महिषः । लोचयति–पश्यति । लोचनम्–चक्षुः । लोकयति–पश्यति । लोकः–पृथिव्यादिः, मनुष्यः । नादयति–झङ्करोति । नादः–झङ्कारः । कोपयति–क्रुद्धो भवति । कोपः–क्रोधः । तर्कयति–ऊहयति । तर्कः–ऊहः, विवादः । वर्तयति–व्यवहरति । वर्तनम्–प्रवर्तनम् । वर्धयति–एधते । वर्धनम्–एधनम्, वृद्धिः ।

१८९. पूरि (?, पूरी) आप्यायने—तृप्तौ । पूरयति–तर्पयति । पूरणम्–तृप्तिः ।

१९०. रुज हिंसायाम्—रोजयति–मारयति । रोजकः–घातकः । रोजनम्–हिंसा ।

१९१. ष्वद आस्वादने—स्वादयति–आस्वदते । आस्वादी–आस्वादकः । आस्वादनम्–आस्वादः ।

१९२. आस्वदः सकर्मकात्—आङ्पूर्वकात् सकर्मकात् स्वदधातोरिन् प्रत्ययो भवति[2] । आस्वादयति–आस्वादं पश्यति (गृह्णाति) । आस्वादयन्, आस्वादकः–आस्वादयिता ।

---

१. धातु सूत्रे 'बृह' पठ्यते, तत्र 'ब्रह' शुद्धः पाठः स्यात् ।

२. अन्ये वैयाकरणाः 'मुच मोचने' (९।१८४) इत्यारभ्य 'स्वद आस्वादने' (९।१९१) इत्यन्ता धातवः सकर्मका 'णिच्' (इन्) प्रत्ययमुत्पादयन्ति इत्यर्थमाहुः ।

१९३. कथ[1] वाक्यप्रबन्धे —सम्यग्भाषणे। कथयति–वदति। कथकः–वक्ता। कथा, कथनम्, कथनीयम्–त्रयो वचने। नादन्तात् सन्[2]–अकारान्ताद्धातोः सन् प्रत्ययो न भवति।

१९४. वर ईप्सायाम् —वरयति–इच्छति। वरः–वरणीयः (दूल्हा)।

१९५. गण संख्याने—गणनायाम्। गणयति–संख्यायति। गणकः–संख्यायकः। गणिका–वेश्या। गणः–शिवशरणः। गणनम्–गणितम्।

१९६. शठ श्वठ सम्यगाभाषणे—शठयति–सम्यग्वदति। शठः–चतुरः। श्वठयति–हास्यं करोति। श्वठः–हासकः (मजाक करने वाला)।

१९७. भट वट ग्रन्थे—प्रारम्भकरणे (वीरतायाम्)। भटयति–प्रारभ्यते। भटः–प्रारम्भकः। वटयति–आवर्तयति। वटुः–पटुः।

१९८. रह त्यागे—रहयति–त्यजति। राट्, राड्, रहः, रहकः–चत्वारस्त्यागे। राहुः–एतन्नामा ग्रहः।

१९९. स्तन गद देवशब्दे—मेघध्वनौ। स्तनयति–शब्दयति गर्जति। स्तनयित्नुः–मेघः। स्तनः–उरोजः, कुचः। गदयति–अव्यक्तं वदति (तुतलाता है)। गद्गदः–(स्खलितवाक्)।

२००. पत गतौ—पतयति–गच्छति। पतिः–यजमानः।

२०१. पप अनुपसर्गात् गतौ—उपसर्गरहितात् पपधातोरिन् प्रत्ययो-भवति गतौ। पपयति–गच्छति। पाट्, पाड्, पपः, पपकः,–चत्वारो गन्तरि।

२०२. स्वर आक्षेपे—कथने। स्वरयति–स्वातन्त्र्येण कथयति। स्वरः–अच्।

२०३. चर प्रतियत्ने—वीरकार्ये प्रतियत्ने। चरयति–पुनःकार्यं करोति। चरः–वीरः।

२०४. कल गतौ संख्याने च—कलयति–गच्छति। कालः–समयः। कलना–गणना।

२०५. चह परिकल्कने—औषधगुटिकायाम्। चहयति–गुटिका भवति। चहनम्–गुटिका।

---

१. इतः पूर्वं कातन्त्रे 'इतोऽदन्ताः' इति निर्देश उपलभ्यते।

२. नायं नियमः पाणिनीये तन्त्रेऽन्येषु चोपलभ्यते।

२०६. मह पूजायाम्—महत्त्वे। महयति—पूज्यो भवति। महादेरन्तः—महप्रभृतिभ्यो धातुभ्य 'अन्त' प्रत्ययो भवति। महन्तः—पूज्यः।

२०७. स्वार कृप श्रथ दौर्बल्ये—बलाधिक्ये (?)[1]। सारयति—अधिकबलो भवति। सारः-सेतुः। कृपयति—दयते। कृपालुः—दयालुः। कृपा—दया।

२०८. स्पृह ईप्सायाम्—स्पृहयति—इच्छति। स्पृहन्—इच्छुकः। स्पृहा—इच्छा।

२०९. भाम क्रोधे—भामयति—क्रुध्यते। भामा, भामिनी—द्वौ क्रुद्धायाम्।

२१०. सूच पैशुन्ये—सूचयति—पैशुन्यमाचरति। सूचः—सूचकः। सूचनम्—सूचना।

२११. खेट भक्षणे—खेटयति—खादति। खेटकम्—रिङ्गणम् (रेंगना)।

२१२. खोट्ट[2] क्षेपे—कथने (?)। खोट्टयति—कथयति (?)। खोट्टकः—कथकः। खोट्टनम्—कथनम्।

२१३. गोम उपलेपने—संश्लेषणे। गोमयति—उपलिपति। गोमनम्—लेपनम्।

२१४. कुमार क्रीडायाम्—खेलने। कुमारयति—क्रीडते। कुमारः—षण्मुखः।

२१५. शील उपधारणे—शीलयति—वर्तयति। शीलम्—स्वभावः। सुशीला—कामधेनुः।

२१६. साम सान्त्वने—साधने। सामयति—साध्नोति। सामन्तः—साधकः। सामन्—वेदः।

२१७. वेल कालोपदेशे—काले सन्दर्भे च। वेलयति—त्वरयति। वेलः—समयः।

२१८. पल लवनपवनयोः—छेदने उद्धुयने च। पलयति—लुनाति, उद्धुयते। पलायनम्—लवनम्, उद्धुयनम्।

---

१. दुर् दुःखं बलं यस्य स दुर्बलः, अल्पबलान् प्रति बाधको दुःखरूपः। दुर्गतं बलं यस्मात् इत्यर्थे बलहीनः। धातुपाठेऽन्यत्रापि एकेन शब्देन विरुद्धावर्थौ द्योत्येते। यथा-संघातपदेन 'एकीभावः, सम्यग्घातो नाशः, उभा उच्येते।

२. कातन्त्रपाठे 'खोट' इत्येव पाठः। हिन्दीभाषायां प्रयुज्यमानः सुवर्णादिषु धात्वन्तरप्रक्षेपार्थकः खोटशब्द एतद्धातुज एव। यद्वा खोट्ट इत्यस्यापभ्रंशरूपः।

२१९. वात गतिसुखसेचनयोः[1]—गतौ सुखसमाप्तौ (?) च । वातयति—गच्छति । वातः—वायुः ।

२२०. गवेष मार्गणे—अन्वेषणे । गवेषयति—अन्वेषयति । गवेषयन्—अन्वेषकः । गवेषणम्—अन्वेषणम् ।

२२१. वास उपसेवायाम्—गौणकार्ये (?) । वासयति—अप्रधानं कार्यं करोति । वासयन्—गौणकार्यकर्ता । वासना—गौणं कार्यम् ।

२२२. निवास आच्छादने—निवासयति—आच्छादयति । निवासयन्—आच्छादकः । निवासनम्—आच्छादनसाधनम् ।

२२३. भाज पृथक्कर्मणि—पृथक् कार्यकरणे । भाजयति—पृथक्कार्यं करोति । भाजयन्—पृथक् कार्यकर्ता । भाजनम्—घटः ।

२२४. सभाज प्रीतिसेवनयोः—प्रेम्णि कार्ये च । सभाजयति—प्रीतिं करोति । सभाजयन्—प्रीतिकर्ता । सभाजनम्—प्रीतिः ।

२२५. ऊन परिहाणे—न्यूने । ऊनयति—अल्पं भवति । ऊनयन्—अल्पं भावुकः । ऊनम्—अल्पम् ।

२२६. ध्वन शब्दे—ध्वनयति—शब्दयति । ध्वनयन्—शब्दकः । ध्वनिः, ध्वानः—द्वौ शब्दकर्तरि ।

२२७. कूट[2] दाहे—तृषायाम् । कूटयति—उष्णं करोति । काष्ठकूटः—कालाग्निः रुद्रः ।

२२८. केत श्राम कुण गुण आमन्त्रणे—अभिमुखं भूत्वा वार्ताकरणे । केतयति—अभिमुखमायाति । केतुः—ध्वजः । निकेतनम्—गृहम् । श्रामयति—श्रमं करोति । श्रमणः—तपस्वी । कुणयति—नृत्यति । कुणयन्—नर्तकः । कुणनम्, कुणनीयम्, कुणकम्—त्रयः क्रीडने । गुणयति—गुणनं करोति । गुणयन्—गुणनकर्ता । गुणनम्, गुणनीयम्, गुणकम्—त्रयो गणनायाम् ।

२२९. स्तेन चौर्ये—स्तेनयते[3]—चोरयति । स्तेनानः—चौरः । स्तेनम्, स्तेननम्, स्तेननीयम्—त्रयश्चुरायाम् ।

---

१. 'गतिसुखसेवनयोः' इति कातन्त्रीयाः ।

२. 'कुट' इति कातन्त्रीयाः ।

३. कातन्त्रे धातुनिर्देशानन्तरम् "परस्मैभाषाः" इति पठ्यते । तेनायं धातुः परस्मैपदीति व्यक्तम् । तदनन्तरं च 'आगर्वादात्मनेपदी' इति गणसूत्रं पठ्यते, तेन पदधातो-( ९।२३० ) रारभ्य गर्वधातु-( ९।२३८ ) पर्यन्तमात्मनेपदं विहितम् ।

२३०. पद गतौ—पदयते–गच्छति। पदानः–गमकः। पदम्, पदनम्, पदनीयम्, पदयम्–चत्वारो गमने।

२३१. गृह ग्रहणे—गृहयते–गृह्णाति। ग्रहः (?, गृहः)—प्रमत्तः।

२३२. मृग अन्वेषणे—गवेषणे। मृगयते–गवेषयति। मृगः–एतन्नामा श्वापदः।

२३३. कुह विस्मापने—कृत्रिमे। कुहयते–कृत्रिमं करोति। कुहानः, कुहकः–(ऐन्द्रजालिकः)।

२३४. शूर वीर विक्रान्तौ—वीरतागमे। शूरयति[1]–अग्रे गच्छति। शूरः–वीरः। वीरयति[1]–उपद्रवे युद्धे गच्छति। वीरः–शूरः।

२३५. स्थूल परिब्रहाणे (?, परिबृंहणे)—स्थूलयते–स्थूलो भवति। स्थूलानः–स्थूलः। स्थूलम्–बृंहणम्।

२३६. अर्थ उपयाच्ञायाम्—ग्रहणे। अर्थयते–धनं याचते। अर्थानः–याचकः। अर्थः–सारः।

२३७. सत्र संतानक्रियायाम्—धर्मसंघाते। सत्रयते–सततं धर्ममाचरति। सत्रम्–धर्मसन्तानम्।

२३८. संग्राम युद्धे—संग्रामयते–युध्यते। संग्रामः–युद्धम्।

२३९. गर्व माने—श्रेष्ठतायाम्। गर्वयते–मानं करोति। गर्वितः, गर्वाणः–द्वौ अहंकारयुक्ते। गर्वः, गर्वणम्, गर्वणीयम्–त्रयोऽहंकारे।

२४०. सूत्र अवमोचने—योजने। सूत्रयति–संयुनक्ति। सूत्री, सूत्रकः, सूत्रन्–त्रयः संयोजके। सूत्रम्, सूत्रितम्, सूत्रणम्, सूत्रणीयम्–चत्वारः संयोजने।

२४१. मूत्र प्रस्रवणे—(जलस्य) पतने। मूत्रयति–(दूषितजलं) स्रवति। मूत्रम्, मूत्रणम्, मूत्रणीयम्–त्रयः (दूषितस्य जलस्य) प्रस्रवणे।

२४२. रूक्ष पारुष्ये—कठोरतायाम्। रूक्षयति–कठोरमाचरति। रूक्षवान्, रूक्षी, रूक्षकः–त्रयः कठोरव्यवहर्तरि। रूक्षम्, रूक्षणीयम्, रूक्षणम्–कठोरव्यवहारः।

२४३. पार तीर कर्मसमाप्तौ—कार्यान्ते। पारयति–पूरयति। पारयन्,

---

१. आत्मनेपदप्रकरणात् 'शूरयते वीरयते' इति शुद्धः पाठः।

पारकः—द्वौ पूरके। पारम्, पारायणम्, पारणीयम्, पारणम्—चत्वारः कर्म-समापने। तीरयति—समापयति। तीरयन्, तीरकः—द्वौ पूरके। तीरम्, तीरणम्, तीरणीयम्—त्रयः समापने।

२४४. पुट संसर्गे—संमिश्रणे। पुटयति—मिश्रयति। पुटयन्, पुटः, पुटकः—त्रयो मिश्रके। पुटनम्, पुटनीयम्—द्वौ मिश्रणे।

२४५. कथ्र[1] शैथिल्ये—शिथिलभावे। कथ्रयति—शिथिलो भवति। कथ्रः, कथ्रकः, कथ्रयन्—त्रयः शिथिलभावुकेः। कथ्रणम्, कथ्रणीयम्—द्वौ शैथिल्ये।

२४६. अंश समाघाते—सहभावे। अंशयति—सह गच्छति। अंशकः—सह गन्ता। अंशुमान्—सूर्यः। अंशुः—किरणः। अंशः—बलिः। अंशनम्, अंशनीयम्—सहभावे।

२४७. चित्र विचित्रदर्शनयोः[2]—ज्ञाने दर्शने च। चित्रयति—जानाति। चित्री, चित्रकः—द्वौ ज्ञातरि। चित्रम्, चित्रणम्, चित्रणीयम्—त्रयो ज्ञाने।

२४८. वट विभाजने—हस्तशिल्पे (दस्तकारी में)। वटयति—हस्तेन कार्यं करोति। वटः—हस्तेन कार्यकारको बालकः। वटनम्, वटनीयम्—द्वौ हस्तशिल्पे। वटः—एतन्नामा वृक्षविशेषः। वाटी—मार्गः, उद्यानं च। वटा—?। वटकः—बालकः। अवटम्—गहनम्। अवट्यः—गर्ते निवसिता।

२४९. ज्वल[3] प्रकाशने—ज्वलयति—प्रकाशयति। ज्वलयन्—अग्निः। ज्वालः, ज्वाला—द्वौ प्रज्वलने। ज्वालुः—कीलकम्।

२५०. मिश्र संपर्के—मेलने। मिश्रयति—संपर्कयति। मिश्रापणम्—मिलितम् (?)।

२५१. स्तोम श्लाघायाम्—पूज्ये। स्तोमयति—पूज्यो भवति। ज्योतिष्टोमेन स्वर्गकामो यजेत्—स्वर्गकाङ्क्षी स्फटिकलिङ्गेन पूजां कुर्यात्[4]।

२५२. छिद्र कर्णभेदे—कर्णछेदे[5]। छिद्रयति—कर्णं वेधयति। छिद्रकः—कर्णवेधकः।

२५३. अन्ध दृष्ट्यपसंहारे[6]—अन्धयति—दृष्टिरहितो भवति। अन्धकः—राक्षसः। अन्धकारः—तमः। अन्धतामिस्रम्—नरकविशेषः।

---

१. 'कथ्र' इति कातन्त्रीयाः।
२. 'चित्रीकरणे कदाचिद् दर्शने च' इति कातन्त्रीयाः।
३. 'ज्वल प्रकाशने' इति कातन्त्रीयाः।
४. वृत्तिकारः शैवमताग्रहेण ज्योतिष्टोमशब्दस्य विचित्रां कल्पनामुद्भावयांचकार।
५. कर्णवेध इत्यर्थः।
६. 'दृष्ट्युपसंहारे' इति कातन्त्रीयाः।

२५४. दण्ड दण्डनिपातने—दण्डयति–दण्डं ददाति । दण्डकः, दण्डयन्–दण्डप्रदाता । दण्डम्–दण्डम्, काष्ठम् ( यष्टिका ), सेना । दण्डी–संन्यासिविशेषः, राजा, यमः, भिक्षुः ।

२५५. अङ्क लक्षणे—चिह्ने । अङ्कयति–चिह्नयति । अङ्ककः, अङ्कवान्, अङ्किः–त्रयः परिचायके । अङ्कः–( गोद ) युद्धम्, चिह्नम् । अङ्कनम्, अङ्कनीयम्, अङ्कितम् – त्रयश्चिह्नकरणे । अङ्का–गुरुनाथपत्नी, श्मशानम्, अज्ञेयः ( ? ) ।

२५६. सुखदुःखे[1] तत्क्रियायाम्—सुखे दुःखे च । सुखयति–सुखं भुङ्क्ते । सुखी-सुखयुक्तः । सुखम्–अनामयम् । दुःखयति–दुःखं भुङ्क्ते । दुःखी–दुःखयुक्तः ।

२५७. रस आस्वादनस्नेहनयोः—रसयति–स्वदयति । रसिकः–स्वदिता । रसः । तैलम् ( ? ) । रसज्ञा, रसना–जिह्वा ।

२५८. व्यय वित्तसमुत्सर्गे—धनव्यये । व्यययति–वित्तमुत्सृजति । व्ययः–धनोत्सर्गः । अव्ययम्–धनोत्सर्गाभावः ।

२५९. रूप रूपक्रियायाम्—रूपयति–रूपं निर्माति । रूपकः–अलङ्कारः । रूपम्–आकृतिः । निरूपम्, निरूपणम्, निरूपितम्–त्रयो गुरुवाक्ये । रूपिणी—रूपजीवना–द्वौ वेश्यायाम् । रौप्यम्–रजतम् । महारौप्यम्–सुवर्णम् ।

२६०. छेद द्वैधीकरणे—एकस्य द्वित्वे । छेदयति–द्वैधीकरोति ( विदारणेन द्वित्वमापादयति ) । छेत्ता, छेदकः, छेदी–त्रयो विदारके । छेदनम्, छेदनीयम्, छेद्यम्–त्रयो विदारणे ।

२६१. व्रण गात्रविचूर्णने—शरीरस्य विदारणे । व्रणयति–शरीरं विदीर्यते । व्रणम्–विदारणम् ।

२६२. वर्ण वर्णक्रियाविस्तारगुणवचनेषु—रागे विस्तारे प्रशंसायां च । वर्णयति–रजति, विस्तारयति, प्रशंसयति । वर्णम्–रागः । वर्णकम्–रागः, पद्मम् । वर्णनम्, वर्णनीयम्–द्वौ वर्णने । वर्णी–जातिवान् ( ? ) ।

---

१. 'दुःखे' इत्यत्र एकारः किमनुबन्ध उत द्विवचनमिति सन्दिह्यते । एकारानुबन्धस्यात्र फलविशेषस्यादर्शनात् कातन्त्रपाठे तदभावाच्च नायमनुबन्ध इति प्रतीयते । 'सुखदुःखे' इति द्विवचनरूपं सम्भवति, परन्तु न काप्यन्यत्रैतादृशो निर्देश उपलभ्यते । तस्माद्द्विवचनरूपमपि सन्दिह्यते ।

२६३. पर्ण हरितभावे—पर्णयति–हरितो भवति । पर्णम्–पत्रम् । पर्ण्यम्–पत्रवान् । पर्णशाला–पर्णमयी कुटी । अपर्णा–गौरी ।

२६४. लाभ प्रेरणे—धनागमे । लाभयति–धनागमो भवति । लाभम् (?), लाभनम् , लाभनीयम्–त्रयो धनागमे ।

२६५. क्षिप प्रेरणे[1]—नियामने । क्षिपयति–नियामयति । क्षिप्तम् , क्षिप्तिः, क्षेपणम् , क्षेपणीयम्–चत्वारो नियामे । क्षेपणी–? ( नौदण्डः ) ।

२६६. अघ पापकरणे—अघयति–दुर्व्यवहारं करोति । अघम्–पापम् । अघवान्–पापी ।

२६७. मृष क्षान्तौ—सहने । मृषयति–सहते । मृषा–अनृतम् । मृष्टान्नम्–पारामान्नम् ।

२६८. [2]नाम्न इन्निरस्यति[3]—नाम्नः इन् भवति निरस्यति ( प्रक्षिपति विस्तारयति ) इत्यस्मिन्नर्थे । हस्तौ निरस्यति–हस्तयति–हस्तौ विस्तारयति । पादौ निरस्यति-पादयति-पादौ विस्तारयति । मस्तकयति–शिरो विस्तारयति[4](?) । जिह्वयति–जिह्वां विस्तारयति[5] (?) । मेढ्रयति—मेढ्रं विस्तारयति ।

२६९. प्रकाशयत्यपि[6]—प्रकाशने उद्घाटनेऽर्थेऽपि नाम्न इन् भवति । नेत्रयति–चक्षुषी उद्घाटयति । मुखयति मुखमुद्घाटयति । गुदयति–गुदमुद्घाटयति[7] ।

२७०. शृणोत्यपि[8]—नाम्नः शृणोत्यर्थेऽपि इन् भवति । वेदयति–वेदं शृणोति । तन्त्रयति–तन्त्रं शृणोति । पुराणयति–पुराणं शृणोति ।

२७१. श्वेताश्वतरगालोडिताह्वरकाणां तरेतकलोपाश्च चक्षणे[9]—श्वेताश्वतर गालोडित अह्वरक शब्दानां तर इत क इत्येतेषां लोपो भवति चक्षणे

---

१. कातन्त्रे तु 'लक्ष क्षिप प्रेरणे' इत्येकं सूत्रम् ।

२. कातन्त्रपाठे इतः पूर्वम् 'बहुलमेतन्निदर्शनम् । इत्यदन्ताः समाप्ताः । अथ गणसूत्रम्' इति वचनान्युपलभ्यन्ते । तेषु प्रथमं वचनं स्वत्राप्यपेक्षितं । उत्तरसूत्राणि तस्यैव प्रपञ्चरूपाणि ।

३. 'इनङ् अङ्गनिरसनेऽपि' इति कातन्त्रपाठः ।

४ अतिविचारयतीत्यर्थः । ५. अतिभाषत इत्यर्थः ।

६. सूत्रमिदं कातन्त्रे नास्ति । तत्रपूर्वसूत्रेऽपिनाऽयमर्थः संगृहीतः स्यात् ।

७. अपानवायुं त्यजतीत्यर्थः ।

८. कातन्त्र इदमपि सूत्रं नास्ति । अयमप्यर्थस्तत्रप्रथमसूत्रस्थेनाऽपिना संगृहीतः स्यात् ।

९. कातन्त्रे तु 'श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च' इति पाठः । इनोऽग्रे च 'मन्तुवन्तुविनां लुक् च' इत्यधिकं सूत्रं पठ्यते ।

कथनेऽर्थे [ इन् प्रत्ययश्च ] श्वेताश्वतरमाचष्टे–श्वेताश्वयति, श्वेताश्वतरविषये कथयतीत्यर्थः । गालोडितमाचष्टे = गानसारं कथयति ( ? )–गालोडयति । सामवेदमुच्चारयतीत्यर्थः । आह्वरकमाचष्टे–मारणमन्त्रं ब्रवीति–आह्वरयति ।

२७२. प्रशस्तस्य श्रा[१]—प्रशस्तशब्दस्य 'श्रा' आदेशो भवति । श्राययति–प्रशस्तो भवति ।

२७३. वृद्धस्य च ज्या[२]—वृद्धशब्दस्य ज्या आदेशो भवति । ज्याययति वृद्धो भवति ।

२७४. अन्तिकबाढयोर्नेदसाधौ—अन्तिकबाढशब्दयोर्नेद साध आदेशौ भवतः । अन्तिकमाचष्टे–अन्तयति । बाढमाचष्टे–साधयति, शीघ्रं कथयतीत्यर्थः ।

२७५. युवाल्पयोः कन् वा—युव अल्प इत्येतयोः 'कन्' वाऽऽदेशो भवति । युवानमाचष्टे–युवयति, कनयति । अल्पयति कनयति ।

२७६. स्थूलदूरयुवक्षिप्रक्षुद्राणाम् अन्त्यस्वरादेर्लोपो गुणश्च नामिनाम्—स्थूल दूर युव क्षिप्र क्षुद्र इत्येतेषाम् अन्त्यस्वरादेर्वर्णस्य लोपो भवति गुणश्च नामिनां = इ उ ऋ ऌ इत्येतेषां स्वराणाम् । स्थूलमाचष्टे–स्थवयति । दूरमाचष्टे–दवयति । युवानमाचष्टे यु( ? य )वयति । क्षिप्रमाचष्टे–क्षेपयति । क्षुद्रमाचष्टे–क्षोदयति ।

२७७. बहोरि[न्] यादिर्भू च—बहोः परतः इन् यादिर्भवति भू च बहोः स्थाने आदेशः । बहुमाचष्टे[३] भूययति ।

२७८. प्रियस्थिरस्फिरोरुगुरुबहुलतृप्रदीर्घह्रस्ववृद्धवृन्दारकाणां प्रास्थास्फावरागराबृंहात्रपद्राघह्रसवर्षवृन्दाः—प्रिय स्थिर स्फिर उरु गुरु बहुल तृप्र दीर्घ ह्रस्व वृद्ध वृन्दारक इत्येतेषां स्थाने प्रा स्था स्फा वरा गरा बृंहा त्रप द्राघ ह्रस वर्ष वृन्द इत्येते आदेशा भवन्ति ।

[४] प्रियमाचष्टे–प्रापयति । स्थिरमाचष्टे–स्थापयति । स्फिरमाचष्टे–स्फाययति । उरुमाचष्टे–वरयति । गुरुमाचष्टे–गरयति । बहुलमाचष्टे–बृंहयति ।

---

१. कातन्त्रे 'श्रः' अकारान्तादेशो विधीयते । पाणिनीया अपि तथैवामनन्ति ।

२. कातन्त्रे 'ज्यः' इत्यकारान्तादेशः, तथैव पाणिनीया अप्याहुः ।

३. पाणिनीयास्तु भावयति रूपमाहुः यिडागमस्य प्रत्ययाङ्गत्वात् । अपरे पुनः यिट्प्रसियोगेनैव भू आदेशस्य विधानमाश्रित्य 'बहयति' रूपं युक्तं मन्यन्ते । अत्र विशेषो माधवीयायां धातुवृत्तौ नामधातुप्रकरणे द्रष्टव्यः ( पृष्ठ४२८ चौखम्बा सं० ) ।

४. इमान्युदाहरणानि कर्णाटकवृत्तौ २८० सूत्रानन्तरं पठितान्यासन् अस्माभिरत्रस्थानं नीतानि ।

तृप्रमाचष्टे–त्रपयति । दीर्घमाचष्टे–द्राघयति । ह्रस्वमाचष्टे–ह्रसयति । वृद्धमाचष्टे–वर्षयति । वृन्दारकमाचष्टे–वृन्दयति ।

२७९. तद्वदिष्ठेमेयस्सु बहुलम्—यथा इन् प्रत्यये कार्यमुक्तं तथा इष्ठ इमन् ईयस् इत्येतेष्वपि भवति बहुलम् ।

[१] नेदिष्ठः, नेदिमा, नेदीयान् । साधिष्ठः, साधिमा, साधीयान् । यविष्ठः, यविमा, यवीयान् । कनिष्ठः, कनिमा, कनीयान् । अल्पिष्ठः, अल्पिमा, अल्पीयान् । कनिष्ठः, कनिमा, कनीयान् । स्थविष्ठः, स्थविमा, स्थवीयान् । दविष्ठः, दविमा, दवीयान् । क्षेपिष्ठः, क्षेपिमा, क्षेपीयमान् । क्षोदिष्ठः, क्षोदिमा, क्षोदीयान् । भूयिष्ठः, भूयिमा, भूयान् । प्रायिष्ठः, प्रायिमा, प्रेयान् । स्थायिष्ठः, स्थायिमा, स्थेयान् । स्फायिष्ठः, स्फायिमा, स्फेयान् । वरिष्ठः, वरिमा, वरीयान् । गरिष्ठः, गरिमा, गरीयान् । बृंहिष्ठः, बृंहिमा, बृंहीयान् । त्रपिष्ठः, त्रपिमा, त्रपीयान् । द्राघिष्ठः, द्राघिमा, द्राघीयान् । ह्रसिष्ठः, ह्रसिमा, ह्रसीयान् । वर्षिष्ठः, वर्षिमा, वर्षीयान् । वृन्दिष्ठः, वृन्दिमा, वृन्दीयान् । ज्येष्ठः, ज्येमा, ज्येयान् । श्रेष्ठः, श्रेमा, श्रेयान् ।

२८०. सत्यार्थवेदना अष्टकारित एव ( ?, सत्यार्थवेदानाम् आप् तु कारित एव )—सत्य अर्थ वेद एतेषाम् आप् आगमः कारिते प्रयोज्ये कर्तर्येव भवति ।[२]

२८१. गुणवचनात्[३]—विशेष[णि] निघ्नेभ्य इन् प्रत्ययो भवति । इष्ठ, इमा, ईयान् परतोऽपि ।[४]

पटयति–सारवाक्यं वदति । पटिष्ठः, पटिमा, पटीयान् । लघयति–लघुर्भवति । लघिष्ठः, लघिमा, लघीयान् । पापयति–पापी भवति । पापिष्ठः, पापिमा, पापीयान् । एवमन्येऽपि ज्ञेयाः ।

२८२. एकस्वरा अदन्ताश्च कैश्चिच्चुरादिषु पठ्यन्ते ।[५]

---

१. इमान्युदाहरणानि २८० सूत्रानन्तरं पठितान्यासन् । अस्माभिर्यथास्थानं पठितानि ।

२. कर्नाटकटीकापाठोऽत्र महान् भ्रष्टः । अस्माभिस्तु यथाप्रकरणं सूत्रं व्याख्यातम् । अस्योदाहरणानि वृत्तौ न दीयन्ते ।

३. सूत्रमिदं कातन्त्रपाठे नास्ति ।

४. अत्र कर्नाटकवृत्तिपाठो भ्रष्टः प्रतीयते । प्रकरणानुसारम् 'गुणवचनात्' सूत्रानन्तरम् इनि इष्ठेमेयस्सु परतोऽन्त्यस्वरस्य च लोपविधायकेन सूत्रेणापि भाव्यम् । अन्यथा प्रकृतोदाहरणसंगतिर्न भवति ।

५. इदं न सूत्रम्, अपितु वृत्तिग्रन्थः । कर्नाटकानां तु सूत्रत्वेनोदाहृतस्य पुनर्व्याख्यानः । कातन्त्रे तु 'एकस्वराणाम् अदन्तानां च' इति सूत्रमुपलभ्यते ।

इतोऽग्रे कातन्त्रपाठे 'इति गणसूत्रं समाप्तः ( ? )' इतिपाठ उपलभ्यते । तदनन्तरं न 'अथ विकल्पेनेनन्ताः' इति वचनं पठ्यते ।

२८३. युच पृच संयमने—तपस्यायाम् । योजयति—तपस्यति । योगी—तपस्वी । पर्चयति—व्रतमाचरति । पर्चकः—व्रती ।

२८४. षह मर्षणे—सहने । त्तुरां सहयति (= कोलाहलं सहते) तुराषाट्—इन्द्रः ।

२८५. ईर क्षेपे—कालक्रमणे । ईरयति—कालक्षेपं करोति । ईरः—कालक्षेपकः ।

२८६. लाली द्रवीकरणे—लालयति—द्रवी भवति । लाला—मुखस्थं जलम् ।

२८७. वृजी वर्जने—त्यागे । वर्जयति—त्यजति । वर्जकः—त्यागी । वर्जनम्—त्यागकरणम् ।

२८८. जॄ वयोहानौ—जरयति—वृद्धो भवति । जरा—वृद्धत्वम् ।

२८९. चिर वियोजनसंपर्चनयोः—वियोगे कूटे (?) च । चेरयति—मिलति । चेरमः—शिवभक्तः । चिरम्—बहुकालः ।

२९०. शिष आसर्वोपयोगे[1]—आसमन्तात् प्रयोगे । शेषयति—प्रयोजयति । शेषः—सर्पराजः । शिष्टकः, शिष्यः—द्वौ शिष्ये ।

२९१. विपूर्वोऽतिशये—विपर्वो शिषधातुरतिशयेऽर्थे वर्तते । विशेषः अतिशयः ।

२९२. तृप प्रीणने—प्रीतीभावे । तर्पयति—प्रीतीभवति । तृप्तः, तर्पकः—द्वौ प्रीतयुक्ते । तर्पणम्, तृप्तिः, तर्पणीयम्—प्रीतीकरणे ।

२९३. छद अपवारणे—कपटे । छदयति—कपटं करोति । छद्मन्, छद्कः—द्वौ कपटिनि ।

२९४. मी गतौ—माययति—गच्छति । माया—गन्त्री (नर्त्री) । मायी, मायावी—द्वौ मायायुक्ते । अनाकौ णानुबन्धवत्—अन आक प्रत्ययौ णकारानुबन्धप्रत्ययवत् कार्यं लभेते । मायनम्, मायकम्—द्वौ मनसः चाञ्चल्ये ।

२९५. क्रथ हिंसायाम्—क्राथयति—हिनस्ति । क्रथकः—घातकः । क्रथनम्, क्रथनीयम्—द्वौ हिंसायाम् ।

---

१. कातन्त्रे 'असर्वोपयोगे' इति पाठः । अयमेव च शुद्धः पाठः ।

२९६. श्रथ बन्धने—श्राथयति-बध्नाति। श्रथकः-बन्धकः। श्रथनम्, श्रथनीयम्—द्वौ बन्धने।

२९७. चीक सीक आमर्षणे—विमर्शे। चीकयति-विचारयति। सीकयति-विचारयति। चीका, सीका—द्वौ मूल्ये (?)।

२९८. आङः परः सदिर्गत्यर्थे—आङ् परः सद्धातुर्गत्यर्थे [प्रयुज्यते]। आसादयति-आगच्छति। आसादनम्-आगमनम्। आसादी-मृत्युदेव्याः पूजकः।

२९९. जुष परितर्के—विवेके। जोषयति-विवेचयति। जोट्, जोड्, जोषकः-त्रयो विवेकिनि। जोषणम्, जोषणीयम्, जोष्यम्-त्रयो विवेचने।

३००. श्रन्थ ग्रन्थ सन्दर्भे—मेलने (?)। श्रन्थयति-मेलयति। श्रन्थः, श्रन्थकः—द्वौ मेलके। श्रन्थनम्, श्रन्थनीयम्—द्वौ मेलने। ग्रन्थयति-अतिहसति (?)। ग्रन्थन्, ग्रन्थकः—द्वौ अतिहासके। ग्रन्थः, ग्रन्थनम्, ग्रन्थनीयम्—त्रयोऽतिहासे।

३०१. आप्लृ लम्भने—अवलम्बने। आपयति-अवलम्बयति। आपन्, आपकः—द्वौ अवलम्बिनि। आपनम्, आपनीयम्—द्वौ अवलम्बने।

३०२. तनु शब्दोपकरणयोः—शब्दे उपकरणे च। तानयति-शब्दयति। तानन्, तानकः, तान्-त्रयः शब्दके। तानम्-रोगगतिः (रोगविशेषः)। तानकम्-शास्त्रसाधकसन्धानम् (?)।

३०३. वच सन्देशे—साधुवाक्ये। वाचयति-साधु वदति। वाचन्, वाचकः—द्वौ साधुवदितरि। वचनम्, वाच्यम्, वाचनीयम्-त्रयः साधुवाक्ये।

३०४. भू प्राप्तावात्मनेपदी—भू धातुर्गत्यर्थे आत्मनेपदी भवति। इनानुबन्धवत् (?, इन् णानुबन्धवत्)-इन् प्रत्ययः णकारानुबन्धवद् भवति (णकारानुबन्धकार्यं लभत इत्यर्थः)। वृद्धिरादौ सणे-धातोरादिभूतानां नामिसंज्ञकानां[1] स्वराणां वृद्धिर्भवति सणे=णानुबन्धे प्रत्यये परतः। भावयते-गच्छति। भावनम्, भावनीयम्-गतिः।

३०५. मान पूजायाम—मानयति-पूज्यो भवति ?। मान्यः-पूज्यः।

---

१. इह सूत्रे 'नामि' पदं कुतोऽनुवर्तत इति न ज्ञायते। नामिसंज्ञा अकारवर्जितानां स्वराणां भवति (द्र० 'स्वरोऽवर्णवर्जो नामी' कातन्त्र १।१।७) तथा सति पाचयतीत्यादिषु अकारस्य वृद्धिर्न प्राप्नोति।

३०६. गर्ह निन्दायाम्—गर्हयति–निन्दयति । गर्हन्, गर्हकः–द्वौ निन्दके । गर्हणम्, गर्हणीयम्–द्वौ निन्दायाम् ।

३०७. छर्दी (?, छृदी) सन्दीपे–कथने (?) । छर्दयति–उद्गिरति । छर्दकः–उद्गारकः । छर्दिः, छर्दनम्–द्वौ उद्गारे ।

३०८. दृ भये – दारयति–भापयति । दारकः–एतन्नामा शिवाचार्यः । दारुणम्–भयम् । दारुः–वृक्षः । दाराः पुंसि भूम्नि[1]–दारशब्दः पुंलिङ्गे बहुवचने प्रयुज्यते । दाराः–पत्नयः । देवदारुः–एतन्नामा वृक्षविशेषः ।

३०९. दृभ सन्दर्भे—संमिश्रणे । दर्भयति–मिश्रयति । दर्भकः–मिश्रकः । दर्भः–बर्हिः । दर्भळम्–दर्भल इत्येव (?) । दर्भणम्, दर्भणीयम्–द्वौ मिश्रणे ।

३१०. मार्ग अन्वेपणे—गवेपणे । मार्गयति–अन्वेषयति । मार्गन्, मार्गी, मार्गकः–अन्वेपकः । मार्गणम्–इषुः । मार्गः–अध्वा ।

३११. कठि शोके—दुःखे । कण्ठयति–दुःखितो भवति । कण्ठीरवः–दुःखी । कण्ठः–गलम् ।

३१२. मृजू शौचालङ्कारयोः—शोधनेऽलङ्करणे च । मार्जयति–शोधयति । मार्जन्, मार्जकः–द्वौ शोधके । मार्जनम्, मार्जनीयम्–द्वौ स्वच्छतायाम् ।

३१३. धृप प्रसहने—हसने । घर्पयति–स्मयते । घर्पन्, घर्षकः–द्वौ स्मायके । धृष्टम्, धृष्टिः, घर्पणम्, घर्पणीयम्–चत्वारः स्मयने ।

३१४. मृप तितिक्षायाम्—सहने । मर्पयति–सहते । मर्षन्, मर्षकः, मृष्टः, मृष्टवान्–चत्वारः सोढरि । मर्पणम्, मर्पणीयम्–द्वौ सहने ।

३१५. तप दाहे—तृपायाम् । तापयति–तर्पयति ; तपन्, तापकः–द्वौ तर्पके । तापः, सन्तापः–द्वौ तृपायाम् । तापिनी–नदी । आतपम्–धूपः । आतपत्रम्–छत्रम् ।

३१६. वद भापणे—कथने । वादयति–कथयति । वादयन्, वादी, वादकः–वक्ता । वादः, वादनम्, वादनीयम्–वचने । वाद्यम्–संगीतसाधनम् ।

३१७. अर्च पूजायाम्—अर्चयति–पूजयति । अर्चः, अर्चकः–द्वौ पूजके । अर्चनम्, अर्चनीयम्–द्वौ पूजने ।

---

१. एतत्सूत्रं 'दृ भये' (१।६१३) इत्यत्राप्युद्धृत्य व्याख्यायते, तत्रास्माकीना टिप्पणी द्रष्टव्या (पृष्ठ १०२, टि० १) ।

३१८. अर्द हिंसायाम्—जनान् अर्दयति = मनुष्यान् हिनस्ति जनार्दनः—कालाग्निः, रुद्रः। अर्दनम् अर्दनीयम्–द्वौ हिंसायाम्।

३१९. शुन्ध शुद्धौ—शुन्धयति–शुद्धिं करोति। शुन्धन्, शुन्धकः–द्वौ शोधके। शुन्धनम्, शुन्धनीयम्–द्वौ शोधने। शुन्धन्तां पितरः[1]–शोधकानां पूर्वजाः।[2]

३२०. वृञ् आवरणे—आच्छादने। वारयति–आवृणोति (घेरता है)। वारम्–दिनम्। वारणः-हस्ती। वरुणा–वरुणा (एतन्नाम्नी नदी?)। वार्, वारि–द्वौ जले। वारुणी–मद्यम्, वरुणपाशा।

३२१. धूञ् कम्पने—धावयति–कम्पते। धावन्, धावकः–द्वौ कम्पके। धावनम्, धावनीयम्–द्वौ कम्पने।

३२२. प्रीञ् तर्पणे—तृप्तौ। प्रापयति–तर्पयति। प्रायन्, प्रापकः–द्वौ तर्पके। प्रापः, प्रापणम्, प्रापणीयम्–त्रयस्तर्पणे। प्रायशः–आधिक्येन।

[ इति इन्विकरणश्चुरादिः समाप्तः ]

---

१. आप० श्रौत १।७।१३॥

२. कर्नाटकवृत्तिकारस्यार्थश्चिन्त्यः। शुन्धन्तामिति तत्र क्रियापदम्। तेन 'पितरः पूर्वजाः शोधयन्तु' इत्यभिप्रायोऽस्य मन्त्रस्य।

# अथ णिजन्ताः

प्रयोज्यकर्तरि णिच्—प्रयोज्ञके कर्तरि वाच्ये णिज् आगमो भवति, आख्यातप्रत्यये कृत्प्रत्यये च परतः।[1] णकारो वृद्ध्यर्थः।

वृद्धिरादौ सणे—धातोः प्रथमे नामिनि ( अकारवर्जे स्वरे ) वृद्धिर्भवति।[2]

[ भू— ] भावयति–कारयति । भावयन्, भावयिता, भावकः–त्रयः कारयितरि। भावितम्–[ पुटादिना ] घटितं वस्तु ( विभिन्न द्रव्यों से पुट देकर बनाई गई ओषधि )। भावनम्, भावनीयम् (?), भावः–सत्ता। भावी–भविष्यत्काले भवः, भाविनी–भविष्यत्काले भवा। भावुकम्–उत्कृष्टम् ( ? )। भाव्यम्, भावनीयम्–घटितुं योग्यम्।

[ कृञ्— ] कारयति–क्रियार्थं प्रेरयति। कारयन्, कारयिता–द्वौ क्रियार्थ-प्रेरके। कारणम्, कारकम्–कारयिता। कारणीयम्, कारकम्–कारयितुं योग्यम्। कारितम्–प्रेरणया कृतम्। कारी–कारकः। कारिणी–कारिका। कारयित्री–कारिका।

[पच्— ] पाचयति–पाकक्रियां कारयति। पाचयन्, पाचयिता, पाचकः–त्रयः पाचयितरि। पाचिनी, पाचकी ( ? ), पाचयित्री–त्रयः पाककारयित्र्याम्।

इत्यादयो [ प्रयोज्य ] कर्तरि ज्ञेयाः।

नाम्न उपमानादाचारे आयङीयौ—उपमानवाचकात् नाम्नः आयङ् ईय[3] आगमौ भवतः, आख्यातप्रत्यये परतः, आचरणेऽर्थे। ङकार आत्मनेपदार्थः। [ यथा— ]

वृषभः शिवायते–वृषभः शिव इवाचरति। शिवो वृषभायते–शिवो वृषभ इवाचरति।

---

१. पाणिनीयास्तु णिच् प्रत्ययं विदधति। ततः तिङ्-प्रत्ययाः कृत्प्रत्ययाश्चोत्पद्यन्ते।

२. सूत्रमिदं पूर्वत्राप्युद्धृतम् ( पृष्ठ २१९ ) तत्रास्मदीया टिप्पणी द्रष्टव्या।

३. कर्नाटकवृत्तौ 'ईया' इति रूपम्, तच्चिन्त्यम्।

[ आयङः— ] भागवाटीवृषेन्द्राय मेरुः क्रीडाचलायते ।
कूपायते देवगङ्गा चरायन्ते शिवा भृशम् ॥

[1]भागवाटी वृषभाय मेरुः क्रीडापर्वत इवाचरति, देवनदी कूप इवाचरति । रुद्रा चरा जङ्गमा इवाचरन्ते भृशं निश्चयेन ।

[ ईयस्य— ] कल्याणपत्तनावासा वृषभीयन्ति लिङ्गिनः ।
शङ्करा अल्लमीयन्ति कैलासीयति तत्पुरम् ॥

[1]कल्याणपत्तने येषां वासस्ते लिङ्गिनो वृषभ इवाचरन्ति । शङ्करा अल्लमप्रभुरिवाचरन्ति । तत् कल्याणपुरं कैलास इवाचरति ।

आयङ्ईययोर्लुक्—आयङ्-ईय-प्रत्यययोर्लोपो भवति नाम्नः परस्य आख्याते प्रत्यये । [ यथा— ]

कुलिशं कुसुमति दहनस्तुहिनति वारान्निधिर्ध्रुवं स्थलति ।
शत्रुर्मित्रति विषमप्यमृतति शिवशिवेति प्रलपतो भक्त्या ॥

भक्तिपूर्वक शिव-शिव-इति जपतो मानवस्य वज्रं ( विद्युत् ) पुष्प इवाचरति, अग्निर्हिम इवाचरति, समुद्रः पृथिवीव निश्चयेनाचरति, शत्रुर्मित्रम् इवाचरति, विषं च अमृतं क्षीरमिवाचरति ।

अकर्मकेभ्यो धातुभ्यो भावे कर्मणि यङ् स्मृतः—कर्मरहितेभ्यो धातुभ्यो भावे [ सकर्मकेभ्यः ] कर्मणि च वाच्ये यङ् आगमो भवति, आख्याते प्रत्यये परतः । ङकार आत्मनेपदार्थः । [ यथा— ]

भूयते प्रभुणा भक्तो भक्तेन स्तूयते प्रभुः ।
उभाभ्यां तृप्यते वस्तु पट्स्थल[2] ब्रह्म शाश्वतम् ॥

प्रभुणा अल्लमनाम्ना भक्तः बसवेश्वरः भूयते । भक्तेन प्रभुः स्तूयते । उभाभ्यां भगवद्-भक्ताभ्यां शाश्वतं निरञ्जनं ब्रह्म सर्वान्तर्यामि तृप्यते ।

अस्त्यल्लमो वृषस्वान्ते पूजयत्यल्लमं वृषा ।
वृषभं याचते भिक्षां भुङ्क्ते दत्तां गुह्येश्वरः ॥

---

१. कर्नाटकवृत्तेर्हिन्दीभाषानुवादोऽत्रास्पष्टः । अस्माभिर्यथाप्रकरणं व्याख्या विहिता ।
२. द्रष्टव्याऽत्र चन्नवीर कविकृत टीकायाः पुष्पिका ( अधस्तादियं मुद्रिता ) ।

तनुर्मनो धनं भक्त्या दीयते वृषभेण वै ।
भुज्यते प्रभुलिङ्गेण पुनर्भवनिवृत्तये[१] ॥
इति इन् - विकरणश्चुरादिः समाप्तः ॥

इति श्रीगौरीलालाचार्याद् यमुनादेव्यां लब्धजनुषा श्रीपदवाक्य-प्रमाणज्ञपण्डितब्रह्मदत्तान्तेवासिना युधिष्ठिरमीमांसकेन कृतं काश-कृत्स्नधातुपाठस्य चन्नवीरकविकृतकर्नाटकटीकायाः[२] संस्कृतरूपान्तरं समाप्तिमगात् ।

---

१. चन्नवीर कवि कृता इमे श्लोकाः ।
२. चन्नवीर कविकृत कर्नाटक टीकाया अन्ते इयं पुष्पिका दृश्यते—

इति श्री यागण्टिशरमल्लिङ्गप्रसादिनस्तिचिरयजुश्शाखाध्ययनस्य वामदेव-मुखोद्भूतस्य गजकर्णपुत्रस्य अत्रिगोत्रस्य वीरमाहेश्वरतन्त्रसूत्रस्य शिवलिङ्ग-मञ्चनपण्डिताराध्यप्रवरस्य कोकिलाकुण्डपुरस्य महामटस्य सङ्गनगुरुलिङ्गनन्द-चम्बाकुमारस्य तुमुपूरमहामटकन्थाचार्यपितृव्यनम्व्यणगुरुकरजातस्य सह्याद्रि-कटकवेळदिनगरसमीपस्य षट्देशस्य कुन्तिकापुरस्य काशीकाण्डचन्नवीर-कविकृतौ काशकृत्स्नशब्दकलापस्य द्वादशसहस्रधातुपाठस्य कर्नाटकटीकायाम् इन् विकरणश्चुरादिः समाप्तम् ।

मङ्गलम्
महा श्री केलदि वीरेश्वराय नमः
शुभमस्तु शोभनमस्तु
निर्विघ्नमस्तु
आयुरारोग्यैश्वर्यमस्तु श्री गुरवे नमः

# काशकृत्स्नीय-धातुनां वर्णानुक्रम-सूची

संकेत:—अस्यां धातुसूच्यामधोलिखिताः संकेता ज्ञेयाः—

१—इह धातुसूच्यां प्रतिधातु गणसंख्या सूत्रसंख्या च निर्दिश्यते।

२—काशकृत्स्नीये धातुपाठे जुहोत्यादयो धातवोऽदादिगण एव पठ्यन्ते। तेनात्र नव गणा एव सन्ति। तथाहि—

| | | |
|---|---|---|
| १—भ्वादयः | ४—स्वादयः | ७—तनादयः |
| २—अदादयः | ५—तुदादयः | ८—क्र्यादयः |
| ३—दिवादयः | ६—रुधादयः | ९—चुरादयः |

३—येषां धातूनामादितोऽनुबन्धा धातुपाठे निर्दिष्टास्तेषामिह सूच्यां सानुबन्धो निरनुबन्धश्चोभयथा पाठो निर्दिष्टः। यथा—ञि मिदा इत्यस्य सानुबन्धो ञिमिदा, निरनुबन्धो मिदा इत्येवमुभयथा सन्निवेशः कृतः। एवं डुकृञ इत्यस्य सानुबन्धः डुकृञ्, निरनुबन्धश्च कृञ् इति। एवं सर्वत्राप्यनुबन्धानां द्विधा पाठो ज्ञेयः।

४—अत्र केषांचिद्धातूनामग्रे * चिह्नम्, अपरेषामग्रे † चिह्नम्, अन्येषामग्रे च + चिह्नं निर्दिष्टम्। तेषामयमभिप्रायो ज्ञेयः—

(क) येषां धातूनामग्रे * चिह्नं वर्तते तेषां स्वरूपं सन्दिग्धं वर्तते। ते कर्नाटकटीकानुसारमेव तत्र तत्र पठितः।

(ख) येषां धातूनामग्रे † चिह्नं वर्तते तेऽस्माभिः (तत्रैव सूत्रे) संशोध्य पठिताः।

(ग) येषां धातूनामग्रे + चिह्नं वर्तते तेऽस्माभिष्टिप्पण्यां निर्दिष्टाः।

५—इह धातु पाठे केषुचिद्धातुषु ळकारोऽपि प्रयुज्यते। यतः स ऋग्वेदे डकार स्थाने प्रयुज्यतेऽतोऽत्र ळ-वर्णं डकारानन्तरमेव निर्दिष्टः।

| धातुः | गणः | सूत्रसं० | धातुः | गणः | सूत्रसं० | धातुः | गणः | सूत्रसं० |
|---|---|---|---|---|---|---|---|---|
| अ | | | अक्ष | १ | ५१५ | अघ | १ | ४१३ |
| अंश | ९ | २४६ | अक्षु | १ | २७३ | " | ९ | २६६ |
| अक | १ | ६०५ | अख | १ | ३८ | अघि | १ | ४१३ |
| अकि | १ | ४०७ | अग | १ | ४१० | अङ्क | ९ | २५५ |
| अक्क | १ | २२६ | अगि † | १ | ३८ | अज | १ | ६५ |

| धातुः | गणः | सूत्रसं० | धातुः | गणः | सूत्रसं० | धातुः | गणः | सूत्रसं० |
|---|---|---|---|---|---|---|---|---|
| अज | १ | ६०५ | अभि | १ | ३६० | अशूङ् | ४ | २२ |
| अछ | १ | ३५५ | " | १ | ४७० | अष | १ | ६६३ |
| अञ्चु | १ | ४८ | अभ्र | १ | २५६ | अस | १ | ६६३ |
| " | १ | ६६२ | अम | १ | २२४ | " | २ | २८ |
| " | ९ | १७९ | " | ९ | १५५ | असु | ३ | ४८ |
| अञ्जू | ६ | १७ | अमि | १ | ६२४ | अस्त | ९ | ४६ |
| अट | १ | ११३ | अम्म | १ | २२४ | अह | १ | ३१६ |
| अट्ट | १ | १२६ | अय | १ | ४८५ | अहि | १ | ३१९ |
| " | ९ | २७ | अर्क | १ | ४१० | " | १ | ५४२ |
| अड | १ | १६० | " | ९ | ८३ | आ | | |
| अड्डि | १ | १३० | अर्च | १ | ५१ | आ-क्रन्द | ९ | १६४ |
| " | १ | ४३५ | " | ९ | ३१७ | आङ्-शसि | १ | ५३८ |
| अट्टु | १ | १५७ | अर्ज | १ | ६६ | आछि | १ | ५५ |
| अण | १ | २०६ | " | ९ | १६१ | आपृ | ९ | ३०१ |
| अत | १ | ३ | अर्थ | ९ | २३६ | आप्लृञ् | ४ | १४ |
| अति | १ | ८ | अर्द | १ | १८ | आ-षद | ९ | २९८ |
| " | १ | ४३० | " | ९ | ३१८ | आसु | २ | ४४ |
| अत्रि | ९ | ५ | अर्व | १ | २०४ | आ-स्वद | ९ | १९२ |
| अद | २ | १ | अर्ह | १ | ३२३ | इ | | |
| अदि | १ | ८ | अर्हं | ९ | १६८ | इ | १ | ११३ |
| " | १ | ४३० | अल+ | १ | २४७ | इक् | २ | १२ |
| अन | २ | ३३ | अलञ् | १ | ६८९ | इक्ष | १ | ५२१ |
| " | ३ | ११२ | अलर्क | १ | ४१० | इखि | १ | ३८ |
| अनु | ७ | १८ | अल्ल+ | १ | २२६ | इगि | १ | ३८ |
| अन्ध | ९ | २०३ | " | १ | २४७ | इघि | १ | ४१ |
| अप | १ | २२७ | अव | १ | २७१ | इङ् | २ | ५४ |
| अप्प | १ | २२७ | " | ९ | १७७ | इज | १ | ४२५ |
| अबि | १ | २०५ | अव्य | १ | २२६ | इट | १ | ११३ |
| " | १ | ४६३ | अव्व | १ | २२६ | इड | १ | २१५ |
| अब्ब | १ | २२८ | अश | ८ | ४२ | इडि | १ | १८३ |

| धातुः | गणः | सूत्रसं० | धातुः | गण | सूत्रसं० | धातुः | गणः | सूत्रसं० |
|---|---|---|---|---|---|---|---|---|
| इण् | २ | १३ | ईह | १ | ५४० | ऊन+ | १ | २१९ |
| इण | १ | २०६ | | उ | | ऊन | ९ | २२५ |
| इदि | १ | ९ | उ | १ | ३३६ | ऊयी | १ | ४८७ |
| इन्+ | १ | २१९ | उक्ष | १ | २९५ | ऊर्ज | ९ | २३ |
| इन्वी | ६ | २३ | " | १ | ५२४ | ऊष | १ | २९० |
| इरण् | १ | २०६ | उख | १ | ३८ | ऊष+ | १ | २९९ |
| इल | १ | २४७ | उङ् | १ | ५५१ | ऊह | १ | ५४७ |
| " | ५ | ७४ | उच | ३ | ६१ | | ऋ | |
| " | ९ | १०१ | उछि | १ | ६२ | ऋ | १ | ३५० |
| इल्ल | १ | २४७ | " | ५ | ७६ | " | १ | ३५१ |
| इवि | १ | २७२ | उछी | १ | ६३ | " | २ | ७२ |
| इष | १ | २९१ | " | ५ | २३ | ऋक्ष | १ | ५१३ |
| " | ३ | १६ | उछृदिर् | ६ | ८ | ऋङ् | १ | ५५१ |
| " | ८ | ४४ | उज्झ | ५ | २८ | ऋच | ५ | २६ |
| इषु | ५ | ७१ | उट | १ | ११३ | ऋच्छ | १ | ३५५ |
| | ई | | उडि | १ | १८३ | ऋछ | ५ | २० |
| ईक्ष | १ | ५२६ | उतृदिर् | ६ | ९ | ऋज | १ | ४२५ |
| ईङ् | ३ | ९० | उद्ध्रस | ९ | १८३ | ऋजि | १ | ४२६ |
| ईजी | १ | ४२५ | उध्रसु | ८ | ४३ | ऋणु | ७ | ७ |
| ईट | १ | ११३ | उन* | १ | २१९ | ऋधु+ | ३ | ७७ |
| ईड | १ | २११ | उन्दी | ६ | १६ | ऋफ* | १ | २०१ |
| " | २ | ४१ | उब्ज | ५ | २७ | ऋफ | ५ | ३२ |
| " | ९ | ८३ | उभ | ५ | ३६ | ऋक्षुक्ष | १ | ५१८ |
| ईळ | २ | ४१ | उम्भ | ५ | ३६ | ऋम्फ* | १ | २०१ |
| ईर | २ | ४० | उर्ज | १ | ४२५ | ऋम्फ | ५ | ३२ |
| " | ९ | २८५ | उर्णुञ् | २ | ६२ | ऋषी | ५ | १५ |
| ईर्ष्य | १ | २२९ | उर्द | १ | ३८९ | ऋट | ८ | २४ |
| ईर्ष्या | १ | ५२७ | उर्वी | १ | २६१ | ॠङ् | १ | ५५१ |
| ईश | २ | ४२ | उष | १ | २९० | | ऌ | |
| ईशुचिर् | ३ | ११७ | | ऊ | | ऌङ् | १ | ५५१ |
| ईष | १ | २९१ | ऊङ् | १ | ५५१ | ॡङ् | १ | ५५१ |

